# सूचीपत्रम्

जैमिनिं सूत्रकारञ्च शाबरं भाष्यकृत्तमम् ।
कुमारिलं भट्टपादं प्रणतोऽस्मि प्रभाकरम् ॥

# प्रास्ताविकम्

मंद्रपुरी-प्रान्तीय-कलाशालायाम्, मद्रासविश्वविद्यालयसंस्कृतविभागे च माकिं त्रिंशद्वर्षेभ्यो यावत् स्नातकोत्तर विद्यार्थिनां Doctoral, विद्यावारिधि वाचस्पति-छात्राणां सफलमध्यापनकार्यं कृत्वा वयःकारणात् सेवानिरतस्य स्नातकोत्तर-विद्यार्थिनां शोध-अनुसंधानविद्यार्थिनाञ्च मनोविज्ञानतत्त्वज्ञस्य च मम तेषां आवश्यकतापूर्त्यै जिज्ञासोपशमाय च दर्शनसम्बद्धविषयान् सिद्धान्तांश्च क्रोडीकृत्य सविचारं ग्रन्थलेखने मतिरुदभवत्। मत्यानया प्रेरितेन मया (१) अद्वैतवेदान्तसाहित्येतिहासः (२) दर्शनमञ्जरी-प्रथमभाग इति ग्रन्थद्वयं सविमर्शं सुविस्तृतञ्च सेवाकाले मद्रपुरीविश्वविद्यालयद्वारा प्रकाशितम्। तयोः प्रथमे अद्वैतसिद्धान्ताः ग्रन्थसम्पदा सह विचारिताः। द्वितीये न्याय-वैशेषिकदर्शनसम्बद्धाः सर्वे सिद्धान्ताः निरूपिताः। ग्रन्थद्वयस्यास्य विद्वत्सु विमर्शक संस्थासु शोध-अनुसन्धानसमितिषु पण्डितेषु पत्रिकासु छात्रसमाजे च प्रशस्तिम्, उपयोगिताम्, उपकारिताम्, साफल्यञ्च दृष्ट्वा एवमेव मीमांसादर्शनसिद्धान्तप्रतिपादकस्य कस्यचित् ग्रन्थस्य लेखने मतिरुदभवत्। तादृशं मदीयमभिलाषं सफलं कर्तुं भारतीयदार्शनिकानुसन्धानपरिषदे मदीयां प्रार्थनां प्रेषितवानासम्। मदीयां प्रार्थनां स्वीकृत्य भारतीयदार्शनिकनुसन्धानपरिषदा (ICPR) मीमांसाविषयकग्रन्थलेखनाय वर्षद्वयम् अवधिं कृत्वा अहं परिषदः पण्डितत्वेन नियुक्त अभवम्, वर्षद्वयस्य परिश्रमफलभूतेयं मीमांसादर्शनसमीक्षापरनाम्नी मीमांसामञ्जरी इदानीं विद्वत्समाजस्य सेवायामुप-स्थापिताऽस्ति, मञ्जरीयं नवभिः कुसुमाख्यैः परिच्छेदैः पूर्णा भवति।

ग्रन्थेऽस्मिन् मीमांसाशास्त्रसम्बद्धाः सर्वे विषयाः मौलिकास्सिद्धान्ताः, सिद्धान्त-भेदाः, लौकिकानि प्रमाणानि प्रत्यक्षादीनि, शास्त्रैकगम्यानि अलौकिकानि श्रुत्यादीनि,

धर्मबोधक-धर्मभेदकप्रमाणानि, विध्यर्थाः विधिभेदाः, स्मृत्याचारप्रामाण्यम्, धर्माङ्गत्व-बोधकप्रमाणानि, क्रमबोधकप्रमाणानि, अर्थवाद-अपूर्व-अतिदेश-ऊह-बाधाख्याः, द्वादशलक्षण्युत्तर षट्कविषयाः, द्वादशाध्यायसारार्थाः सर्वेऽपि संक्षिप्य सलक्षणं सोदाहरणं विशदमवर्ण्यन्त। मीमांसादर्शनाभिमताः द्रव्यादिप्रमेयाश्च सलक्षणाः उपपादिताः। मीमांसादर्शने देवतानाम् ईश्वरस्य च स्थानं सुविस्तरं वर्णितम्। भाट्ट प्रभाकर मुरारि प्रस्थानभेदः भेदकारणानि तत्तत्प्रस्थानविशिष्टविषयाश्च वर्ण्यन्ते स्म।

मीमांसासूत्रादारभ्य विंशतिशतकपर्यन्तम् आरचितानां सर्वेषां मीमांसादर्शनग्रन्थानां संस्कृतभाषामयानां वर्णनम्, प्रतिग्रन्थं वर्ण्य विषय प्रदर्शनम् व्याख्यान व्याख्येय ग्रन्थानां वर्णनम्, ग्रन्थकर्तृणां कालनिदर्शनम् च आधुनिकविचारपद्धत्यां प्रतिपादितम्। सर्वथा मीमांसादर्शनजिज्ञासूनां सारग्रहणाय उत्तम उपयोगी चायं ग्रन्थंः। विशेषतः शोधच्छात्राणां स्नातकोत्तरच्छात्राणां, विदुषाञ्चातीवोपयोगी ग्रन्थोऽयमिति मम मनीषा। यदि छात्राः विद्वांसश्च ग्रन्थेनानेन कमपि लाभं प्राप्स्यन्ति तर्हि मदीयः परिश्रमस्सफलो भवितेति मम विश्वासः। एतादृश-साहित्य-दार्शनिकसाहित्य-सेवाकरणाय मां प्रोत्साहितवत्यै भारतीयदार्शनिकानुसन्धानपरिषदे (ICPR) तदधिकृतेभ्यश्च मदीयां कृतज्ञतामधमर्णतां धन्यताञ्च समर्पये—

इत्थम्<br>
विद्वत्प्रेमी<br>
र. तङ्गस्वामिशर्मा

# पत्रसंख्यानुसारिणी विषयानुक्रमणिका

# दार्शनिकी भूमिका

शान्तचित्ता: जितेन्द्रिया: दिव्यचक्षुष: प्राचीना: भारतीया: निखिलं पदार्थजातं करतलामलकवत्-प्रत्यक्षीकुर्वाणा: विचारविवेकशीलाश्च भूत्वा मानवसमुदायस्य श्रेयसे कल्याणकामनया च यानि तत्वानि यांश्च सिद्धान्तान् बुद्धियुक्तिसहितान् ज्ञानप्राप्ति-साधनभूतान् आविर्भावयामासु: ते तत्प्रतिपादकग्रन्थाश्च दर्शनशब्देन व्यवह्रियन्ते। दर्शनानां मुख्यं प्रयोजनन्तु वैयक्तिकव्यवस्थासम्पादनद्वारा समाजव्यवस्थापरिपालनम्, तदर्थं कुटुम्ब-व्यवस्थापरिरक्षणम्, तद्वारा धर्मार्थकाममोक्षारव्यपूरूषार्थप्राप्तिरिति बुद्धिमतां संस्कृतचित्तानां भारतीयानां विश्वास:। बृहदारण्यकोपनिषदि (३-४७) जातमात्रस्य पुरुषस्य पुत्रैषणा वित्तैषणा लोकैषणेति एषणात्रयं भवति इत्युक्तम्। तत्राद्ये साधनीभूते अन्त्या च फलीभूता भवति। मानवानां प्रवृत्ते: फलं कुटुम्बपरिरक्षणं साधनीभूतैषणाद्वयेऽ-न्तर्भूतम्। तन्मूलकञ्च समाजस्वास्थ्यं लोकैषणायामन्तर्भूतम्। एतदेव प्रयोजनमूरीकृत्य मान्यैर्मन्वादिभि: पूर्वतनैस्स्मृतिकारैशास्त्रकारैश्च समाजव्यवस्थार्थं नियमा: कृता:। तत्सिद्ध्यर्थं कुटुम्बपरिपालने नियमा अपि विहिता:। एतेषां परिपालने समाजव्यवस्थां परिपलयन्तस्ते च ऋषय: ऋषिप्रवराश्च तन्नियमान् धर्मशास्त्रत्वेन व्याहरन्। तदाचरणं धर्मोत्पत्ते: कारणमित्यवदन्। तेषु कामन्दक्यादिनीतिशास्त्रं अर्थप्रधानमर्थोत्पत्तिप्रधान-फलकम्। वात्स्यायनीयकामशास्त्रम् अनिन्दितकामप्रधानं सुखमय जीवन प्रधानफलकम्। जैमिन्यादिप्रणीतं मीमांसादिदर्शनमर्थकामयोराधारभूतं धर्मकर्मब्रह्मस्वरूपविशेष-विचारफलमिति मानवजीवनस्य दर्शनानि अत्यन्तमुपकारकाणि भवन्ति।

तच्च दर्शनं वैदिकावैदिकभेदेन द्विविधम्। वैदिकमपि तर्कसांख्यतन्त्रभेदेन त्रिविधम्। तर्कोऽपि वैशेषिक नैयायिकभेदेन द्विविध:। तन्त्रं मीमांसा। सा च शब्दार्थमेदेन द्विविधा। व्याकरणमहाभष्यादिरूपा शब्दमीमांसा। वेदवाक्यार्थविचाररूपा तु अर्थमीमांसा। सापि द्विविधा। कर्मकाण्डार्थविचाररूपा पूर्वमीमांसा। ज्ञानकाण्डार्थविचाररूपा तु उत्तरमीमांसा। पूर्वमामांसापि भाट्ट प्राभाकर भेदेन द्विरूपा द्वादशलक्षणी। देवताया: विग्रहवत्वाविग्रह-

वत्वादिविचाररूपा आष्टलक्षणी पूर्वमीमांसायामेवान्तर्भूता। चतुर्लक्षणी तु उत्तरमीमांसा। सांख्यमपि सेश्वर निरीश्वरभेदेन द्विविधम्। तत्र सेश्वरं योगशास्त्रम्। निरीश्वरं प्रकृतिपुरूष तद्विवेकप्रतिपादनरूपम्।

अवैदिकं बौद्धार्हतचार्वाकभेदेन त्रिविधम्। बौद्धं तु माध्यमिक योगाचार सौत्रान्तिक वैभाषिक भेदेन चतुर्विधम्। वैभाषिकाः प्रत्यक्षसिद्धबाह्यपदार्थवादिनः। सौत्रान्तिका अनुमेय पदार्थवादिनः। योगाचारास्तु क्षणिकविज्ञानवादिन आरोपित बाह्यपदार्थवा-दिनः। एते त्रयोऽपि सर्वक्षणिकविज्ञानवादिन एव। माध्यमिकास्तु सर्वं कल्पितम्, परन्तु तत्त्वतः शून्यपदार्थवादिनः। चार्वाकास्तु भूतचतुष्टयात्मवादिनः देहात्मवादिनः जैनास्तु सर्वज्ञ अनैकान्तिकम् इति देहातिरिक्त देहपरिमणात्मनवादिनः सदसद्रूपमिति सिद्धान्तवादिनश्च।

दर्शनम्

वैदिकम् अवैदिकम्

तर्क तन्त्र सांख्य चार्वाक जैन बौद्ध

वैशेषिक नैयायिक देहात्म-वाद इन्द्रियात्म-वाद

शब्द अर्थ दिगम्बर श्वेताम्बर

व्याकरण महायान हीनयान

पूर्वमीमांसा उत्तरमींमासा सौत्रान्तिक योगा-चार माध्य-मिक

(कर्म) (ज्ञान)

प्राभाकर भाट्ट वैभाषिक

शैव अद्वैत विशिष्टाद्वैत द्वैत शुद्धाद्वैत

चिदचिद्वि-शिष्टाद्वैत शक्तिविशिष्ट-शिवाद्वैत

निम्बार्क वल्लभ रामानन्द

काश्मीरशैव (प्रत्यभिज्ञा) शिवाद्वैत वीरशैव शैवसिद्धान्त

# प्रथमं कुसुमम्

## दर्शनेषु पूर्वमीमांसायास्स्थानम्

वैदिकेषु कर्मसु विश्वासाय निश्चितप्रवृत्तये च अपौरुषेयाणां मन्त्रब्राह्मणात्मकानां वेदानां व्याख्यानस्यावश्यकताभूत्। तदर्थं निश्चित प्रक्रियाया अवधारणमपेक्षितम्। नोचेत् स्वीयस्य कर्तव्यस्य पालनाय तत्परायणानां मानवानां हिताहित परिज्ञानं धर्माधर्मपरिज्ञानं वा न भवेत्। प्रवर्तकं निवर्तकं वा वेदवाक्यं विषयवैचित्र्येण विस्तृतम्। अतएव अपेक्षमाणं व्याख्यानं प्रणिधानेन अवधेयं भवति। व्याख्यया विना अत्र भ्रान्तिरपि भवितुमर्हतीति तदीयव्याख्याप्रतिपादकं मीमांसाशास्त्रमवातरत्। एतस्माद्धि शास्त्रात् न केवलं वैदिकं कर्मकाण्डम् अपितु ज्ञानकाण्डमुपनिषदाद्यपि ज्ञातुमवगन्तुञ्च शक्यम्। शाङ्करभाष्यादिप्रतिपाद्यस्य भारतीयवेदान्तविद्यायाश्चरमोत्कृष्टस्य ब्रह्मणोऽपि विवेचनं मीमांसाशास्त्रप्रक्रिययैव सञ्जायते। मीमांसाशास्त्रमेव वेदे कथं व्यवहर्तव्यमित्यस्य मार्गं प्रतिपादयति। अतएव " धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यतामार्गं मीमांसा पूरयिष्यति" इति श्रूयते। "शिक्षा व्याकरणं छन्दः निरुक्तं ज्यौतिषं तथा। कल्पश्चेति षडङ्गानि" इति श्रवणात् मीमांसाशास्त्रं वेदस्य नाङ्गम्, परन्तु उपाङ्गमिति कश्चन संशयो भवति। तथापि मीमांसा अङ्गमित्येवास्माकं निश्चयः। भवतु नाम। इदमत्र विचारयामः। योऽयमङ्गमुपाङ्गमिति विभागस्स्वीक्रियते स किम्मूलकः? आपातत एवं प्रतीयात्- वेदस्य स्वरूपपरिज्ञाने तदर्थप्रमितौ वा साक्षाद् यदुपकरोति तदङ्गमिति, अङ्गानां तात्पर्यनिर्णयाय यदुपकरोति तदुपाङ्गमिति वक्तव्यम्। अथवा वैदिक वर्णपदवृत्तपरिच्छेद पराणि शीक्षा व्याकरणछन्दश्शास्त्राणि, पदार्थतद्विशेषप्रयोगव्युत्पादन-पराणि निरुक्त-ज्यौतिषकल्पसूत्राणि इत्यमूनि अङ्गानीति, एवमेतस्मिन्नुभयस्मिन्नपि साक्षात्प्रयोजने उदासीनं सत् यत् तात्पर्यगत्या वेदार्थोपवृंहणाय प्रवृत्तं पुराणादिकमुपाङ्गमिति वक्तव्यम्। तथापि वेदानां पदार्थज्ञाने वेदप्रतिपादितानामर्थानां स्वातन्त्र्येण प्रतिपादने वा तेषामङ्गो-पाङ्गत्वसम्भवेऽपि सर्वेष्वपि एतेषु अङ्गोपाङ्गेषु वैदिकपदतर्थप्रतिपादनेनोपरतेषु

शङ्काकलङ्कसंकुले वेदवाक्यार्थे मीमांसा स्वयं तत्र प्रवर्तमाना अपाकृत्य सन्देह सन्दोहमशेषमर्थमतिविशदं अवभासयति-तथाहि-"अग्निहोत्रं जुहोतीति" इति वाक्य-मुत्पत्तिविधिपरम्, "दध्ना जुहोतीति" गुणविधिपरम्, "उद्‌मिदा यजेत पशुकाम" इति कर्मविधिपरमिति निर्णयः मीमांसाशास्त्रेणैव भवतीति निश्चयः। अन्यदर्शनानां प्रक्रियाभि-नैतन्निर्णेतुं शक्यम्। वेदेन प्रमापयितव्ये धर्मे न पुराणं, न धर्मशास्त्रं, न न्यायविस्तरो वा अल्पिष्ठयापि मात्रया उपयोगं लभते। फलत इतिकर्तव्यतानिर्णयः मीमांसाशास्त्रेणैव भवतीति नितरामुपयोगि मीमांसाशास्त्रम्। पदविग्रहादिज्ञाने प्रकृतिप्रत्ययादिबोधः भवतु नाम शास्त्रान्तरेभ्यः, परन्तु शास्त्रेषु एकवाक्यतासम्पादकन्तु मीमांसाशास्त्रं भवतीति महान् विशेषः परिलक्ष्यते। तस्मात्, नापि केवलमुपाङ्गेभ्य एव अपितु अङ्गेभ्योऽपि सर्वेभ्योऽभ्यर्हिततरं स्थानं मीमांसा अर्हतीति शास्त्रपरिशीलकनामाशयः। अत एव **न्यायवार्तिकतात्पर्य परिशुद्धौ** मीमांसायाः वेदादभेदःदृष्टान्तमुखेन निर्दिष्टः भाष्यस्य तद्विववरणरूपस्य च शास्त्रशरीररूपतया न शास्त्राधिक्यं मन्वते मीमांसाया इव वेदात् (पत्र ११)। "विधिविधेय स्तर्कश्च वेद" इति मन्त्रब्राह्मण मीमांसानां वेदत्वमिति **व्याकरणाधिकरणे कुमरिलभट्टश्च।** ततश्च दर्शनेषु मीमांसायास्स्थानम्, अङ्गोपाङ्गभावमतिलङ्घ्य सर्वोत्कृष्टं भवति।

**मीमांसायाः प्राचीनता**

याज्ञिकानाम् अनुष्ठानेषु मीमांसा बहोःकालात् पूर्वमेव प्रवृत्ता दृश्यते। अग्निष्टो-मगतदीक्षणीयेष्टौ अग्नाविष्णुदेवताक एकादशकपालः पुरोडाश उक्तः। तस्य अग्निश्च विष्णुश्चेति द्वौ देवौ। तत्रेयमाशङ्का-यदेकादशकपालःपुरोडाशः, द्वावग्नाविष्णू, अनयोः का क्लृप्तिः? को वा विभागः? इति। तत्र अष्टाकपालः आग्नेयः, त्रिकपालो वैष्णव इति। कथमष्टाकपालमाग्नेयस्य इत्याकाङ्क्षायाम् अष्टाक्षरा वै गायत्री, गायत्रमग्नेश्च्छन्दः इति युक्तिरुदाहृता। अग्नेर्गायत्रीछन्दसश्च प्रजापतेर्मुखात् समकालमुत्पन्नत्वेन सम्बद्धत्वम्, गायत्र्याश्च प्रतिचरणमष्टाक्षरत्वात् इति आग्नेय पुरोडाशस्य अष्टाकपालत्वम्। वैष्णवस्य

त्रिकपालत्वे तु युक्तिरेवं प्रदर्शिता "त्रिर्हीदं विष्णुर्व्यक्रमत्" यस्मात्सर्वं विश्वं त्रिभिः पादक्रमैर्व्याप्तम्, तस्मात् विश्वव्यापकपाद प्रक्रमत्रित्वसम्बन्धात् विष्णोः पुरोडाशस्य त्रिकपालत्वं युक्तमिति च प्रतिपादितं ऐतरेय ब्राह्मणे (१-१-६,७)। एवं अग्नीषोमप्रणयने अध्वर्युणा अनुवचन प्रैषे दत्ते "सावीर्हि देव प्रथमाय पित्रे इति सावित्रीमन्वाह" इति विधिना होत्रा सवितृदेवताका ऋगनुवक्तव्या इत्युक्तम्। तत्रेयमाशङ्का-"तदाहुः यदग्नीषोमाभ्यां प्रणीयमानाभ्यां अनुवाचा आह अथ कस्मात् सावित्रीमन्वाह" इति। अस्यायमर्थः- अग्नीषोमप्रणयनार्थं अग्नीषोमदेवताका ऋगनुवक्तव्या, कथं सवितृदेवताका ऋग्विधीयत इति। तत्रेदं समाधानम्। "सविता वै प्रसवानामीशे तस्मात् सावित्रीमन्वाह" इति। अस्यायमर्थः-सर्वाणि कर्माणि सवितृसम्मत्यैव भवन्ति, नहि सवितृप्रकाशं विना पदात् पदमपि चलितुं कश्चित् शक्नोति। तस्मात् सर्वासां कार्यसंमतीनां सविता ईशे-ईष्टे। तस्मात् तत्संमतिप्राप्त्यर्थं प्रणयनारम्भे सवितृदेवताकैव ऋगनुवक्तव्या इति। एवं शङ्कासमाधानरूपाणि मीमांसासूचकानि बहून्युदाहरणानि ब्राह्मणग्रन्थेषु द्रष्टव्यानि विद्यन्ते। **एवमैतरेयारण्यके** ३।३।१२ "एवंह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एवमग्रावा-ध्वर्यवः, एवं महाव्रते छन्दोगाः" इति दृश्यते। ऋग्वेदिनः महति-उक्थे-शस्त्रे बृहतीसहस्त्रात्मके एवं परमात्मानं मीमांसन्ते विचारयन्ति। यजुर्वेदिनः अग्नौ अग्निचयनगमन्त्रेषु परमात्मानं मीमांसन्ते" युञ्जते मन उत युञ्जतेधियः" इत्यादिषु छन्दस्सु गानकर्तारः सामवेदिनः, महाव्रते महाव्रतगतमन्त्रेषु परमात्मानं मीमांसन्ते इति। अत्र सर्वत्र "मीमांसन्ते" इति साक्षात् मीमांसावाचकपदमेव प्रयुक्तम्। एवं **सुजाबालोप-निषदि** द्वितीयखण्डे तस्यैतस्य महतोभूतस्य......मीमांसा धर्मशास्त्राणीत्यादि वचनं दृश्यते। एवं महाभाष्ये (२।२।२९।) अथेह कस्मान्न भवति याज्ञिकश्चायं......मीमांसकश्चे" ति विद्यते। तैत्तरीयप्रातिशाख्ये (५।४।) "मीमांसकानाञ्च" इति, दर्शनात् शास्त्रविशेषपरो मीमांसाशब्दः, मीमांसाशास्त्रञ्च अतीव प्राचीनमिति ज्ञातुं पार्यते। एवं "ब्रह्म प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यादित्याय स च वसिष्ठाय सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय सोऽपि जैमिनये" इति मीमांसाशास्त्रस्य काचन परम्परा **श्लोक-**

**वार्तिकटीकायां काशिकायां** ( पत्र १।९ ) दृश्यते। जैमिनिसूत्रेषु च आत्रेय-आश्मरथ्य-ऐतिशायन-कामुकायन-कार्ष्णाजिनिलाबुकायन प्रभृतय आचार्याः निर्दिष्टा विद्यन्ते। ततश्च मीमांसादर्शनं प्रवाहनित्यं सत् तत्तत्कालीनैराचार्यैः अभिवृद्धिं प्राप्य जैमिनिपर्यन्तमनुस्यूतमासीदिति निर्णये न दोषः। तत्सिद्धं मीमांसायाः प्रचीनत्वम्।

**मीमांसापदार्थः**

शाङ्करब्रह्मसूत्रभाष्यव्याख्याभामत्याम् ( १-१-१ ) ''मीमांसाशब्दस्य पूजितविचार-वचनत्वादिति लक्ष्यते। संशयपूर्वकात् विचाराच्च निर्णयो जायते। मान पूजायां इति पूजार्थक मानधातोः माङ् माने इति धातोर्वा ''मानवधदान् इत्यादिसूत्रेण सन्प्रत्ययः ''मानेर्जिज्ञासाया'' मिति वार्तिकबलात् जिज्ञासार्थे भवति। जिज्ञासाशब्दस्य ज्ञानेच्छा-वाचकत्वेऽपि लक्षणया इच्छासाध्यविचरार्थकता वक्तव्या। यतोहि मीमांसाजिज्ञासाशब्दौ विचारार्थकावेव। ज्ञानविषयिण्यामिच्छायां सत्यां पुरुषः विषयस्य तत्त्वपर्यन्तं ज्ञातुमिच्छति। तत्त्वज्ञानन्तु साङ्गोपाङ्गविचारेणैव भवति। ततश्च मीमांसाशास्त्रस्य विचारशास्त्रत्वमपि सम्भवति। यद्यपि ''अथातो धर्मजिज्ञासा'' ''अथातो ब्रह्मजिज्ञासा'' इत्यादौ जिज्ञासाशब्दस्य प्रयोगो दृश्यते तथापि जिज्ञासामीमांसयोः पर्यायत्वात् धर्ममीमांसा कर्ममीमांसा ब्रह्म-मीमांसा इति व्यवहारोऽपि विद्यते। एवं च विचारस्य पूजितत्वञ्च तर्कोपष्टब्धत्वम्। तर्कश्च ऊहापोहरूपो न्यायरूपश्च। न्यायश्च लोकव्यवहारसिद्धा रीतिः प्रायशश्च पूर्वोत्तरपक्ष-साधिका युक्तिः। सैव तदधिकरणन्यायेन, अर्थऽधिकरणन्याय इतिन्यायशब्देन भण्यते। क्वचित् लोकरीतिश्चाश्रीयते। अतएव श्रुतिविरुद्धस्मृत्यप्रामाण्याधिकरणस्य ( १-३-११-४) अर्थः ''अश्वैरपहृतं को हि गर्दभैः प्रासुमर्हती'' ति न्यायस्य आधारभूतो अर्थ इत्युच्यते। सोऽयं पूर्वपक्षसिद्धान्तभूतः संशयपूर्वकश्च विचारः यो हि मीमांसायां प्रधानं दृश्यते सा पद्धतिः प्राचीनग्रन्थेष्वपि दृश्यते तथाहि-**तैत्तरीयब्राह्मणे** (२-१२) एवं दृश्यते। कदाचित् पलाय्य गच्छन्तं अग्रिमवरोद्धुं प्रजापतिरतिवेगेन अग्रिमन्वधावत्। अतिवेगवन्तमग्रिमवरोद्धुमशक्तः श्रान्तश्च प्रजापतिः घर्मव्याप्तोऽभूत्। क्वचिदुपविशन् सः

स्वेदजलमुत्ससर्ज। तच्च जलं घृतरूपेण प्रादुरभूत्। एतस्मिन्नन्तरे होमकालः प्राप्तः। आज्येन होमः कर्तव्यः। तदानीमन्यद्रव्यस्यालाभात् स्वेदजलेन परिणतं आज्यं होतुं प्रजापतिर्हस्ते गृहीतवान्। अपवित्रस्वेदजलजन्मत्वाच्च तस्य धृतस्य प्रजापतिस्सन्देहं प्राप्नोत् ''तद्व्यचिकित्सत्, जुहवानि मा हौषमिति। तद्विचिकित्सायै जन्म य एवं विद्वान् विचिकित्सति वसीय एव चेतयते'' यः कश्चिद्विद्वान् एवं प्रजापतिवत् विचिकित्सति संशयं प्राप्य विचारयति स वसीय एव श्रेष्ठतममेव चेतयते जानाति निर्णयं लभते। एवमत्र संशयपूर्वकविचारजन्मा निर्णय इति मीमांसास्वरूपमुक्तम्। एवं **तैत्तरीयसंहितायां** (७-५-७) गवामयनविकृतिरूपस्य उत्सर्गिणामयनस्य सम्बन्धि किञ्चिदिह परित्याज्यम्? न वेति विचारितम् ''उत्सृज्यं नोत्सृज्यमिति मीमांसन्ते ब्रह्मवादिनः.......इत्याहुरिति। अत्रापि मीमांसन्ते इति स्पष्टः शब्दःसंशयपूर्वक विचारजन्यनिर्णये प्रयुक्तः। बृहदारण्य-कोपनिषत्सु (१-५-१२) ''अथातो व्रतमीमांसा'' इत्यारम्भ अध्यत्ममिन्द्रियाणाम् इत्यादिः'' छान्दोग्ये (५-११-१) ''औपमन्यवादयो महाश्रोत्रियास्समेत्य मीमांसांश्चक्रुः को नु आत्मा किं ब्रह्मेति'' इत्यादिश्च मीमांसाशब्द प्रयोगो विचारार्थे प्रयुक्तः। **शाङ्खा-यनश्रौतसूत्रे** (१८-२४-३४) अथातो होत्राणामेव मीमांसा इत्युक्तम्। अत्र होत्रनुष्ठानविचारानन्तरं होत्रकाणामेव विचारोऽवशिष्ट इति व्याख्यानमानर्तीयभाष्ये दृश्यते। **बौधायनधर्मसूत्रे** (१-७-११) ''अथास्तमिते आदित्ये उदकं गृह्णीयात् न गृह्णीयादिति मीमांसन्ते ब्रह्मवादिन इति विद्यते। अत्र सर्वत्र पूर्वोत्तरपक्षपरिग्रहेण विचार एव मीमांसाशब्दार्थः।''शुचेरश्रद्धधानस्य श्रद्धधानस्य चाशुचेः।मीमांसयित्वोभयं देवास्सम-मन्नमकल्पयन्''। इति **बौधायनधर्मसूत्रे** (१-१०-५) गोविन्दस्वामिव्याख्यायां मीमांसयित्वा-विचार्य इति दृश्यते। तेन विचारात्मको मीमांसाशब्दः। **गौतमधर्मसूत्रे च** ''तत्र प्रायश्चित्तं कुर्यान्नकुर्यादिति मीमांसन्ते (१९।४, २।२) इति संशयमुत्पाद्य न कुर्यादित्याहुः'' इति पूर्वपक्षप्रतिज्ञामुपन्यस्य, न हि कर्मक्षीयते इत्यनेन पूर्वपक्षे युक्तिरुपन्यस्ता। ''कुर्यादित्यपरम्'' इति (७) सिद्धान्तप्रतिज्ञां उक्त्वा पुनस्तोमेनेष्ट्वा (८) इत्यादिभिस्सूत्रैः तत्साधिकाः श्रुतय उदाहृताः? तेन पूर्वोत्तरपक्षपरिग्रहेण निर्णयान्तो

विचार: मीमांसापदार्थस्स्पष्ट: परिलक्षितो भवति। सर्वथापि मानवोत्पत्तिमारभ्य मीमांसाया अप्यारम्भ इति वक्तव्यम्। न केवलं मानवा: मीमांसन्ते परन्तु पशुपक्ष्यादयस्तिर्यञ्चोऽपि भक्ष्यमिदमभक्ष्यमिदं वेति मीमांसयित्वैव भक्ष्यन्ति। वनचर चटकादय: पक्षिणोऽपि प्रसूतिकाले प्राप्ते स्थानं मीमांसयित्वा अनुकूले एव स्थाने अनुकूलरचनं कुलायं निर्मिमते इति तिर्यक्ष्वपि मीमांसा समस्त्येव। सेयं मीमांसा यथाप्रज्ञं वर्धमाना भूयसीं परिणतिं कालेन प्राप्ता। सेयं मीमांसा शास्त्रे पण्डितबुद्धिप्रकर्षाधीन वेदवाक्यार्थनिर्णायिका विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदु: अधिकरणसंज्ञया समाख्याता वाक्यार्थमीमांसाप्रवाहनिष्कर्षरूपा जैमिनिना पुनरुज्जीविता मीमांसादर्शनमिति कथ्यते। तच्च ''अथातो धर्मजिज्ञासा'' इत्यारम्भ-''यथा याज्या संप्रैषो यथा सम्प्रैष'' इत्यन्तं षोडशाध्यायात्मकम्।

मीमांसाया: न्यायशास्त्रमित्यप्यर्थान्तरं नामान्तरं वा सम्भवति। तत्र ''प्रमाणैरर्थ-परीक्षणम्,''समस्तप्रमाणव्यापारादर्थाधिगतिर्न्याय:''साधनीयस्यार्थस्य यावति शब्दसमूहे स्थिति: परिसमाप्यते स पञ्चावयववाक्यात्मक: न्याय:''परार्थानुमानात्मको वाक्यसमूहो न्याय इत्यादीनि लक्षणानि **न्यायभाष्ये न्यायवार्तिके** च दृश्यन्ते। प्राड्विवाकस्य निर्णयोऽपि न्याय एव। इयांस्तु विशेष: -यत् न्याये शरीरलाधवम्, सूत्रात्मकता च। निर्णयपत्रे तु शरीरगौरवं भाष्यात्मकता च। परन्तु न्यायनिर्णय: प्रतिज्ञादिपञ्चकम्, रीति:, प्रकार:, पद्धतिरित्यपि पर्याया एव। तथाहि **ऐतरेयब्राह्मणे** (३०।६।५) ''ता: प्रग्राहं शंसति यथा वृषाकपिम् वार्षाकपं हि वृषाकपेस्तन्न्यायमेति'' इति विद्यते। ता: नाराशंसीसंज्ञकान् मन्त्रान् प्रग्राहं पादश: प्रगृह्य प्रगृह्य शंसति ब्राह्मणाच्छंसी। यथा वृषा कपिं नाम सूक्तं पादशो विगृह्य शंसति तथा हि-यस्मात् कारणात् इदं शंसनं वार्षाकपम्-वृषाकपिसम्बद्धं कर्तव्यम्। तत् तस्मात् वृषाकपेर्नाम सूक्तस्य न्यायं-प्रकारं विगृह्य शंसनरूपं एति प्राप्नोति इति। अत्र न्यायशब्दस्य प्रकार इत्यर्थस्सायणाचार्यो कृत:। **एवमैतरेयब्राह्मणे** (३३।५।४।) ''सहोवाच शुन:शेफ अजीगर्तं पितरं य: सकृत् पापकं कुर्यात्, कुर्यादेनत् ततोऽपरम्, नापागा: शौद्रान्न्यायादसन्धेयं त्वया कृतम्'' इति दृश्यते।

अत्र सायण: शौद्रात् न्यायात् नीच जातिसम्बन्धिन: क्रूरादाचरणात् न अपागा: न अपगतो भवसि इति। ततश्चात्र न्याय: आचरणम्, रीति: पद्धतिरित्यर्थ:। वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत्'' इति **गौतमधर्मसूत्रम्** (११।९।) अत्र न्यायत इति लोकशास्त्राविरुद्धेन मार्गेण इति मस्करिभाष्यम्। अत्रैव न्यायाधिगमे तर्कोऽभ्युपाय: (२५) इत्यत्र अधिगमे- अवधारणे तर्क: अनुमानमिति मस्करिभाष्यम्। तेन प्रतिज्ञादिपञ्चावयवं परार्थानुमानं न्यायपदार्थ इति व्यक्तम्। **आपस्तम्बीयधर्म सूत्रे** (१।२२।२) आध्यात्मिकान् योगाननुतिष्ठेत् न्यायसहितान्'' इति विद्यते। अत्र न्यायसहितानिति पदस्य उपपत्तिसमन्वितानित्यर्थ:। तथा च न्याय: उपपत्ति: युक्तिरित्यर्थ:। तत्रैव (२)८।१३) अङ्गानान्तु प्रधानैरव्यपदेश'' इति न्यायवित्समय इत्युक्तम्। अत्र अङ्गानां कल्पसूत्राणां प्रधानवाचिभिश्शब्दै:- छन्द:, वेद:, ब्राह्मणम्,'' इत्यादिभि: व्यपदेशो न न्याय्य इत्ययं न्यायविदां सिद्धान्त इति व्याख्याय ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे **शाबरभाष्ये** (१-३-७) द्रष्टव्याविति दृश्यते। तेन अध्वरमीमांसाधिकरणेषु पूर्वपक्षसिद्धान्तसाधकानां बीजभूतानाञ्च युक्तीनां न्यायशब्दवाच्यता दृश्यते। तन्त्रवार्तिके (१-३-४, ८) ''तस्याश्च सर्वगामित्वं तन्नयायत्वात्प्रतीयते'' इति दृश्यते। तस्या:-शब्दशक्तेरित्यर्थ:। अत्र सुधाव्याख्या'' तस्मिन् सर्वगामित्वे न्याय: युक्ति र्यस्याश्शक्तेरस्ति सा तन्नयाया, तद्भावस्तन्न्यायत्वम् इति विद्यते। अत्र न्यायशब्दस्य युक्तिरित्यर्थ:कण्ठत उक्त:। जैमिनिसूत्रेष्वपि अनेकवारं न्यायशब्द: प्रयुक्त:। तत्र सर्वत्र युक्ति: युक्तम् योग्यमित्येवार्थ: प्रतीयते यथा ''अन्यायश्चानेकशब्दत्वम्'' (१-३-२६) इति। ततश्च रीति:, पद्धति:, प्रकार: युक्तिरित्यर्थानालम्ब्यैव मीमांसाशास्त्रस्य न्यायशास्त्रमित्यपि नामान्तरं भवति। न्यायकणिका,-न्यायमाला-न्यायामोद:-न्यायरत्नमाला-न्यायप्रकाश इत्यादीनां एतद्दर्शनविषयकाणां ग्रन्थानां नामानि एतत्तत्वं विशदयन्ति।

**तन्त्रमित्यपि** मीमांसाया नामान्तरं वक्तव्यं भवति। इतरेतराभिसम्बद्धस्यार्थस्योपदेश: तन्त्रम्-शास्त्रमिति **वात्स्यायनभाष्यम्** (१-१-२८) ततश्च अनेकार्थकतया शास्त्राणां सामान्यवाचकतया च प्रसिद्धमपि तन्त्रपदं विशेषतो मीमांसावाचकमपि दृश्यते।

"तत्सुतस्तर्कवेदान्त तन्त्र व्याकृतिचिन्तक:" इति वेङ्कटाध्वरिर्निर्दिश्यते। तत्र तन्त्रपदेन मीमांसाया: प्रयोग एव प्रसिद्ध:। तन्यते-विस्तार्यते ज्ञानमनेनेति तन्त्रमिति शब्द: तनु विस्तारे इति धातो: सर्वधातुभ्यष्ट्रन् इति औणादिकष्ट्रन् प्रत्यययोगेन निष्पन्न:। "तनोति विपुलान् अर्थान् तत्त्वमन्त्रसमन्वितान्। त्राणं च कुरुते यस्मात् तन्त्रमित्यमिधीयते" इति व्युत्पत्तिवशात् तन्त्रपदं सामान्यवाचकमपि विशेषत: मीमांसावाचकं दृश्यते। तन्त्रवार्तिकम्, तन्त्रसिद्धान्तलहरी, तन्त्ररहस्य-तन्त्ररत्नमित्यादय: ग्रन्था: इममर्थं द्रढयन्ति।

मीमांसाशास्त्रं वस्तुत: **परीक्षाशास्त्रम्।** अन्यशास्त्रमिव न अनुशासनात्मकम् इति तदीय विविच्यपदार्थानामालोचनेन अवगम्यते। तस्य निमित्तपरीष्टिरिति तृतीयं मीमांसा-सूत्रमत्र प्रमाणम्। परीष्टिरिति परीक्षणमेव भवति। यतो हीदं दर्शनं वेदवाक्यानां परीक्षणार्थमाविर्भूतम्। अतएवास्य वेदतयैव निर्देशोऽपि पारस्करगृह्यसूत्रे "विधिर्विधेय-स्तर्कश्चे" ति दृश्यते। तत्र विधिशब्देन ब्राह्मणभाग:, विधेयशब्देन मन्त्रभाग:, तर्कशब्देन मीमांसाशास्त्रञ्चाभिप्रेतानि। तर्क्यन्ते-अवधार्यन्ते विचारपूर्वकं वेदार्था अनेनेति तर्कपदव्युत्पत्ति:। "**मनुस्मृतावपि**" आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणा-नुसन्धत्ते स धर्मं वेद नेतर:।" इति। अत्रापि तर्कशब्द: मीमांसामेव बोधयति। वेदेषु प्रामाण्यं तदितरेषु सतामनभिमतेषु अप्रामाण्यं व्यवस्थापयितुं निर्धारिता उपाया: युक्तिपदव्यपदेश्या: भवन्ति। एषामुपायानां यत्र विवृतिस्तद् युक्तिशास्त्रम्। तस्माद् युक्ति: तर्क: न्यायश्चेति मीमांसाया एव वाचका:। अत एव युक्तिस्नेहप्रपूरणीत्यादिग्रन्था: दृश्यन्ते। न्यायपदस्य व्युत्पत्तिस्तु जैमिनिअक्षपाददर्शनयोरेकविधैव दृश्यते नीयते-प्राप्यते विवक्षितार्थसिद्धिरनेनेति। परमर्थे भेद: परस्परमुभयत्र भवति। मीमांसायां न्यायपदमधिकरणवाचकम्। न्यायोऽधिकरणमिति जैमिनीयन्यायमाला (७)। न्यायशास्त्रेतु परेषां प्रत्यायनाय व्यवह्रियमाणे परार्थानुमाने प्रयुज्यमान: पञ्चावयवात्मको भवति। एवं तर्कशब्दोऽपि भवति।" मीमांसासंज्ञकस्तर्क: सर्ववेदसमुद्भव:" इति **तात्पर्य टीका** (१-१-१)।

**वाक्यशास्त्रमित्यपि** मीमांसाशास्त्रमभिधीयते। यथा व्याकरणं पदशास्त्रम्, न्यायः प्रमाणशास्त्रम्, तद्वत्। प्राप्ताप्राप्तविवेकेन उद्देश्यविधेयभावं विचार्य वेदवाक्यार्थ-निर्णयोऽस्मिन् शास्त्रे क्रियते। निर्णीते वाक्यार्थे कर्तव्याकर्तव्यज्ञानं भवति। तदनया रीत्या कर्तव्यस्य धर्मस्य अकर्तव्यस्य अधर्मस्य च ज्ञानं वाक्यार्थावधारणप्रक्रियाप्रदर्शन-परेण मीमांसाशस्त्रेणैव भवति। ततश्च शास्त्रमेतत् वाक्यशास्त्रमित्यपि अभिधीयते। अतएव वाक्यार्थरत्नम् वाक्यार्थमातृका इत्यादयोऽपि ग्रन्थाः मीमांसायां लक्ष्यन्ते॥

**मीमांसाप्रयोजनम्**

वेदोपाङ्गानि पुराणन्यायमीमांसा धर्मशास्त्राणि। तत्र पुराणानि ब्राह्मादीनि अष्टादश, तावन्ति उपपुराणानि च रामायणमहाभारतसहितानि। न्यायस्तु वैशेषिको गौतमीयः कापिलो लौकिकश्च। धर्मशास्त्रं मन्वादयस्स्मृतश्च। मीमांसा विंशत्यध्यायात्मिका पूर्वोत्तरत्वेन द्वेधा विभक्ता षोडशलक्षणी चतुर्लक्षणीचेति। तत्र मीमांसा वाक्यशास्त्रत्वात् पदशास्त्रवत् प्रमाणशास्त्रवच्च सर्वोपकारिणी। सर्वोऽपि वाग्व्यवहार उच्चारणरूपो लेखरूपश्च वाक्यात्मक एव। वाक्यार्थश्च उद्देश्यविधेयभावादिविचारं विना न ज्ञातुं पार्यते, वाक्यार्थनिर्णयश्च विना मीमांसां न सिध्यति, ततश्च निर्णीत वाक्यार्थज्ञानाय वेदानुसारिणां मीमांसैवोपयुज्यते। न केवलं वेदानुसारिणाम्, किन्तु तदितरेषामपि शब्दान्तरेण प्रकारान्तरेण वा वाक्यमीमांसयैव वाक्यार्थनिणयो भवतीति न विवादः। यद्यपि जैमिनिमीमांसा धर्ममीमांसा धर्मश्च वेदार्थ इति तत्तदधिकरणेषु वेदवाक्या न्येवोदाहृत्य श्रुति-लिङ्ग-वाक्यादिभिरुपस्कृत्य प्राप्ताप्राप्तविवेकेन उद्देश्यविधेयभावं निर्णीय इतरवाक्याविरोधेन वाक्यार्थं निर्णयति मीमांसा। मीमांसायाः प्रयोजनं स्वयं **सूत्रकार** एवाह "अथातो धर्म जिज्ञासा" इति धर्मज्ञानं प्रयोजनमिति। भाष्यकारश्च-धर्माय जिज्ञासा, सा हि तस्य ज्ञातुमिच्छा। स कथं जिज्ञासितव्यः? को धर्मः? कथं लक्षणः? कान्यस्य साधनानि? कानि साधनाभासानि? किंपरश्चेत्याह"। धर्मं प्रति हि विप्रतिपन्नाः बहवः। केचिदन्यं धर्ममाहुः, केचिदन्यम्? सोऽयमविचार्य प्रवर्तमानः

कश्चिदेवोपाददानो विहन्येत, अनर्थञ्च ऋच्छेत्। तस्माद्धर्मो जिज्ञासितव्यः'' इति। एतेन विचारपूर्वकं निर्णयात्मकं धर्मज्ञानं मीमांसायाः फलमिति ज्ञायते। श्लोकवार्तिके च ''स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये, मतिर्बहुविदां पुंसां संशयान्नोपजायते'' केचिदाहुरसावर्थः केचिन्नासावयन्त्विति। तन्निर्णयार्थमप्येतत्परं शास्त्रं प्रणीयते'' (१-१-१-१२७, १२८)। तन्त्रवार्तिकेऽपि (१-३-९/३३) मीमांसा वेदार्थतत्वनिर्णय-कारणम् इत्युक्तम्, ''धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमिति च **शास्त्रदीपिकायाम्** (१-१-१)। ततश्च वेदवाक्यार्थनिर्णायकसाधकन्यायैरेव स्मृतिपुराणेतिहास काव्यानाटकाख्यानाख्यायिका कथासत्सिागरादिकं सकलमेव गीर्वाणवाणीगतं वाङ्मयं लोकभाषामयञ्चापि नानाविधं वाङ्मयं विचारगोचरीगतुं ज्ञातुं निर्णेतुञ्च शक्यते। भूयानुपयोगः मीमांसायाः, प्राचीनशास्त्राभ्यासकानां विदुषां आधुनिकानाञ्च, वेदान्तशास्त्रीयाणाञ्च, विशेषतश्च धर्मशास्त्रीयाणां ग्रन्थानामभ्यासो विना मीमांसां पदे पदे प्रस्खलति, भूयिष्ठान् हि मीमांसासिद्धान्तानाश्रित्य आकरग्रन्थाः प्रवृत्ता दृश्यन्ते। संयोगपृथक्तवन्यायः - ग्रहैकत्वन्यायः - बलाबलधिकरणन्यायः - विप्रतिषिद्धसमवाये भूयसां प्राबल्यन्यायः इत्यादिन्यायान् तत्र दर्शनकाराः उदाहरन्ति प्रमाणयन्ति चेति मीमासा सर्वोपकारिणी।

तथाचैतत्सिद्धम्- यद्यत् शास्त्रं वैदिकविधिनिषेधात्मकवाक्यानां अर्थाव वोधप्रयोजनेन विरोधिवाक्ययोर्मध्ये सङ्गति-प्रयोजननिमित्तेन व्याख्याप्रणालीं निर्धारयति, कर्मकाण्ड-विषयकसिद्धान्तान् विविधाभिर्युक्तिभिः - यथा- उपक्रमोपसं हारो अभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्तिश्चेति तात्पर्य निर्णायक युक्तिभिश्च श्रुति लिङ्ग वाक्यप्रकरण स्थान समाख्याभिर्युक्तिभिश्च, न्यायैश्च प्रतिपादयत् कर्मकाण्डं परिपुष्णाति तन्मीमांसाशास्त्रमिति भवति।

गीर्वाणवाणीवाङ्मये तर्क-व्याकरण-वेदान्त-मीमांसानां चतुश्शास्त्रीति व्यवहारो विद्यते। तत्र शास्त्रं नाम तत् यत् नरान् प्रवर्तयति अथवा निवर्तयति—प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते'' ''इति श्लोकवार्तिक शब्दपरिच्छेदे दृश्यते। तत्र स्वरसतः प्रतीयमानं अर्थं अनुरुध्य वेदः शास्त्रम्, शासना-

विशेषात्—धर्मशास्त्रमपीति तदन्येषां शास्त्रत्वमनुपपन्नम्। अत्रायं प्रश्नस्समुद्भवति-न्यायवैशेषिकसूत्रैः आत्मानात्मविभागः, पाणिनिसूत्रैश्च साध्वसाधुशब्दविवेकः क्रियते तथा मीमांसासूत्रैः वेदार्थ विचारस्सम्यक् क्रियत इति प्रवृत्तिनिवृत्युपदेशरूपत्वं मीमांसाया स्यादिति। यदि विचारोयऽमेवं कर्तव्यः, नेतरथा, अत्रायं न्यायोऽनुसर्तव्यः, नेतर इति उपदेशे एव तात्पर्य मिति शास्त्रत्वं न विहन्यत इत्युच्यते तर्हि काव्यान्यपि शास्त्राणीति स्यात्। काव्यानामपि रामादिवत् वर्तितव्यम्, न रावणादिवदित्युपदेशे तात्पर्यात्, एवं च मीमांसायाश्शास्त्रत्वम् कथमिति प्रश्नो भवति। तस्येदमुत्तरं वक्तव्यम्। काव्यानां उपदेशपरत्वे सत्यपि तेषां मानसोल्लास कालयापनप्राय लौकिक प्रयोजनपरता प्रसिद्धा। परं मीमांसादीनां परमगहनतया अलौकिकार्थबोधकतया वैयाकुलीप्रशमनैकफलतया च मीमांसादीनामेव शास्त्रत्वं न काव्यादीनामिति युक्तमभिधातुम्। शास्त्रपदं विद्यास्थानविशेषेषु रूढमिति पक्षे न किञ्चिद्विचारणीयम्। किञ्च पूर्वमीमांसाशास्त्रमिदं वेदाध्ययनवत् गुरुकुले स्थित्वैव अध्येयम्, गुरुमुखादेवाध्येयम् न विना गुरुसहायं स्वयं वा। यतो हि "स्वाध्यायोऽध्येतव्य" इति वाक्येनैव मीमांसाध्ययनमपि कर्तव्यमिति ज्ञायते। वेदाध्ययनकर्तव्यताबोधकं तदेव वाक्यं मीमांसाध्ययनमपि कर्तव्यमिति एकविधिमूलत्वेन गमयति। तथाहि-अध्येतव्य इत्यस्य द्वेधा विवरणं भवति-अध्ययनं कुर्यात्, अध्ययनेन कुर्यात् इति च। यथा च पचतीत्यस्य पाकं करोति, पाकेन करोतीति तद्वत्। यत्र हि देवदत्तः पचतीति द्वितीयान्तपदं विना पचतीत्यस्य प्रयोगः तत्र पाकं करोतीति विवरणम्, यत्र तु पचति ओदनं इति प्रयोगः तत्र पाकेन ओदनं करोतीति। न तत्र पाकं करोति ओदनमिति विवरणम् कृधातोरेक कर्मकत्वात्, न द्विकर्मकत्वम्, एवञ्च यदि प्रथमतः प्रमाणान्तरेण पाकस्य फलमवगतं भवति तर्हि पचतीति केवलप्रयोगः। अन्यथा न सः। तथाच अध्येतव्य इति विधिवाक्येऽपि यदि अध्ययनस्य फलं किमपि प्रमाणान्तरेण अवगतं स्यात् तर्हि अध्ययनं कुर्यादिति विवरणं युक्तम्। यदि तु प्रमाणान्तरेण न सिद्धं तर्हि अध्ययनेन फलं कुर्यादिति विवरणं युक्तम्। अत्र अध्येतव्य इति कर्मणि तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् अध्ययनस्य स्वाध्यायः फलमिति, प्रमाणान्तरानधिगतत्वात् अध्ययनेन स्वाध्यायं कुर्यादिति

विवरणं श्रेयः। तथा च केवलस्.य स्वाध्यायपदवाच्यस्य वेदस्य कर्मत्वं कीदृशमिति विचारणायां शास्त्रप्रसिद्धं किमपि कर्मत्वं तत्र न सम्भवति। चतुर्विधं शास्त्रप्रसिद्धं कर्मत्वम्-उत्पाद्यत्वम्, प्राप्यत्वम्, विकार्यत्वम्, संस्कार्यत्वञ्चेति। घटं करोतीत्यत्र घटस्योत्पाद्यत्वम्, ग्रामं गच्छतीत्यत्र ग्रामस्य गमनेन प्राप्यत्वम्, न तु जन्यत्वम्। तण्डुलं पचतीत्यत्र तण्डुलस्य विकार्यत्वम्, न प्राप्यत्वं, नाप्युत्पाद्यत्वम्, नहि पाकेन तण्डुलो ग्राम इव प्राप्यते, घटवदुत्पाद्याते वा किन्तु विक्लेदरूपावस्थान्तरं प्राप्यते। विकारो नाम अवस्थान्तरप्राप्तिरेव। आदर्शं विमलीकरोति इत्यत्र तु आदर्शस्य संस्कार्यकर्मत्वम् इति। तत्र अध्ययनेन वेदो न जन्यते, तस्य नित्यत्वात्, नापि विकार्यते, तत्र अवस्थान्तर प्राप्तेरदर्शनात्, नापि संस्क्रियते, तदेव संस्कार्यं कर्म भवति, यस्य उत्तरत्र कार्यान्तरेषु उप योगः, यथा व्रीहीन् प्रोक्षतीति वाक्ये संस्कार्यकर्मतया अवगतानां व्रीहीणां व्रीहिभिर्यजेत इति वाक्यान्तरेण यागे विनियोगो विद्यते, न चैवं स्वाध्यायेन किञ्चित् कुर्यादिति कस्मिंश्चित् यागे स्वाध्यायस्य विनियोगः कृतो वर्तते। अतश्च संस्कार्यकर्मत्वमपि न सम्भवति। प्राप्यकर्मत्वन्तु यद्यपि स्वाध्यायस्य भवति, अध्ययनेन तस्य प्राप्यत्वात्। एवमपि न स्वाध्यायस्य केवलस्य प्राप्यत्वमत्र विवक्षितम्, यतः ''अनधीयानाः व्रात्या भवन्ति' इति वाक्यान्तरेण केवलस्य स्वाध्यायस्य व्रात्यतापरिहारार्थं सम्पाद्यत्वं निरूपित-मित्येतद्वाक्यस्यैव वैयर्थ्यमापद्येत। न केवलः स्वाध्यायः प्रयोजनम्। तथा च केवलस्य वेदस्य स्वाध्यायोऽध्येतव्य इति वाक्ये कर्मत्वेनान्वयासम्भवात् अर्थज्ञानविशिष्ट स्वाध्यायस्यैव प्राप्यकर्मत्वं विवक्षणीयम्। तथा च विशेषणीभूतार्थज्ञानार्थं अध्ययनं स्वाध्यायोऽध्येतव्य इति वाक्यं विधीयत इति वक्तव्यम्। वेदार्थज्ञानञ्च मीमांसाशास्त्रा-धीनम्। मीमांसाशास्त्रञ्च वेदार्थज्ञापनाय अधोनिर्दिष्टान् सिद्धान्तान् स्वीकरोति। ते मूलभूताः।

**मीमांसासिद्धान्ताः**

**१. जगतः पारमार्थिकत्वम्।** पूर्वमीमांसादर्शने जगतः पारमार्थिकत्वं स्वाक्रियते

वेदान्तादिवत् जगतो मिथ्यात्वं, ईश्वरकर्तृकत्वं वा न स्वीक्रियते। मीमांसा हि न आत्मजिज्ञासायां प्रवृत्ता। परन्तु पूर्वकाण्डे श्रद्धालूनां देहातिरिक्त: कश्चन आत्मा अस्ति स एव आमुष्मिकफलभोक्ता इति विश्वासवतां प्रोत्साहनाय प्रवृत्यर्थम् कर्मानुष्ठान प्रवृत्तिप्रयोजकस्य अनात्मनि देहादौ आत्मतादात्म्यज्ञानस्य आत्मनो ज्ञानसुखादिगुणवत्वस्य जगत्सत्यत्वादिकस्य वर्णनं करोति। जगत: पारमार्थिकत्वाभावे स्वर्गपशुपुत्राद्यर्थं धर्मानुष्ठानासम्भव:। निरूपितञ्चैतत्-**श्लोकवार्तिके** निरालम्बनवादे "प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम्। विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना। सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणै: स्थिति:। वचन-व्यक्तिभेदेन पूर्वसिद्धान्तपक्षता। कर्मभ्य: फलसम्बन्ध: पारलौक्यैहलौकिके। सर्वमे-तदयुक्तं स्यादर्थशून्यासु बुद्धिषु। स्वप्नोपभोगवच्चापि योपभोगत्वकलपना। तन्निवृत्यर्थमेवेह परमार्थे प्रयत्यते। न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते। यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितै:। परमार्थफलावाप्ति-मिच्छद्भिस्तेन यत्नत:। प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्य वस्तुषु" इति। **बृहत्यामपि** औत्पत्तिकसूत्रे "यदुक्तम् अहंकार ममकारौ अनात्मनि आत्माभिमानौ" इति मृदितकषायाणामेवैतत् कथनीयम, न कर्मसङ्गिनामित्युपरम्यते" इति जगन्मिथ्यात्व-विचारो न पूर्वमीमांसादर्शनविषय इति कण्ठत उक्तम्। **मानमेयोदयेऽपि** प्रमेय-परिच्छेदे "लोकस्यात्यन्तिको नाशो वैदिकानां न सम्मत:। महतां वेदमार्गाणां स्रोतोभङ्ग प्रसङ्गत:" इत्युक्तम्, किञ्च पूर्वमीमांसादर्शनं हि नैयायिकादिवत् जगत ईश्वर-कर्तृकत्वञ्च न स्वीकरोति। मीमांसादर्शनं सृष्टिं महाप्रलयञ्च नाभ्युपगच्छति। य: कल्प: स कल्पपूर्व इति व्याप्त्या अनादिरयमनन्तो जगद्व्यवहारप्रवाह: प्रवर्तत इत्यातिष्ठते। यदि ईश्वर: सृष्टिकर्ता स्यात् तर्हि किं फलममिसन्धाय सृष्टिं कुर्यात्। विना प्रयोजनं प्रवृत्तेरसम्भवात्। यदि जीवविषयिणी अनुकम्पैव सृष्टिनिमित्तमिष्यते तदप्यनुपपन्नम्। अनुकम्पा हि दु:ख दर्शन निमित्ता भवति। शरीरिणां आत्मनां सृष्टे: प्राक् न किञ्चिद् दु:खमस्ति येन अनुकम्प्येरन्। अतोऽनुकम्प्याभावात् नानुकम्पा सम्भवति। असत्यपि दु:खे सुखस्याभावात् तन्निमित्तानुकम्पा इति च न वक्तव्यम्। तथा सति तादृश्यानुकम्पया

प्रवर्तमानः परमेश्वरः सुखमेवैकं सृजेत् न दुःखम्। दृश्यते चैषा सुखदुःखोभयात्मिका। किञ्च परमेश्वरस्याप्तकामत्वात् जगत्सर्जने न किञ्चिदपि प्रयोजनं विद्यते। क्रीडार्था जगत्सृष्टिरिति वादोऽपि न युक्तम्। क्रीडा नाम विनोदजन्यं सुखम्। इदमपि आप्तसुखस्येश्वरस्य न सम्भवति। यदि अनाप्तसुख ईश्वर इत्युच्यते तर्हि कृतार्थतालक्षणमैश्वर्यं ईश्वरस्य भज्येत। क्रीडा हि अल्पीयसी भवति, सा च रमयति। समस्तभूधरादिविषय जगद्बिम्बरचनारूपः महाव्यापारः अतिक्लेशरूपः न क्रीडया विनोदयति। नापि चित्तमनुरञ्जयति। किञ्च यदि सिसृक्षा अनुकम्पानिमित्ता तर्हि सञ्जिहीर्षा किं निमित्ता स्यात्। सापि अनुकम्पयेति न भ्रमितव्यम्, विरुद्धयोरुभयोरनुकम्पैकहेतुकत्वाभावात्। किञ्च सिसृक्षुर्भगवान् साधन-सहितः सृजेत्? उत साधनरहितः? आरम्भकाले साधनान्तराभावात् साधनसहित इति न वक्तव्यम्। सृष्टेः प्राक् धर्माधर्मयोरप्यभावात् धर्माधर्मयोस्साधनत्वं न सम्भवति। साधन-रहित इत्यपि न वक्तव्यम्, साधनरहितस्य स्रष्टुः क्वापि स्रष्टृत्वादर्शनात्। तस्मात् जगतस्स्रष्टुरभावात् न कदाचिदनीदृशं जगदिति वदत् पूर्वमीमांसादर्शनं जगतस्सत्यत्वं स्वीकरोति। स्पष्टञ्चेदं **शास्त्रदीपिकातर्कपादे, न्यायमञ्जर्यास्तृ**तीयाह्निके च।

**२. शब्दार्थयोःसम्बन्धस्स्वाभाविकः ( नित्यः ) ( औत्पत्तिकः )** शब्दार्थयो-स्सम्बन्धः कश्चन अवश्यं स्वीकर्तव्यः, अन्यथा असम्बद्धस्याप्यर्थस्य प्रतीतिसम्भवात्। ततश्च घटपदात् आकाशस्यापि प्रतीत्यापत्तेरिति शास्त्रसम्प्रदायः। सोऽयमवश्य-स्वीकर्तव्यस्सम्बन्धः पौरुषेय अथवा अपौरुषेयः स्वाभाविकः नित्य अथवा अनित्य अथवा अस्वाभाविक इति शास्त्रेषु परिशीलितो विद्यते। नित्यत्वपक्षे केचन अनित्यत्वपक्षेऽन्ये। तत्र मीमांसकाः औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति वदन्तः शब्दार्थयोस्सम्बन्धं नित्यमपौरुषेयञ्च वदन्ति।

नैयायिकास्तु शब्दार्थयोस्सम्बन्धः पौरुषेय इति वदन्ति। स्वभावत असम्बद्धावेतौ शब्दार्थौ। मुखे शब्द उपलभ्यते, भूमौ चार्थ उपलभ्यते। अयं शब्दः न अर्थः, अयमर्थः, न शब्द इति च लोके व्यपदिश्यते, रूपेणापि शब्दार्थयोर्भेद अनुभूयते। तस्मात्

केनापि पुरुषेण शब्दानामर्थैस्सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति वक्तव्यमिति शब्दार्थयोस्सम्बन्ध पौरुषेय इति वदन्ति।

परन्तु मीमांसकाः स च सम्बन्ध अपौरुषेयः नित्य इति वदन्ति। तत्तच्छब्दश्रवणे तत्तदर्थावगमस्यानादिपरम्परासिद्धत्वात्। अत एव च स्वाभाविकः। न च पराभिप्रायानुमानादेवार्थप्रतिपत्तिसिद्धेरस्वाभाविकत्वं शङ्कनीयम्। स्वापावस्थायां परवशैरनभिज्ञैर्बालैः शुकसारिकादिभिः अनर्थज्ञवैदिकैश्चोच्चारितात् लौकिकशब्दात् मन्त्रार्थवादादिवाक्याच्च अर्थाभिज्ञानादप्यर्थबोधानापत्तिप्रसङ्गात्। योऽयं शब्दार्थयोः प्रत्याय्य प्रत्यायकभावरूपस्सम्बन्धः स्वीक्रियते मीमांसकैस्स च न संज्ञासंज्ञिभावरूपः। तथा सति तस्य स्वाभाविकत्वे इदम्प्रथमतया श्रवणेऽपि अर्थप्रत्ययापत्तिः। अतश्च चक्षुषः आलोकसंयोगस्येव शब्दस्य शब्दार्थसम्बन्धग्रहस्यापि सहकारित्वं आवश्यकमिति वक्तव्यम्। न च सम्बन्धग्रहो नाम शक्तिग्रहः। तस्य पुरुषान्तरकृतबोधनाधीनत्वात् पौरुषेयत्वं सम्बन्धस्येति वाच्यम्। शक्तिग्रहमात्रस्यैव पुरुषाधीनत्वेन ग्राह्यसम्बन्धस्य पुरुषानधीनत्वात्। अन्यथार्थकथने तस्यान्यैरुपालम्भदर्शनेन तथा निश्चयात्। देवदत्तादिशब्दवत् नूतनार्थसम्बन्धे तस्य स एवार्थ इति तदनुपालम्भप्रसक्तेश्च। नच भूमावर्थो मुखे शब्दः, गौरिति शब्दः सास्नादिमान् अर्थः शब्दोऽयं नार्थः, अर्थोऽयं न शब्द इत्याश्रयभेदरूपभेद-प्रतीतिभेदै रज्जुघटवच्छब्दार्थयोः पृथग्भूतत्वात्, तादृशयोश्च रज्जुघटसम्बन्धवत् कृतकसम्बन्धवत् कृतकसम्बन्धस्यैव दृष्टत्वान्न नित्यसम्बन्धसिद्धिः। सिद्धेचैवमनित्यत्वे कश्चिच्चेतनः पुरुषस्तत्सम्बन्धी वाच्यः। स च नास्मदादिः। असर्वज्ञत्वात्। किन्तु परमेश्वरेण सर्गादिकाले सम्बन्धः क्रियते। ततो रुपद्वयं कृत्वा व्यवहियत इत्यपि वाच्यम्। सर्गप्रलयानङ्गीकारात् सर्गादौ मानाभावाच्च। आदिकाले सर्वाभावे न उपादात्रुपादानाभावेन सृष्ट्यभावप्रसक्तेः। वैचित्र्यानुपपत्तेश्च। न च जीवादृष्टवैचित्र्यात् कार्यवैचित्र्यमिति युक्तम्। दृष्टं विना केवलादृष्टेन तदसिद्धेः। अन्यथा बीजं विनापि वृक्षोत्पत्तिप्रसङ्गात्। नापि ईश्वरेच्छाया नित्यद्रव्यैश्च तत्सिद्धिः, केवलानुमानेन ईश्वरासिद्धेः। बीजाङ्कुरवत् विनापीश्वरं प्रवाहादेव सृष्टिसिद्धौ ईश्वराङ्गीकारवैयर्थ्यात्। ईश्वरकर्तृकत्वेन अनित्यत्वे सति वेदानां पौरुषेयत्वापाते

बौद्धादिग्रन्थवत् अतीन्द्रियार्थग्राहकत्वाभावप्रसङ्गेन अप्रामाण्यप्रसङ्गात्। तस्मात् अनादौ संसारे पदपदार्थ सम्बद्धुरभावात् नित्य एव तयोस्सम्बन्धः। किञ्च अर्थसत्तयैव शब्दानां महत्वम्। कस्मिन्नर्थे कश्शब्दः प्रयोक्तव्य इति नियमे मनुष्यकृते सत्यपि मानवोच्चरिताश्शब्दाः अर्थभावनां विना आत्मानं न प्रकटीकुर्वन्तीति तु प्रत्यक्षम्। ततश्च शब्दार्थसम्बन्ध-स्स्वाभाविकः न मनुष्यकृतः। इयमेव रीतिः लौकिकवैदिकशब्दयोः। यदि शब्दानामर्थानाञ्च सम्बन्धः केनापि कृतस्स्यात् तर्हि अनवस्थाप्रसङ्गः। किञ्च अर्थसत्ता भावनाधीना, न तु शब्दाधीना, भावनाधीनत्वेन शब्दोऽपि अर्थवान् भवति। यद्यपि विशिष्टशब्दानां विशिष्टार्थेषु प्रयोगः येन केनापि पुरुषेण आरब्ध इति वक्तुं शक्यते तथापि सोऽयं प्रयोगः वस्तुतः शब्दार्थयोरविभाज्यं मौलिकं सहभावरूपं तत्त्वमेव उपोदबलयति। ततश्च शब्दार्थ-योस्सम्बन्धः नित्य इत्येव वक्तव्यः। एवं प्रयोगः अभ्यासः विनियोगश्चति त्रयं शब्दार्थ-सम्बन्धं न निश्चेतुं अर्हति। प्रयोगादीनां तेषां प्रकरण-देश कालानुसारित्वात् शब्दार्थयोः प्रयोगाभ्यासादिः सम्बन्ध एव न भवितुमर्हति। किञ्च यदा वृद्धाः प्रसिद्धसम्बन्धाः स्वकार्यायैव व्यवहरन्ति तदा तेषामुपशृण्वन्तो बालाः सम्बन्धं प्रतिपद्यन्ते। यदा हि केनचित् गामानयेत्युक्तः कश्चित्सास्नादिमन्तमानयति तदा समीपस्थो बालोऽवगच्छति यस्मादयमेतद्वाक्यश्रवणानन्तरमस्मिन्नर्थे प्रवर्तते तस्मादस्माद्वाक्यादयमर्थः प्रत्यायित-इत्येवं संमुग्धरूपेणावगतं प्रत्यायकत्वं पश्चाद् बहुषु प्रयोगेषु अन्वयव्यतिरेकाभ्यां वाक्यभागानां पदानां पदभागानां च प्रकृतिप्रत्ययानां वाक्यार्थभागेषु पदार्थेषु विविच्यते। तस्मात् पदपदार्थयोसम्बन्धः न पौरुषेयं परन्तु अपौरुषेयः नित्य एव। ततश्च प्रत्यक्षा-दिभिरनवगम्यमानस्य अग्निहोत्रादिलक्षणस्य ज्ञानं नित्यापौरुषेयवाक्यात्मकवेद-वाक्यगतचोदनालक्षणमिति मीमांसकानामाशयः। प्रतिपादितञ्चेदं **श्लोकवार्तिक**-निरालम्बनवादे **शास्त्रदीपिका-भाट्टचिन्तामणि-बृहत्यादिषु** मीमांसकग्रन्थेषु, पूर्वपक्षप्रतिपादनावसरे **न्यायभूषण-न्यायमञ्जर्यादिषु** ग्रन्थेषु च।

**३. मीमांसादर्शने आत्मनः स्वरूपम्।** वेदान्तिनस्तु सुखेच्छादीनां मनोगुणस्य श्रुतिसिद्धत्वात् निर्गुणज्ञानस्वरूप आत्मा एक एव, स एवाविद्यावशात् जीव इति कथ्यते

वस्तुतस्तु जीव आत्मनोऽभिन्न इति वदन्ति। परन्तु मीमंसादर्शनन्तु आदितस्तावत् शरीरम्, इन्द्रियाणि मनो बुद्धिं प्राणांश्चानात्मत्वेन समर्थयत्-तत्साक्षिणं तदधिष्ठातारं परलोकसम्बन्धिनं नित्यं कर्तारं फलभोक्तारं च आत्मानं स्थापयति। सुखादयः क्वचिदाश्रिताः गुणत्वात् रूपवदित्यनुमानेन देहादिबाधात् तदतिरिक्तस्य आत्मनः सिद्धिः। चैतन्यस्य तु शरीरधर्मत्वं नास्तीति अवश्यं तदाश्रयत्वेन च आत्मा अङ्गीकरणीय इति तदाशयः। किञ्च यानीमानि अलौकिकफलानि कर्माणि स्वर्गकामो ज्योतिष्टोमेन यजेत इत्यादीनि तानि अप्रमाणानीति तु न सम्भवति। स्वयंसिद्धत्वाच्छास्त्रप्रामाण्यस्य। तथा च भोक्तुरभावेऽ-नित्यत्वे वा एतेषामप्रामाण्यं दुर्वारमिति तत्परिहाराय स आत्मा नित्य इति स्वीक्रियते। तथापि स न्यायमतवत् न जडः किन्तु चेतनः। यदि भोक्ता जडः स्यात् तदा पाषाणात् तस्य अविशेषात् भोगाभावप्रसङ्गः। तस्मादगत्या स चेतन इत्यङ्गीकरणीयम्। तथापि सांख्यमत इव न स चेतनः किन्तु चिदचिद्रूप इति वक्तव्यम्। अन्यथा तस्य जडधर्मस्य अज्ञानस्याश्रयत्वं न स्यात्। नहि सूर्ये तमस्तिष्ठति। नाप्यन्यत्र तिष्ठति, तस्याज्ञातत्वप्रसङ्गात्। तथा च सूर्ये एव यथा तेजस्ति-मिरयोरधिकरणता तथैव ज्ञानाज्ञानाश्रय आत्मेति चिदचिद्रूप एव सः। नापि सांख्यमत इवाकर्ता। तथा सति कर्मणः फलं तस्मिन् न स्यात्। नह्यकर्तुः फलमिति लोके दृष्टम्। न च कर्मणः फलं भोगः प्रकृतिनिष्ठोऽपि यथा पुरूषे समारोप्यते तथैव कर्तृत्वमपि नेति वाच्यम्। भोक्तृत्वस्य तथाकर्तृत्वस्य आत्मनि कल्पनायां न अनुमानं प्रमाणम्, किन्तु शास्त्रमेव। तच्च आत्मनः कर्तृत्व भोक्तृत्व कल्पनेऽनुकूलम्, नानुमानेन गौणं कल्पयितुं युक्तम्, स्वर्गकामो यजेत इति हि शास्त्रं यागस्य कर्तुः स्वर्गफलभोक्तृत्वं वदति। तथा च श्रुतानुमानयोः श्रुतसम्बन्धो बलीयानिति न्यायेन श्रौतं कर्तृत्वं तथा भोक्तृत्वं जीवे कल्पयितुं युक्तम्। ततश्च कर्ता तथा कर्मफलानां भोक्ता नित्यश्चिदचिद्रूप आत्मेति मीमांसादर्शनसिद्धान्तः। स च आत्मा प्रतिशरीरं भिन्नत्वात् नाना। एकत्वे भोगवैचित्र्यापादकस्य कर्मवैचित्र्यस्योपदेशः शास्त्रे कृतो व्यर्थः स्यात्। शास्त्रं हि वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इत्यादिकं तत्त-द्वयोवस्थावर्णाश्रमादिकं निमित्तीकृत्य तानि तानि कर्माणि विधीयमानम् अवश्यमात्मभेदम्

अङ्गीकुरुते। स आत्मा विभुर्वा अणुर्वा इत्यत्र अनिश्चयः। शास्त्रं तु उभयत्रानुकूलम्। तथा च शास्त्रम् महान्तमात्मानं विभुं मत्वा धीरो न शोचति स एषअणुः अणोरणीयान्। श्यामाको वा श्यामाकतण्डुलो वा इत्यादि प्रश्ने अत्रेदं समाधानम्-शास्त्रस्योभयत्रानु-कूल्येऽपि सुखदुःखादीनां प्रत्यक्षत्वे आश्रयगतस्य महत्त्वस्य कारणत्वेन क्लृप्ततया विभुत्वमेवात्मन उचितम्। उक्तञ्चेदं-स च देहेन्द्रियज्ञानसुखेभ्यो व्यतिरिच्यते। नानाभूतो विभुः नित्यो भोगस्स्वर्गापवर्गभाक्'' इति मानमेयोदये शास्त्रदीपिका-प्रकरणपञ्चिका-श्लोकवार्तिक-भाट्टचिन्तामणि-न्यायभूषणादिषु ग्रन्थेषु।

**४. पूर्वमीमांसादर्शने शब्दस्वरूपम्।** शब्दस्वरूपविषयकविचारे शब्दनित्यत्व-वादिनां वैयाकरणानामयमाशयः -वर्णसमूह-श्रवणानन्तरं इदमेकं पदमिति प्रत्ययो मानसप्रत्यक्षेणोदेति। तस्य च प्रत्ययस्य वर्णातिरिक्तः कश्चित् स्फोटनामा पदार्थो विषयः। स च नित्यः, स एव शब्दः न तु वर्णा इति। अत्र न्यायदर्शनस्यायमाशयः -वर्णे-ष्वेव एकार्थावच्छेदोपाधिना पदैक्य बुद्धेरुपपत्तौ वर्णातिरिक्त-स्फोटकल्पना निरर्थिका तस्मात् वर्णानामेव शब्दत्वम्। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्ष-णम्। शब्दस्सर्वोऽप्यनित्यः, अव्याप्यवृत्तिश्च। स द्विविध ध्वनिवर्णभेदात्। तार तारतरत्वादि धर्मवान् अभिघातादिजन्मा अस्फुटशब्दः मृदङ्गादिजन्मा ध्वनिरूपः। कण्ठसंयोगादिजन्यः स्फुटः कखादिरूपः वर्णः। आकाशे समवायेन उत्पन्नस्य शब्दस्य कर्णात्मकाकाशे धारावाहिकोत्पत्या समुत्पन्नस्य प्रत्यक्षं भवतीति, सजातीय-शब्दोत्पत्तिस्तु द्विधा भवति वीचीतरङ्गवत् कदम्बपुष्पमञ्जरिवच्च निमित्तपवनेन भवति इति च। स च शब्दः उत्पन्नो ककारः, विनष्टः ककार इति प्रतीतिप्रमाणात् अनित्य इति शब्दः गुण अनित्यः वर्णात्मक श्चेति। परन्तु मीमांसादर्शने शब्दो वर्णात्मकः अतिरिक्तं द्रव्यम्, वर्णा नित्याः व्यापकाः ध्वनिव्यङ्ग्या इति स्वीक्रियते। वेदापौरुषेयत्ववादिनां शब्दार्थयोर्नित्यसम्बन्धवादिनाञ्च तेषां मीमांसकानामयमाशयः -शब्दव्यञ्जकोच्चारणस्य परप्रत्ययनार्थतया, तस्य अनित्यत्वे अर्थप्रतिपत्तिं यावत् अनवस्थानात् परस्यार्थप्रतिपत्तिरेव न स्यादिति शब्दो नित्यः। गोशब्दे उच्चारिते सकलासु गोव्यक्तिषु युगपत् प्रत्ययोत्पत्तिर्भवति इति तस्य

नित्याकृतिवचनत्वम्। तच्च गोशब्दस्य नित्यत्वे एव घटते न अनित्यत्वे। नहि अनित्यस्य नित्यः सम्बन्धः सम्भवति। द्विः कृत्वा गोशब्दः उच्चारितः न द्वौ गोशब्दौ इति व्यवहाराभावात्, स एवायं गकार इति प्रत्यभिज्ञया च शब्दे द्वित्वादिसंख्याया अभावः। ततश्च शब्दस्य नित्यत्वं सिध्यति। यथा घटपटादेः इदं नाशकमित्युपलम्यते तथा शब्दस्य नाशकमिदमिति न कस्याप्यनुभवः। एवं च विनाशहेतोरभावात् शब्द नित्यः। वायवीयत्वसम्बन्धस्य साक्षात्काराभावात्-शब्द नित्यः। वायवीयत्वसम्बन्धस्य साक्षात्काराभावात् शब्दः न वायुकरणक इति शब्दो नित्यः। ध्वसंप्रागभावाप्रतियोगित्वं नित्यत्वम्। ततश्च शब्दसामर्थ्यरूपशक्त्यात्मकलिङ्गस्य दर्शनादपि शब्दस्य नित्यत्वं सिध्यति। "वाचा विरूपनित्यया" ऋङ्मन्त्रेणापि तस्य नित्यत्वमनूद्यते। शब्दस्य नित्यत्वे देशभेदात् विभिन्नप्रतीतिस्तु एकस्यैव सूर्यस्य देशभेदात् विभिन्न प्रतीतिरिवेति वक्तव्यम्। किञ्च शब्दो द्रव्यम् साक्षात्सम्बन्धेन इन्द्रियग्राह्यत्वात् घटवत् इति युक्त्या तस्य द्रव्यत्वं सिध्यति। शब्दः संकोचविकासात्मकपरिमाणशालीति च आशयः। भेरीशब्दः श्रोत्रेण गृह्यत इत्यनुभवसिद्धम्। तत्र कदम्बगोलकन्यायेन शब्द-प्रसारणकल्पने अनेक शब्दतत्प्रागभावविरामादिकल्पनागौरवम्। एक एव शब्दस्तावद् दूरवर्ती समुत्पद्यते इत्यङ्गीकारे निकटस्थदूरस्थयोर्युगपच्छ्रवणापत्तिर्नतु क्रमेणेति सङ्कोचविकास-शालिपरिमाणवान् कल्प्यते। प्रयोगश्च-शब्दो द्रव्यम् न तु गुणः संकोच विकास-शालिपरिमाणवत्वात् भस्त्रावत् इति। तेन तत्रैव शब्दे वाय्वनुसारेण विकासात्मकं परिमाणमुत्पद्यते। तदासौ शब्दः श्रोत्रमाप्नोतीति प्रत्यक्षीक्रियत इति। एवं मीमांसादर्शने गकारादिवर्णः न प्रत्येकं व्यक्तिभेदभिन्नः। भेदधीस्तु व्यञ्जकध्वनिभेदादेव। वर्णा नित्याः व्यक्तित अभिन्नाश्च पदं गकाराद्येव स एव शब्दः नान्यत् व्यतिरिक्तमस्ति। स च शब्दः परिपूर्णपदान्तरमाकाङ्क्षति ततो वाक्यं भवति। पदं सामान्यवृत्ति, वाक्यं विशेष्यवृत्ति। नित्यानि पदानि संहत्य अर्थममिदधति। ततश्च पदे वर्णानां, वाक्ये च पदानां एकार्थप्रतिपादनकार्यकारित्वम्। तथा च वर्णानां नित्यत्वात् एकार्थावच्छेदकस्य पदस्यापि वर्णस्य कारणसापेक्षत्वं नास्तीति नित्यत्वमेवेति मीमांसकाशयः। वर्णानां तत्समुदाया-

त्मकपदानां च द्रव्यत्वं मीमांसासिद्धान्तः। शब्दः केवलं गुणवचनस्सन् द्रव्यमभिधातुं न शक्नोति। बाह्येन्द्रियग्राह्यतया शब्दस्य गुणत्ववादः अनुपपन्नः। तथासति वायौ रूपत्वादिसामान्ये च व्यभिचारापत्तिः। प्रत्यक्षद्रव्यगुणत्वाभावविशिष्टप्रत्यक्षेण गुणत्वा-भावानुमानाच्च। तत्र कर्मवेगवत्वेन च द्रव्यत्वानुमानसम्भवश्च। शब्दो द्रव्यं साक्षादक्ष-सम्बन्धग्राह्यत्वात् घटवत् इत्यनुमानञ्च तस्य द्रव्यत्वे प्रमाणम्। शब्दो नित्यः ध्वनिभिन्नत्वे सति श्रावणत्वात् शब्दत्ववत् इत्मनुमानेन तस्य नित्यत्वं व्यापकत्वञ्च सिध्यति। वाक्यञ्च पदसममिव्याहार एव। पदद्वयान्वयः वाक्यम्, कर्तृत्वाद्यन्यतमशक्तिज्ञाना-जन्यकर्तृत्वाद्यन्यतमशाब्दबोधप्रयोजकपदसममिव्याहारो वाक्यमिति, स्वेन स्वेन पदसमूहेन परिपूर्णं वाक्यमिति मीमांसाग्रन्थेषु दृश्यते। परं प्राभाकरमीमांसादर्शने शब्दः आकाशगुणः न द्रव्यमिति स्वीक्रियते। प्रतिपादितञ्चैतत् **मानमेयोदये**-''श्रोत्रमात्रेन्द्रियग्रह्यः शब्दः शब्दत्व-जातिमान्। द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः'' वियद्गुणत्वं शब्दस्य केचिदूचुर्मनीषिणः''इति। अन्यत्र शब्द नित्यत्वाधिकरणे-शास्त्रदीपिका-भाट्टचिन्तामणि-प्रकरणपञ्चिका-न्यायभूषण-न्यायमञ्जर्यादिग्रन्थेषु विषयोऽयं वर्णितः।

**५. पूर्वमीमांसादर्शने वाक्यस्वरूपम्** वाक्यस्वरूपविचारे वैयाकरणानामय-माशयः-आख्यातं सविशेषणं वाक्यम्। अत्राख्यातपदेन क्रियाप्रधानं लक्षणया बोध्यते। तेन त्वया शयितव्यमित्यादीनां वाक्यत्वं सिध्यति सविशेषणमित्यस्य साक्षाद् परम्परया वा यद् विशेषणं तत्सहितेत्यर्थः। तेन नद्यास्तिष्ठति कूले इत्यादौ नद्यादेरपि एकवाक्यावयत्वसिद्धिः। सविशेषणत्वेन विभागे साकाङ्क्षत्वं लभ्यते। एतदेव एकोद्देश्यक एकविधेयकत्वरूपैकार्थगर्भमेकवाक्यत्वलक्षणं भवति। किन्तु ब्रूहि ब्रूहि इति वाक्ये विशेषणानुपादानात् सविशेषणत्वाभावात् एतल्लक्षणस्याव्याप्तिरिति एकतिङ्वाक्यमिति च स्वीकृतम्। एकानुपूर्वीकैकतिङन्तवदित्यर्थस्वीकारेण उक्तस्थले समन्वयः। पचति भवति, पश्य मृगो धावति इत्यादौ तु एकानुपूर्वीकैकतिङर्थमुख्य विशेष्यकबोधजन-कत्वमित्यर्थेन निर्वाहः। ''सुप्तिङन्तचयो वक्यं क्रिया चेत् कारकान्विता'' इति लक्षणा-न्तरम्। एतश्च कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानां त्रयाणामपि

वाक्यत्वसिद्धिरिति स्वीक्रियते। प्रतिपादितञ्चैतत् **लघुशब्देन्दुशेखरे** हलन्तपुंलिङ्ग-प्रकरणे। नैयायिकास्तु शक्तं पदम्, अस्मात् पदात् अयमर्थो बोद्धव्य इतीश्वरेच्छा अथवा इच्छा शक्तिः, पदसमूहो वाक्यमिति वदन्ति। आकङ्क्षादिसाहय्येन पदानां परस्परं अन्वयो भवति। ततश्च अर्थप्रतिपादनद्वारा श्रोतुः पदान्तरविषयां अर्थान्तरविषयां वा आकाङ्क्षां जनयतां प्रतीयमानपरस्परान्वययोग्यार्थप्रतिपादकानां सन्निहितानां पदानां समूहो वाक्यमिति च लक्षणं **न्यायदर्शने**। प्रतिपादितञ्चैतत् **तर्कभाषायाम्**। परन्तु शब्दनित्यत्ववादिनां वेदापौरूषेयत्ववादिनां स्वतःप्रामाण्यवादिनां भावनामुख्यविशेष्यक-शाब्दबोधवादिनां अन्विताभिधान-अभिहितान्वयवादिनां च मीमांसकानां मते क्रियाप्रधानं अर्थबोधकं वाक्यमिति स्वीक्रियते। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षंचेद्विभागे स्यात् इति" **जैमिनिसूत्रम** (२-१-४६)। यत् वाक्यघटकपदानां विभागे शाब्दबोधाजनकम्, अविभागे च एकार्थ प्रतिपादकं तदेकं वाक्यमित्युक्तम्, "प्रधानगुणभावेन लब्धान्योन्यसमन्वयान्। पदार्थानेव वाक्यार्थान् सङ्गिरन्ते विपश्चितः॥" इति **वाक्यार्थमातृकायां प्रकरणपञ्चिकायाः**। पदान्येव वाक्यम्। पदार्था एव वाक्यार्थ इति प्राभाकरमतस्थितिः। पदार्थमेवैकं प्रधानं गुणभूतार्थान्तरव्यतिषक्तं वाक्यार्थमाचक्षते। अतो गुणभूतार्थान्तरव्यतिषक्तप्रधान पदार्थस्यैकत्वात् एकं वाक्यमिति सिध्यति। ततश्च पदार्थानां संसर्गो न वाक्यार्थः परन्तु अन्विताः पदार्था एव वाक्यार्थ इति तेषामाशयः। समभिव्याहारो वाक्यम् इति **न्यायप्रकाशे**। समभिव्याहारः सामीप्यम्। तच्च शब्दयोर्वाक्ययोर्वा उच्चारणक्रियाद्वारा भवति। साध्यत्वादिवाचकद्वितीयान्तपदाभावेऽपि वस्तुतः शेषशेषिणोः (अङ्गाङ्गिनोः) सहोचारणमित्यर्थः। आम्नायस्य क्रियार्थत्वादानर्थक्य-मदतर्थानामिति स्वीकुर्वतां मीमांसकानां मते "भावनैव च वाक्यार्थः स्वकारकविशेषिता" इति स्वीक्रियते। तथा च पदश्रवणानन्तरं गृहीतपदपदार्थसङ्गतिकस्य पुंसः पदार्थस्मृतौ जातायां तैरेव पदार्थैः स्मृतैः अज्ञाताबाधितार्थविषयकं यद्विशिष्टज्ञानं येन उत्पद्यते तत् वाक्यमिति स्वीकृतं भवति।

**६. पूर्वमीमांसादर्शने वेदस्यापौरुषेयत्वं नित्यत्वञ्च।** अवैदिकदर्शनानां बौद्धादीनां न्यायादिदर्शनानाञ्च वेदोऽनित्यः पौरुषेयश्चेति सिद्धान्तः। तेषामयमाशयः -उत्पन्नो गकारः नष्टो गकार इत्यापामरप्रतीतिबलात् वर्णानामनित्यत्वं सिद्धम्। तादृशवर्णसमुदायः पदम्। पदसमुदायस्य वेदस्यापि सर्वथा अनित्यत्वमेव सङ्गच्छते। कथञ्चिद्वर्णानां नित्यत्वस्वीकारेऽपि वेदस्यापौरुषेयत्वं नित्यत्वञ्च न युक्तिसहम्। वेदे तावत् काठकम्, कालापम्, कौथुमम् पैप्पलादम, तैत्तरीयकम्, इत्याद्याः पुरुषसम्बद्धाः समाख्याः श्रूयन्ते। "तेन प्रोक्तम्" "कृते ग्रन्थे" इति **पाणिन्यनुशासनेन** कृतार्थे प्रोक्तार्थे एव तद्धितप्रत्ययो भवति। वेदानामप्रोक्तत्वे अकृतत्वे च तादृशप्रयोगासम्भवः। ततश्च वेदानां कार्यत्वमेवावगम्यते। कार्यस्य कर्तृपूर्वकत्वात् कश्चन कर्ता अस्तीति पौरुषेयत्वमवशात् स्वीकर्तव्यम्। सति सकर्तृकत्वे पुरुषसम्बन्धनिबन्धनदोषवशात् नित्यत्वं प्रामाण्यञ्च न संजाघटीति। "बवरः प्रावाहणिरकामयत कुरुविन्द औद्दालकिरकामयत" इत्यादि वाक्येषु जननमरणवतां निर्देशो विद्यते। उद्दालकस्यापत्यं औद्दालकिरिति व्युत्पत्तिः। यद्येवं औद्दालकिजन्मनः प्राक् नायं भूतपूर्व इति ज्ञायते। तस्मादपि अनित्यत्वं पौरुषेयत्वञ्च वेदस्य। किञ्च "वनस्पतयः सत्रमासत, सर्पाः सत्रमासत जरद्गवो गायति मत्तकानि" इत्यादिवाक्यश्रवणात् वनस्पतीनां सर्पाणां च सत्रानुष्ठानकथनमुन्मत्त-बालतुल्यमिति वेदानां अनित्यत्वं पौरुषेत्वञ्च। तथा च व्यासेन प्रोक्तं वैयासिकं भारतमितिवत् वेदानामपि पौरुषेयत्वं युज्यते। विमतं वेदवाक्यं पौरुषेयम् वाक्यत्वात् कालिदासादिवाक्यवत् इत्यनुमानं पौरुषेयतत्वे प्रमाणम्। ततश्च वेदस्य भारतकालिदासीयरघुवंशादिवाक्यवत् पौरूषेयत्वमेव युक्तम्। वेदेषु कर्तुरस्मरणञ्च चिरकालिक-कूपादिवत् अनादरात् इत्युपपन्नम्। तथा च वेदः प्रागभावप्रतियोगितावच्छोदकधर्मवान् वाक्यत्वात् भारतादिवत् इत्यनुमानेन वेदानां पौरुषेयत्वं अनित्यत्वञ्च सिध्यति। पुरुषाश्च कठकलापकौथुमादयः। तेषां सर्वज्ञत्वसन्देहे तु ईश्वर एव कर्ता कल्प्यताम्। अत एव त्रयो वेदा अजायन्त, अग्नेः ऋग्वेदः, वायोर्यजुर्वेदः आदित्यात् सामवेद इति श्रुतिरेव उत्पत्तिं आचष्टे इति। अयमत्र सङ्ग्रहः -"प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्। तदन्यस्मिन् अनाश्वासात् न

विधान्तरसम्भवः॥'' इति **न्यायकुसुमाञ्जलिः**। प्रपञ्चितञ्चेदं **न्यायमञ्जरी-शास्त्रदीपिका-प्रमाणवार्तिकादौ** च।

अत्र मीमांसकानामाशयः -मीमांसका हि कूटस्थनित्यवर्णानां राशिं वेदम् अपौरुषेयं नित्यमिति वदन्ति। तेषामाशयः -अलौकिकः अपूर्वात्मा च वेदार्थः न कथञ्चिदपि पुरुषैः बुद्धौ आरोपयितुं पार्यते। बुद्धावनारोपयन्तश्च वाक्यानि न विरचयेयुः। काठक कालापकादि समाख्यास्तु प्रवचनातिशयेनाप्युपपद्यन्ते। स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी कठो हि केवलामिमां शाखां अध्यापयाम्बभूव। ततश्च बहुशाखाध्यायिनां सन्निधौ एकशाखाध्यायी अन्यामनधीयानः तस्यां प्रकृष्टत्वात् असाधारणं विशेषणमुपपद्यते। न चानेकपुरुषसाधारणं हि प्रवचनम्, कथं काठकत्वेनैव समाख्यायेत्, कर्तृत्वे पुनः कर्तुरेकत्वात् सा समाख्या युज्यत इति वाच्यम्। अतिशययोगेन असाधारण्यं काठकस्यैवोपयुज्यते। यो हि परम्पराया अविच्छेदेन अध्यापनप्रसितो बभूवेति। यच्च प्रावाहणिरिति जननमरणवतां निर्देश इत्युक्तम्। तत्र प्रवाहणाख्यस्य पुरुषस्याप्रसिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिरित्यर्थः। परन्तु प्र+वह्+इ इति व्युत्पत्या यः प्रवाहयति स प्रावाहणिः। बबर इति अनुकृतिशब्दः। ततश्च नित्यमर्थं वायुमेव एतौ शब्दौ निर्दिशतः। यच्चोक्तं वनस्पतयः सत्रमासतेत्यादि उन्मत्तबालवचनतुल्यमिति। तस्यायं भावः -वनस्पतय अचेतना अपि सत्रमासत इत्युक्ते किं पुनर्विद्वांसो ब्राह्मणा इति स्तुतिपराण्येव तानि वाक्यानि। नैतैः अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादिवाक्यानां काप्यनुपपत्तिः। ततश्च अध्ययनाध्यापनसंप्रदायप्रवर्तकत्वेन समाख्या उपपद्यत इति स्वीकर्तव्यम्। सर्गावसाने कालिदासादिविरचितग्रन्थेषु कर्तार उपलभ्यन्ते। वेदस्यापि पौरुषेयत्वे तत्कर्ता उपलभ्येत। न तथोपलभ्यते। ततश्च वेद अपौरुषेय इति निश्चयः। किञ्च यदुक्तम्-विमतं वेदवाक्यं पौरुषेयम् वाक्यत्वात् भारतादिवाक्यवत् इति तदनुमानं वेदः प्रागभावप्रतियोगितावच्छेदकधर्माभाववान् अस्मर्यमाणकर्तृकत्वात् आत्मादिवत् इत्यनुमानेन सत्प्रतिपक्षितम्। वाक्यत्वहेतुश्च जन्यज्ञानमूलकत्वेन सोपाधिक इति अप्रयोजकः। कर्तुरनादरात् विस्मरणमिति च न समीचीना युक्तिः। अक्षरशो विस्मरणाभावाय

पदक्रमादिपाठं निर्णीतवतां वेदाधीनस्मृत्यादिकर्तृणां सर्वज्ञानां ऋषीणां वेदकर्त्रनादरोक्तिः अतिसाहसपूर्णैवेति विस्मरणं सुतरामसम्भवि। पूर्वकालो न वेदशून्यः कालत्वात् वर्तमानकालवत्, प्राक्कालिकं वेदाध्ययनं गुर्वध्ययनपूर्वकं अध्ययनत्वात् अद्यतनाध्ययन-वत्, वेदाः न पौरुषेयाः सम्प्रदायाविच्चेदे सति अस्मर्यमाणकर्तृकत्वादित्यादिभिरनुमानैः पौरुषेयत्वं समूलमुन्मूलितं भवति। अस्मर्यमाणकर्तृककूपादौ व्यभिचार इति च न वाच्यम्। तत्रापि सामान्येन कर्तृस्मरणात् आदराभाववत्वदर्शनाच्च। वेदे पुनः सर्वजन-समाद्रियमाणत्वेऽपि कर्तुरस्मरणं पौरुषेयत्वाभावमेव स्पष्टं स्फोरयति। यदि वेदानं कर्ता कश्चिदभविष्यत् ततो अध्येतृपरम्परया अवश्यं व्यासबुद्धकालिदासादिवत् अस्मरिष्यत। नैवास्य जातु विस्मरणं संभवति। यागादेः फलसाधनतायाः प्रमाणान्तरागोचरत्वात् कर्तरि विश्रम्भादेव सर्वे वेदार्थानुष्ठाने प्रवर्तेरन्। तत्कथं कर्ता विस्मर्येत। अवश्यं हि स्मर्तव्यो न च स्मर्यते तेन स्मर्तव्यत्वे सति, अस्मर्यमाणः कर्ता शशविषाणवत् आत्मनोऽभावमेव अध्यवसाययेत्। येऽपि साटोपं पौरुषेयतां समर्थयन्ति तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणमभिधातुं प्रभवन्ति। सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं यं कञ्चन तत्र निक्षिपन्ति। केचिदीश्वरम्। अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम्, इतरे त्वनेकान्। न चेयं विप्रतिपत्तिः बहुरूपा परम्परया वेदकर्तरि मन्वादिवत् स्मर्यमाणे कथञ्चिदवकल्पते। न हि मानवे, भारते, शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद् विवदते। तस्मात् स्मर्तव्य-त्वे सति अस्मरणात् कर्तुरभाव एवाध्यवसातुं योग्यः।

यदुक्तम् अग्नेर्ऋग्वेद इति तदपि न साधु। ब्रह्म स्वयंभु, वाचा विरूपनित्यया इति श्रुतिविरोधात् अग्नेर्ऋग्वेद इत्यादिश्रुतीनां अग्निना ज्ञापित ऋग्वेद इत्यर्थपरत्वमेव युक्तम्, "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। स्वयंभूरेष भगवान् वेदो गीतः स्वयम्भुवा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः॥" इति प्रसिद्धिः। किञ्च किमिदं पौरुषेयत्वम्, इति विचारः कर्तव्यः। किं पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम्? उताहो मानान्तरेणार्थमुपलभ्य रचितत्वं पौरुषेयत्वम्। न प्रथमः, इष्टत्वात्। आकाशवत् नित्यानां सर्वगतानां कालतो देशतश्च क्रमशून्यानां वर्णानां अनित्यक्रमोच्चारणविशिष्टानां

पूर्वपूर्वक्रमानुस्मरणनिमित्ततत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां पुरूषाधीनोत्पत्तिकत्वस्य मीमांसादर्शनस्यापि सम्प्रतिपत्तेः। न द्वितीयः, कालिदासादिकृतरघुवंशादिसाधारण्यापत्या लोकोत्तरत्वाभावेन सर्वजनसमादरणीयत्वानुपपत्तेः। किञ्च कोऽयं पुरुष इति विकल्पः, येन कृत इति विचारः कर्तव्यः। किं कश्चिन्मनुष्यः, उत योगी, अथईश्वरः। तत्र नाद्यः, मनुष्ये धर्मादिज्ञानस्य वेदजन्यत्वादेव तत्र तस्य कर्तृत्वानुपपत्तिः। न द्वितीयः, तत्रापि योगिनः धर्माधर्मादिप्रमापकं किं बाह्यमिन्द्रियम्? उत आन्तरम् नाद्यः, धर्माधर्मादेः बाह्येन्द्रियायोग्यत्वात्। न द्वितीयः, आत्मयोग्यतद्गुणातिरिक्तज्ञानजनने मनसोऽप्रभविष्णुत्वात्। धर्माधर्मयोश्चात्मगुणत्वेऽप्ययोग्यत्वात्। तस्मादनेककर्तृ त्वस्याप्यनुपपत्तिः। नापि ईश्वरः कर्ता, वेदादीश्वरस्य सिद्धिः, ईश्वरश्च वेदानां प्रणेता इत्यन्योन्याश्रयस्य दुरुद्धरत्वात्। स्वप्रणीते ग्रन्थे स्वस्यैव ध्यानादिकथनानुपपत्तेश्च। तस्मात् कर्त्रस्मरणात् वेदानामपौरुषेयत्वं निराबाधम्। किञ्च अपौरुषेयत्वं नाम पूर्वकालत्वव्यापकसमानानुपूर्वीकाध्ययनविषयत्वे सति सर्वजनसमादरणीयत्वे सति अस्मर्यमाणकर्तृकत्वमिति स्वीकर्तव्यम्। अथवा पुरुषसमवेतमानान्तरजन्य ज्ञानानपेक्षोत्पत्तिकानुपूर्वीकत्वे सति अध्ययनविषयत्वम्, अथवा उच्चारणपूर्वकोच्चारणवत्वं अपौरुषेयत्वमिति वक्तव्यम्। तच्च वेदेषु सुतरां घटत इति सिद्धमपौरुषेयत्वम्। किञ्च नित्यत्वं नाम प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। इदं वर्णसामान्यस्य, आनुपूर्वीविशेषविशिष्टतत्समुदायरूपस्य वेदस्य तु नित्यत्वमपौरुषेयत्वेनैव गतार्थमिति वेदस्य नित्यत्वं अपौरुषेयत्वञ्चेति मीमांसाशयः।

**७. पूर्वमीमांसादर्शने वेदस्य स्वतः प्रामाण्यविचारः।** पूर्वमीमांसादर्शने तावत् ज्ञानस्य प्रामाण्यं स्वतः, अप्रामाण्यन्तु परत इति सिद्धान्तः। तेषां मते यया कारणसामग्र्या प्रामाण्यविषयकं ज्ञानं भवति तयैव सामग्र्या ज्ञानस्य प्रामाण्यमपि भवति। न तु अतिरिक्तकारण सामग्र्या अपेक्षा भवति। ज्ञानग्राहकसामग्रीविषये मीमांसकानां सिद्धान्तत्रयं प्रसिद्धम्-प्राभाकरीय कुमरिलभट्टीय मुरारिमिश्रीयभेदात्। ये तु ज्ञानसामान्यमेव प्रामाण्यविषयकत्वमामनन्ति ते स्वतस्त्ववादिनः। तेषां मते स्वतस्त्वञ्च स्वाश्रयीभूत

ज्ञानग्राहकसामग्रीग्राह्यत्वम्। स्वं प्रामाण्यं, ततश्च प्राभाकरमते ज्ञानमात्रस्य स्वप्रकाशक-तया स्वेनैव ज्ञानं गृह्यते। तन्निष्ठं प्रामाण्यमपि तेनैव गृह्यत इति प्रामाण्यस्य स्वाश्रयग्राहकग्राह्य-त्वात् स्वतोग्राह्यत्वम्। एवञ्च तेषां मते ज्ञानस्य स्वप्रकाशकतया ज्ञानोत्पादकसामग्री एव ज्ञानग्राहिका। अर्थात् यया सामग्र्या ज्ञानस्योत्पत्तिः तयैव तज्ज्ञानमपि उत्पद्यते गृह्यते च। तथा च तयैव ज्ञानसामग्र्या तत्प्रामाण्यमपि अवगम्यते। ततश्च तेषां मते प्रामाण्यं ज्ञानवित्तिवेद्यम्। तद्वति तत्प्रकारकत्वं तद्विशेष्यत्वावच्छिन्न तत्प्रकारकत्वे पर्यवसितम्। तदेव स्वतस्त्वम्। ज्ञानग्रहे ज्ञानत्वादिधर्मो यथा ज्ञानधर्मत्वाविशेषात् गृह्यते तथैव ज्ञाननिष्ठं विशेष्यत्व-प्रकारकत्वादिकमपि गृह्यते। एवञ्च धर्मिणि तद्वत्त्वं व्यवसायेन गृह्यते। किञ्च नीलो घट इति घटांशे नीलस्य घटत्वस्य च ग्रहात् तयोर्नीलघटत्वयोः परस्परं सामानाधि-करण्यमपि असति बाधके यथा भासते तथैव असति बाधके एकत्र ज्ञाने भासमानयोः प्रकारकत्वविशेष्यकत्वयोः अवच्छेद्यावच्छेदकत्वं प्रतीयत इति ज्ञानग्रहे तद्विशेष्य-कत्वावच्छिन्नतत्प्रकारकत्वरूपं प्रामाण्यमपि गृह्यत एवेति प्राभाकराणामाशयः। तथा च प्राभाकराणां मते स्वप्रकाशज्ञानेनैव प्रामाण्यविशिष्टज्ञानं सिध्यति। व्यवसायरूपघटादि-ज्ञानं स्वप्रकाशकं तत् ज्ञानं स्वात्मज्ञानं स्वनिष्ठप्रामाण्यञ्च सहैव गृह्णातीति ज्ञान-ग्राहकातिरिक्तानपेक्षणात् स्वतस्त्वमिति वदन्ति। तथा ज्ञानस्याप्रामाण्यं नास्त्येव, जायमानं सर्वं ज्ञानं प्रमाणमेव जायत इति उत्पत्तावपि स्वतस्त्वं वर्णयन्ति। एवञ्च स्वप्रकाशं ज्ञानं स्वोत्पत्तिक्षणेऽपि ज्ञातं सदेव उत्पन्नं भवति। ज्ञानोत्पादिका सामग्री एव ज्ञानग्राहिका स्वीक्रियते। यदि तयो र्भेदस्स्यात् तर्हि तयोः कालभेदात् कदाचिदुत्पन्नं अज्ञातमित्यपि स्यात्। एवञ्च ज्ञानस्य स्वप्रकाशतायाः भङ्गः सम्भाव्येत। ततश्च ज्ञानस्वप्रकाशतारक्षायै उभे अपि सामग्र्यौ अभिन्ने एवेति स्वीकर्तव्यम्। तथाचैतेषां मते घटोत्पादकसामग्रीसन्निधाने अयं घट इति ज्ञानं न भवति, परं घटमहं जानामीति आकारकमेव ज्ञानं उद्भवति। तस्मिन् ज्ञाने घटः, घटज्ञानम् घटज्ञाता इति त्रिपुटीविषयकमेव ज्ञानं भवतीति तेषां मते ज्ञानग्राहकसामग्री एव ज्ञानप्रामाण्यस्य ग्राहिका भवतीति सिद्धान्तः। प्रपञ्चितञ्चैतत् **प्रकरणपञ्चिकायां प्रमाण पारायणे।**

प्रामाण्यं स्वतः, अप्रामाण्यं परत इति भाट्टाः। प्रामाण्यं तदाश्रयज्ञानञ्च प्रामाण्यविशिष्टज्ञानजनितेन ज्ञातताविशेषेण अनुमेयमिति ज्ञप्तौ स्वतस्त्वम्। तथा च प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वञ्च ज्ञानग्राहकातिरिक्ताग्राह्यत्वम्, ज्ञानग्राहकातिरिक्तानपेक्षत्वं वेति भवति। ज्ञानग्राहकं ज्ञातताविशेषलिङ्गम्, तदतिरिक्तं संवादादि, तेनाग्राह्यत्वम्, तथा च ज्ञातताविशेषेणैव ग्राह्यत्वमिति फलति। तेषामियं प्रक्रिया-तेषां मते ज्ञानं स्वयमतीन्द्रियम् परन्तु ज्ञानेन विषये उत्पाद्यमाना ज्ञातता प्रत्यक्षगम्या। ज्ञाततया कारणभूतं ज्ञानमनुमानगम्यं भवति। एवञ्चास्मिन् मते ज्ञाततालिङ्गकानुमानं ज्ञानग्राहकं भवति। तेनैव ज्ञानप्रामाण्यमपि गृहीतं भवति। तथा च ज्ञानग्राहकसमग्रीमात्रग्राह्यत्वरूपं स्वतो ग्राह्यत्वं सिध्यति। घटादिविषयक ज्ञानानन्तरं ज्ञातो घट इति सर्वेषामेव भवति। तत्र घटे ज्ञातत्वं विशेषणीभूय भासते। अत्र ज्ञातत्वं न ज्ञानविषयत्वम्। पूर्वं ज्ञानस्यानुपस्थितेः ज्ञानघटितज्ञानविषयत्वरूपविशेषणज्ञानस्यासम्भवात्। अतः घटनिष्ठं घट इत्याकारकज्ञानजन्यं ज्ञानविषयत्वविलक्षणं **ज्ञातत्व**मभ्युपगन्तव्यम्। तच्च घटगतरूपादिवत् चक्षुरादीन्द्रिययोग्यम्। तस्य समवायिकारणं ज्ञातताया आश्रयीभूतो घटादिः। निमित्तकारणञ्च घटत्वप्रकारकज्ञानम्। यद्यपि घटत्वप्रकारकज्ञानमात्मनि विद्यमानं घटे कथं ज्ञाततां जनयेत्, कार्यकारणयोर्वैयधिकरण्यात्। यदि विषयतासम्बन्धेन घटत्वप्रकारकज्ञानं घटेऽपि विद्यत इति न कार्यकरणयोर्वैयधिकरण्यमित्युच्यते तर्हि विषयतयैव उपपत्तेः ज्ञातता‌स्वीकारो व्यर्थ इति प्रश्न उदीयात् तथापि भाट्टाः विषयतास्वीकारभयेन ज्ञाततां न स्वीकुर्वन्ति अपितु ज्ञानविषययोः सम्बन्धः विषयत्वमिति स्वीकुर्वन्त्यवश्यं, परन्तु तेन ज्ञानविषयत्वेन ज्ञातो घट इत्यादिज्ञानान्यथानुपपत्या विषयतातिरिक्ते ज्ञाततानामके पदार्थान्तरे तेषामाग्रह इति वक्तव्यम्। ततश्च ज्ञात इति प्रतीतिसिद्धः ज्ञानजन्यः विषयसमवेतः **प्राकट्या**परनामा अतिरिक्तपदार्थविशेषः **ज्ञातता** इति भवति। अनेनैव ज्ञाततालिङ्गेन ज्ञानस्यानुमानं भवति। तथाहि-घटो घटे घटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्वात् इति विषयपक्षकानुमानेन, घटनिष्ठज्ञाततया अपि स्वजनकज्ञानवत्तासम्बन्धेन आत्मनिष्ठतया अहं घटविशेष्यकघटत्वप्रकारकज्ञानवान् घटत्वसमानाधिकरणघटत्वप्रकारकज्ञाततावत्वात्

इत्येतादृशात्मपक्षकानुमानेन वा प्रामण्यविशिष्टज्ञानस्य अनुमितिरिति भाट्टाः वदन्ति। एवं ज्ञानाप्रामाण्यं विसंवाददुष्टकरणजन्यत्वरूपानुमान्तरवेद्यमिति च तेषामाशयः। सूचितश्चायं विषयः "नह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते, ज्ञाते तु अनुमानादवगच्छति" इति **शाबरभाष्ये** (१-१-५) **श्लोकवार्तिके** १-१-४७, ४८, १-१-२४८, एवं **शास्त्रदीपिका न्यायरत्नाकरादिषु** ग्रन्थेषु विस्तृतश्च, पूर्वपक्षविधया **न्यायमञ्जरी-न्यायभूषणम्, तर्कभाषा-तत्त्वसंग्रह-मुक्तावल्यादिषु** च विस्तृतः।

एवं दोषाभावसहकृतयावत्स्वाश्रयग्राहकसामग्रीमात्रग्राह्यत्वम्, ज्ञानग्राहकसामग्रीजन्य ग्रहविषयत्वं वा स्वतोग्रह्यत्वम्, अन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थत्वं वा स्वतोग्राह्यत्वं स्वतः प्रमाणत्वमिति लक्षणान्युक्त्वा प्रमाणानां प्रामाण्यं स्वतः न परतः, तच्च स्वतः प्रामाण्यं उत्पत्तौ ज्ञप्तौ प्रवृत्तौ च भवति। यत्सामग्री प्रयुक्तं ज्ञानजन्म तत्प्रयुक्तमेव तस्य प्रामाण्यं जन्मनि इति उत्पत्तौ स्वतः, यत्प्रयुक्तं अथवा यन्निमित्तं ज्ञानस्य स्वरूपस्फुरणम् तन्निमित्तमेव तस्य प्रामाण्यस्फुरणमिति ज्ञप्तौ स्वतः, ज्ञानजन्ममात्रादेव ज्ञानफलं न सहकार्यान्तरव्यापारापेक्षा इति प्रवृत्तौ स्वतः। एवमुत्पत्तौ ज्ञप्तौ प्रवृत्तौ च स्वत एव प्रामाण्यमिति **प्रमाणलक्षणे** सर्वज्ञात्ममुनयः।

मुरारिमिश्रमते तु स्वतो ग्राह्यत्वं प्रामाण्यग्रहप्रतिबन्धकाभावकालीनयाक्तस्वाश्रया-नुव्यवसायग्राह्यत्वम्। तथा च यथा ज्ञानं अनुव्यवसायेन गृह्यते तथैव तन्निष्ठं प्रामाण्यमपि अनुव्यवसायेनैव गृह्यत इति भवति। एतन्मते ज्ञानग्राहकसामग्री अनुव्यवसायसामग्री एव। तथा च ज्ञानग्रहकाले ज्ञाननिष्ठं ज्ञानत्वादिकं यथा गृह्यते तथैव ज्ञाननिष्ठं विशेष्यत्वप्रकारक त्वादिकमपि गृह्यते। एवञ्चांयं घट इति व्यवसायेन इदमि घटत्वं प्रकारीभूय भासते। अनुव्यवसायेन तादृशेदं-विशेष्यकत्वं गृह्यते। अतश्चानुव्यवसायः घटत्ववत् इदंविशेष्यकत्वम्, घटत्वप्रकारकत्वञ्च गृह्णाति। अयञ्च घटश्चेति समूहालम्बनज्ञाना नुव्यवसायतः "अयं घट" इति विशिष्टज्ञानानुव्यवसायस्य वैलक्षण्याय विशिष्टज्ञाना-नुव्यवसाये प्रकारकत्व-विशेष्यकत्वयोः अवच्छेद्यावच्छेदकभावाभ्युपगमात् अयं घट इति ज्ञानानुव्यवसाये घटत्ववत् इंदविशेष्यकत्वाच्छिन्नघटत्वप्रकारकत्वं अवगाहत इति

घटत्ववद्विशेष्यकत्वावच्छिन्नघटप्रकारकत्वरूपप्रामाण्यावगाही तादृशानुव्यवसाय इति वदन्ति। ततश्च मुरारिमिश्रमतं न्यायमतानुसारि दृश्यते। तेषां मते न्यायमते इव ज्ञानं अनुव्यवसायेन गृह्यते। परन्तु न्यायमते अनुव्यवसायेन ज्ञानं केवलं गृह्यते, न तु तस्य प्रामाण्यमपि। मुरारिमिश्रमते तु तस्य प्रामाण्यमपि अनुव्यवसायगृहीतं भवति। यतस्तेषां मतेऽपि गुरु भाट्टमतयोरिव स्वतोग्राह्यत्वं ज्ञानग्राहक-सामग्रीमात्रग्राह्यत्वं स्वीकृतम्। ततश्च मिश्रमते अनुव्यवसायः ज्ञानस्य तत्प्रामाण्स्य च ग्राहक ह्वति सिद्धान्तः। मुरारिमिश्रमतं तर्कसंग्रहदीपिका-नीलकण्ठी, प्राच्यभाषासम्मेलनपत्रिकापञ्चमभागे (Aioc. vol. V pp. 967-994) च वर्णितं दृश्यते। ततश्च वेदस्यापौरुषेयत्वं नित्यत्वञ्च स्वीकुर्वतां मीमांसकानां मते भ्रमप्रमादाद्यप्रामाण्यप्रयोजकस्याभावः। ततश्च कारणदोष-बाधकज्ञान रहितागृहीतग्राहित्वेन प्रामाण्यं सिद्धम्। आगमस्य स्वतन्त्रप्रामाण्यं स्वीकुर्वतां तेषां मते शब्दार्थयोस्सम्बन्ध औत्पत्तिकः। धर्मे च प्रमाणं चोदना। सा च वेदशब्दरूपा। ततश्च चोदनाशब्दनिष्ठं स्वतस्त्वं नाम अनधिगताबाधितार्थबोधकत्वंम्, ज्ञाननिष्ठं स्वतः प्रामाण्यन्तु अनधिगताबाधितार्थविषयकज्ञानत्वम्। तस्मात् वेदः स्वतः प्रमाणमिति तेषां सिद्धान्तः। प्रपञ्चितञ्चेदं "चोदनालक्षणोऽर्थो धर्म" "न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति" "तस्मात् तत्प्रमाणमनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यम्, पुरुषान्तरं वापि, स्वयं प्रत्ययो ह्यसौ" इति **शाबरभाष्ये** (१-१-२, १-१-५) एवं **श्लोकवार्तिके** (१-१-२, १-१-५) **न्यायमञ्जर्याम्**-ख्यातिवादनिरूपणावसरे-"अजातमिथ्याशङ्कश्च न संवादमपेक्षते। तस्मान्न कश्चित्परतः प्रामाण्यमधिगच्छति। एवं स्वतः प्रमाणत्वे सिद्धे वेदेऽपि सा गतिः"॥ **शास्त्रदीपिकायां** (१-१-५) च प्रतिपादितम्।

# द्वितीयं कुसुमम्

## पूर्वमीमांसादर्शने प्रमाणानि

यद्यपि पूर्वमीमांसादर्शनस्य लक्ष्यं वेदार्थविचारपूर्वकं धर्माधर्मनिर्णयः न तु प्रत्यक्षादिप्रमाणनिरूपणम्, तथापि धर्माधर्मयोः केवल वेदैकवेद्यत्वनिरूपणाय प्रत्यक्षादि-प्रमाणान्तरावेद्यत्वनिरूपणाय च प्रत्यक्षादिप्रमाणानां वर्णनं कर्तव्यमापतितम्। एवं वेदार्थ-विचारोपयोगीनि धर्म-धर्मभेद-धर्माङ्गत्व-क्रम-अतिदेश-ऊह-बाधाख्यानि शास्त्रीयाणि अलौकिकानि च वर्णितानि। तेषु प्रत्यक्षादीनि लौकिकानि अन्यानि अलौकिकानीति विवेकः। प्रथमतः किंम् नाम प्रमाणमिति विवेक्तव्यम्। अनधिगताबाधितार्थनिश्चायकं प्रमाणमिति भाट्टमीमांसकाः। "तस्माद् दृढं यदुत्पन्नं न विसंवादमृच्छति ज्ञानान्तरेण विज्ञानम्, तत् प्रमाणं प्रमीयताम्" इति **श्लोकवार्तिके** (पत्र ६६)। **ज्ञाततांप्राकट्यापर** वाच्यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं ज्ञानं प्रमाणमिति भाट्टसिद्धान्तः। ततश्च ज्ञातताप्राकट्यापरपर्यायवाच्यप्रमेयाश्रित प्रकाशविशेषसाधनत्वं प्रमाणसामान्यलक्षणम्। अयं घट इति ज्ञाने ज्ञातताप्राकट्यापरपर्यायवाच्य प्रमेयाश्रितप्रकाशविशेषसाधनत्वस्य सत्वात्। ज्ञानस्य ज्ञातताजनकत्वे प्रमाणन्तु ज्ञातो घटः प्रकटो घटः इत्यादि प्रत्यक्षमेव। ज्ञानं स्वकर्मणि किञ्चित् करोति क्रियात्वात् छिदिक्रियावत् इत्यनुमानं प्रमाणम्। स्मृति-व्यतिरिक्तसंविदनुभूतिः प्रमाणमिति प्राभाकराः। "प्रमाणमनुभूतिस्सा स्मृतेरन्या" इति **प्रकरणपञ्चिका**। स्वोत्पत्तौ संविदन्तरानपेक्षा या अनुभूतिः तद्वत् प्रमाणमिति, स्मृति-व्यतिरिक्तत्वे सति विज्ञानत्वं वा प्रमाणसामान्यलक्षणं प्राभाकराणां मते। प्रमासाधनं प्रमाणमिति **प्रमाणलक्षणे**। प्रमाग्रहणं संशयविपर्ययतर्क अनध्यवसायविकल्प-अनुवाद-स्मृत्यादिषु प्रमाणाभासेषु अतिव्याप्तिनिरासार्थम्। कर्तृकर्मफलव्यवच्छेदार्थं साधनग्रहणम्। प्रमेयव्याप्यं प्रमानियतसामग्री प्रमाणमिति च नातिप्रसिद्धो मीमांसैकदेशी—"अनुभूतिः प्रमाणं सा स्मृतेरन्येति केचन। अज्ञातचरतत्वार्थनिश्चायकमथापरे। प्रमेयव्याप्यमपरे

प्रमाणमिति मन्वते। प्रमानियतसामग्री प्रमाणं केचिदूचिरे''॥ इति **तार्किकरक्षायाम्।** तत्र प्रमाकरणत्वं प्रामाण्यम्। प्रमात्वं नाम यथार्थानुभवत्वम्, याथार्थ्यञ्च तद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वम्, अज्ञातविषयकं बाधकज्ञानरहितज्ञानं वा प्रमेति, अगृहीत-ग्राहित्वं प्रमाण्यमिति **भाट्टचिन्तामणौ।**

प्रत्यक्षानुमानोपमानशास्त्रार्थापत्यभावाः प्रमाणानीति **जैमिनिसूत्रम्।** प्रत्यक्षा-नुमानोपमान शब्दार्थापत्यमनुपलब्धयः प्रमाणानीति भाट्टाः। प्रत्यक्षादीनां पञ्चानां प्रमाणानां भावविषयकत्वेन अभावविषयकं अनुपलब्धिरूपं आवश्यकमिति भाट्टानामाशयः। प्रत्यक्षानुमानोमानशाब्दार्थापत्तिरिति प्राभाकराः। अभावरूपप्रमेयस्यैवाप्रसिद्धत्वात् तत्प्रमापणाय प्रमाणान्तरस्यानुपलब्धिरूपस्याभ्युपगो निरर्थक इति तेषामाशयः।

तेषु ''सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्'' इति **जैमिनिसूत्रम्।** प्रत्यक्षप्रमाणतया अभिमतानां चक्षुरादीनां विद्यमानेन रूपरसाद्यर्थेन सन्निकर्षे सति प्रमातुर्यादृशं ज्ञानमुत्पद्यते तादृशज्ञानस्योत्पादकं प्रत्यक्षमित्युक्तम्। तत्र पदार्थैस्साकं साक्षादिन्द्रियाणां सन्निकर्षे सति जायमानं प्रत्यक्षमिति परेषामिव मीमांसकानामपि सम्मतम्। प्रत्यक्षकारणीभूतानि मनोन्तानि षडिन्द्रियाणि। इन्द्रियार्थ सन्निकर्षविषये तु नैया यिकाभिमतेषु संयोगः संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसम-वायः, विशेषण विशेष्यभाव इति षट्सु आद्यान् त्रीन् स्वीकुर्वन्ति। आकाशगुणस्य शब्दस्य ग्रहणाय श्रोत्रेण समवायसन्निकर्षो नैयायिकानाम्। ''दिशःश्रोत्रं'' इति तैत्तरीय ब्राह्मणवाक्यं प्रमाणयन्तो मीमांसकाः श्रोत्रस्य दिगात्मकतां स्वीकुर्वन्ति, ''यदि ह्यवश्यं वक्तव्यं तार्किकोक्तविपर्ययः। ततो वेदानुसारेण कार्या दिक्श्रोत्रता मति रिति **श्लोकवार्तिके।** ततश्च शब्दस्य द्रव्यत्वेन संयोगरूपसन्निकर्षस्य सम्भवात् न समवायसंनिकर्षस्यावश्य-कता। शब्दवृत्तिसामान्यस्य संयुक्ततादात्म्यसन्निकर्षेणैव ग्रहणसम्भवेन जातिगुणकर्मणां द्रव्येण तादात्म्याङ्गीकारात् न समवेतसमवायोऽप्यपेक्षितः। ''रूपादीनां तु संयुक्त-द्रव्यतादात्म्यमेव नः। प्रतीतिकारणम् तस्मान्न सम्बन्धान्तरस्पृहा'' इति **श्लोकवार्तिके।** एवमभावस्य अनुपलब्धिरूपप्रमाणान्तरगोचरस्य प्रत्यक्षज्ञानाभावेन तत्कृते सन्निकर्षो

नापेक्ष्यत इति विशेषणविशेष्यभावरूप: सन्निकर्षोऽपि नाभ्युपेयते। एवञ्च षडिन्द्रियात्मकं त्रिसन्निकर्षकमेव मीमांसकमते प्रत्यक्षप्रमाणम्। तच्च प्रत्यक्षं द्विविधम्-निर्विकल्पकम्, सविकल्पकञ्चेति, इन्द्रियसन्निकर्षानन्तरं विषयस्वरूपमात्रावगाहि शब्दानुगमशून्यं यत् संमुग्धाकारं ज्ञानं जायते तन्निर्विकल्पकम्। तदानीं तत्र जातिगुणक्रियादिकल्पना: न क्रमन्ते। अतश्च जात्यादिकल्पनाशून्यं ज्ञानं निर्विकल्पकम्। जात्यादिविशिष्टवस्तुविषय मिन्द्रियसन्निकर्षानन्तरं शब्दस्मरणसहकृतं गौरियं रक्तोऽयं इत्यादिविशिष्टज्ञानं यत् तत् कल्पनाविशिष्टत्वात् सविकल्पकमित्युच्यते। ''ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यथा। बुध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता'' चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति। स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते॥ अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्। न विशेषो न सामान्यं तदानीमनुभूयते'' इति **श्लोकवार्तिके**'' (पत्र, १५०, ३२१, १४७) एवं निर्विकल्पकज्ञानं जात्यादिकल्प नारहितं वस्तुमात्रग्राहीत्युक्तम्। सविकल्पके च पञ्चधा विकल्पो भवति-जाति द्रव्य गुण कर्म नामभिः। तत्र गौरिति जातिविकल्पः। दण्डवानिति द्रव्यविकल्पः। नीलोऽयमिति गुणविकल्पः। पावकोऽयमिति क्रियाविकल्पः। देवदत्तोऽयमिति नामविकल्पः। एवं सुरभि चन्दनमित्यत्र सौरभांशे स्मृतित्वम्, चन्दनांशे चाक्षुषत्वम्। योगिनां असन्नि-कृष्टविषयकप्रत्यक्षन्तु निरन्तरचिन्तनात्मकभावनाविशेषजन्यमेवेति भावनाबलोत्पन्नं ज्ञानं स्मृतिरेव तादृशयोगिनामप्रसिद्धेरिति भाट्टानुयायिनां मतम्।

प्राभाकरमते तु साक्षात्प्रतीतिः प्रत्यक्षमित्युच्यते, ''साक्षात् प्रतीतिः प्रत्यक्षम्। साक्षात् प्रतीतिः स्वरूपप्रतिपत्तिः। स्वस्यैव रूपं स्वरूपम्-असाधारणरूपमित्यर्थः। यस्य वस्तुनो यदसाधारणं स्वरूपं तेनैव रूपेण या व्यवहारयति सा साक्षात् प्रतीतिः अव्यवहितप्रतीतिः साक्षात्प्रतीतिः। अव्यवहितत्वञ्च स्वविषयानन्तर्गत ज्ञानान्तराव्यव-हितत्वम्। साक्षात्त्वं च स्वकालाकालित वस्तुसत्तावबोधकत्वम्''। (इति **प्राभाकरविजये**)। साक्षात्प्रतीतिः प्रत्यक्षम्। साक्षात्त्वञ्च आपरोक्ष्यं विशदावभास इति। तच्च सर्वसंवित्तीनां आत्मस्वात्मांशयोः ऐन्द्रियकज्ञानेषु तु अंशत्रयानुगत साक्षात्कार-साक्षात्त्वव्यवहारहेतुः

पारोक्ष्यविलक्षणः स्वानुभवसिद्धो धर्मविशेषः। इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमिति तु न लक्षणम्। स्मृतेरात्मस्वांशयोरव्याप्तेः। स्मृतावप्यंशद्वयमैन्द्रियकज्ञानम् इव साक्षादवभासते। अतस्साक्षात् व्यवहार हेतुर्धर्म इत्येव लक्षणम्। इति **तन्त्ररहस्ये**।

तत्र लक्षणवाक्यघटकं साक्षात्त्वं स्वेन रूपेण मानमिति, स्वेत्पत्तौ स्वविषयान-न्तर्गतार्थान्तरज्ञानानपेक्षस्वभावमिति, स्वकालाकलित वस्तुसत्तावबोधकत्वञ्चे ति त्रिविधं स्वीकृतम्। अनुमाने तु लिङ्गादिसम्बन्धितारूपेण वस्तुनो भानमिति न तत्र साक्षात्त्वं स्वेन रूपेणेति नातिव्याप्तिः। सविकल्पकप्रत्यक्षे नामादिरूपतो भानेऽपि स्वरूपतो भानमस्तीति नाव्याप्तिः। स्वोत्पत्तौ स्वविषयानन्तर्गतार्थान्तरज्ञानानपेक्षस्वभावत्वं साक्षात्त्वमिति द्वितीयपक्षेणापि न व्यभिचारः। सविकल्पकज्ञानस्य निर्विकल्पकसापेक्षत्वेऽपि स्वविषयान-न्तर्गतार्थान्तर विषयत्वाभावान्न दोषः। स्वकालाकलित वस्तुसत्तावबोधकत्वं साक्षात्त्वमिति तृतीयपक्षेणापि अनुमानं व्याप्तिकालावच्छिन्नवस्तुसत्तावबोधकमिति कालाकलित-त्वाभावात् न प्रत्यक्षं भवति। एवञ्च साक्षात्प्रतीतिः प्रत्यक्षमिति लक्षणम्।

प्राभाकरमते घट चक्षुस्संयोगे जाते नैयायिकानामिव अयं घट इति व्यवसायात्मकं ज्ञानं न स्वीक्रियते। किन्तु घटमहं जानामि इत्यनुव्यवसायात्मकं ज्ञानमेव स्वीक्रियते। ज्ञानं ज्ञेयम्, ज्ञाता मितिः माता मेयम् इति चैतत् त्रितयं **त्रिपुटी**त्यभिधीयते। सर्वेषु ज्ञानेषु आत्मा कर्तैव न तु कर्म। परसमवेतक्रियाजन्यफलशालित्वं कर्मणो लक्षणम्। अतस्स जडो भवति। घटादिविषयस्तु जडमेव। यदि ज्ञानमपि जडं स्यात् तर्हि समस्तस्यापि जगतः अन्धता-प्रसक्तिः। तस्मात् ज्ञानं स्वप्रकाशकं अर्थात्मनोः प्रकाशकञ्च। तच्च ज्ञानं आश्रयविधया आत्मानं, विषयविधया च घटादिकं प्रकाशयति।

अत्र ज्ञानं यद्यपि न स्वात्मानं विषयीकरोति न वा आत्मानम्, तथापि तादात्म्येन स्वस्मिन् व्यवहारं प्रयोजयतीति कश्चन पक्षः। ज्ञानं स्वं स्वाश्रयञ्च विषयीकुर्वत् व्यवहारं स्वाश्रयव्यवहारञ्च प्रयोजयतीत्यपरः पक्षः। पक्षोऽयं प्रकरणपञ्चिकायां तत्त्वालोकप्रकरणे (पत्र १४७) विस्तृतः। प्राभाकरमते सन्निकर्षास्त्रय एव-संयोगः संयुक्तसमवायः समवायश्चेति। रूपत्वादीनामभावात् संयुक्तसमवेतसमवायो नाश्रितः। शब्दत्वस्याभावात्

समवेतसमवायोऽपि नाश्रितः। अभावस्य चाभावात् समवायस्य च प्रत्यक्षत्वा-भावात्—विशेषणविशेष्यभावोऽपि नाश्रितः।

तच्च प्रत्यक्षं-निर्विकल्पकं सविकल्पकञ्चेति द्विविधम्। तयोर्निर्विकल्पकं स्वरूपविषयम्। विषयेण इन्द्रियसम्प्रयोगानन्तरं प्रथमतः द्रव्यगुणजातिषु स्वरूपमात्रज्ञानं जायते। तस्य ज्ञानस्य जातिगुणयोरप्यवभासात् न द्रव्यमात्रं विषयः। अतश्च योग्यं सर्वमपीति निर्विकल्पकं स्वरूपविषयम्। सविकल्पकन्तु विशिष्टविषयम्। निर्विकल्पक दशायां वस्त्वन्तरानुसन्धानशून्यतया जातेरनुवृत्तिर्निवृत्तिर्वा न प्रतीयते। सविकल्पक दशायां तु तदनुसन्धाने पूर्वाकारावमर्शेन जातेरनुवृत्तिप्रतीतिसम्भवः। अयं घटः, अयमपि घटः, न तु पट इति विशिष्ठ प्रतीतिसम्भवः। तथा गुणप्रतीतावपि। पूर्वं द्रव्यगुणयोरन्योन्यं व्यावर्त्यव्यावर्तकभेदो न प्रतीयते। सविकल्पकदशायां पश्चादेव प्रतीयते। शुक्लो घटः, न तु कृष्ण इति विशिष्ट विषयक प्रतीतिसम्भव इति सविकल्पम् विशिष्ट प्रतीतिविषयमिति स्वीक्रियते। उक्तञ्च **प्रकरणपञ्चिकाया अमृतकलायाम्**—"सविकल्पा अविकल्पा च प्रत्यक्षा बुद्धिरिष्यते।-----स्वरूपविषयेतरा"॥

**भाट्टचिन्तामणौ** तु ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणान्तरं वर्णितम्। अनुमित्युपमितिशाब्दबोध अर्थापत्तीनां स्मृतेश्च ज्ञानकरणकत्वात् नातिव्याप्तिः इत्युक्तम्।

**अनुमानम्**—यद्यपि सूत्रकारेण प्रमाणानां संख्या कण्ठतः न विशिष्योक्ता परन्तु तेषां प्रमाणानां तत्र विचारात् भाष्यवार्तिकादिषु षट् प्रमाणानीति स्वीकृत्य तेषां लक्षणान्युपवर्णितानि। तत्र अनुमानस्य प्रमाण्यं स्मृतिप्रामाण्याधिकरणे (१-३-३) "कर्तृसामान्यात् प्रमाणमनुमानं स्यादिति" **सूत्रे** उक्तम् स्मृत्यनुष्ठानकर्त्रैक्यात्-वेदमूल-कमनुमानं प्रमाणं स्यादित्यर्थः। "ज्ञातसम्बन्धस्य एकदेशदर्शनादेकदेशान्तरेऽसन्नि-कृष्टेऽर्थे बुद्धिरनुमानम्" इति **शाबरभाष्ये** (१-३-३) श्लोकवार्तिकव्याख्या**तात्पर्यटीका-याम्**, (१-३-३) **श्लोकवार्तिके** (१-३-३) भाष्यवाक्यार्थवर्णनावसरे च दृश्यते। पक्षधर्मिणि एकदेशिनि पर्वतादौ, एकदेशदर्शनात्—धूमाद्यात्मकलिङ्गरूपैकदेशदर्शनात् एकदेशान्तरे—वह्न्याद्यात्मकलिङ्गरूपैकदेशान्तरे असन्निकृष्टे—इन्द्रियसन्निकर्षाभावव

त्यर्थे या बुद्धिरुत्पद्यते तदनुमानमित्यर्थः। व्याप्यदर्शनादसन्निकृष्टार्थज्ञानमनुमान-मिति **मानमेयोदये।** यथा पर्वते धूमवत्त्वदर्शनात् अग्निमत्त्वज्ञानम्। यस्य यादृशस्य येन यादृशेन सह साक्षाद्वा प्रणाड्या वा यादृशः सम्बन्धः -संयोगः समवायः एकार्थसमवायः कार्यकारणत्वमन्यो वा तादात्म्यलक्षणः, दृष्टान्तधर्मिषु नियतो ज्ञातः तं तादृशं साध्यधर्मिषु दृष्टवतः तस्मिन् तादृशे तादृशसम्बन्धसम्बन्धिनि प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यां अपरिच्छिन्ने या बुद्धिः तत् अनुमानम्। यथा धूमस्यानुपरतोर्ध्वगमनस्याग्निसाहित्यं महानसादिषु नियतमुपलब्धवतः पर्वते तद्दर्शनादग्निज्ञानम्। इति **शास्त्रदीपिकायाम्। भाट्टचिन्तामणौ** तु सामान्यरूपेण ज्ञातव्याप्तिकस्य व्यक्तिविशेषदर्शनजन्यं सन्दिग्ध-साध्यवदधिकरणकं, असन्निकृष्टसाध्यविषयकं निश्चयरूपं ज्ञानमनुमितिः तत्करणमनुमानमिति, व्याप्यतावच्छेदक प्रकारकपक्षधर्मतानिश्चयजन्यं ज्ञानमनुमिति-स्तत्करणमनुमानमिति लक्षणं वर्णितम्। तत्र व्याप्यं न्यूनदेशकालवृत्ति, यथा धूमो वह्न्भाववति ह्रदादौ न वर्तते। व्यापकं नाम अधिकदेशकालदृत्ति, यथा वह्निः धूमाभाववति अयःपिण्डादौ वर्तते। ततश्च यत्र साध्यहेत्वोस्समदेशकालवृत्तित्वं सा समव्याप्तिः। यत्र साध्यमधिकदेशकालवृत्ति, हेतुश्च न्यूनदेशकालवृत्तिस्सा विषमव्याप्तिरिति व्याप्तिद्वयं भवति। तत्र व्याप्तिर्नाम "सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना" इति **श्लोकवार्तिके** (पत्र ३०५) ततश्च साध्येन हेतोस्सम्बन्धो व्याप्तिरित्यर्थः। सा च व्याप्तिः भूयोदर्शनेन गृह्यते। "भूयोदर्शनगम्या हि व्याप्तिस्सामान्यधर्मयोः। ज्ञायते भेदहानेन क्वचिच्चापि-विशेषयो" रिति **श्लोकवार्तिके** (पत्र ३०८) एवञ्च व्याप्तिस्मृतिपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरिति लक्षणं भवति। मानमेयोदये तु स्वाभाविकस्सम्बन्धो व्याप्तिः, स्वाभाविकत्वं चोपाधिराहित्यम्, इत्युक्तम्। **भाट्ट चिन्तामणौ** तु नव्यनैयायिकशैलीं नव्यन्यायसिद्धान्तव्याप्तिलक्षणञ्चानुरुध्य चिन्तामणि गादाधर्यादिप्रोक्तमेव लक्षणं वर्णितम्—(१) साध्यवदन्यावृत्तित्वम्, (२) हेतुसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेकसाध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यम्, (३) प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोगितावच्छेद कावच्छिन्नानधिकरण हेत्वधिकरणवृत्त्यभाव प्रतियोगिता-

सामान्ये यद्धर्मावच्छिन्नत्व यत्सम्बन्धावच्छिन्नत्वोभावस्तेन सम्बन्धेन तद्धर्मावच्छिान्नस्य व्याप्तिः, (४) हेतुसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्वा-वच्छिन्नवृत्तित्वं व्याप्तिः, (५) व्यापकसम्बन्धमात्रं व्याप्तिरिति कुमारिलभट्टलक्षणञ्चेति व्याप्तिलक्षणानि वर्णितानि। सेयं व्याप्तिः भूयोदर्शनैः व्यभिचारादर्शनसहायैरवगम्यते। आदौ तावत् महानसादौ भूयो भूयो धूमस्याग्निसम्बन्धं पश्यन् क्रमेण च महानसत्व-गृहत्वग्रामत्वादीन् उपाधित्वेन आशङ्क्य व्याभिचारदर्शनेन निरस्यन् अन्यानप्युपाधीन् निरुप्य योग्यानुपलम्भेन निराकुर्वन् प्रमाणोत्पत्यनुगुणतर्केण भूयोदर्शनोपाध्यभावग्रहण-जनितसंस्कारसहितेनेन्द्रियेण एकरुप एव धूमाग्न्योः स्वाभाविकस्सम्बन्ध इति निश्चिनोति। तत्रानुमान हेतोः व्याप्तेरवगमनकाले महानसवर्तिधूमे एव तादृशव्याप्तेर्गृहीतत्वात् कालान्तरे पक्षवृत्तिधूमव्यक्त्यन्तरेण अनुमितिर्नोपपद्यते। तस्यं पूर्वं वह्निव्याप्तेरनवगमात् इति सङ्कटमिमं परिजिहीर्षवो नैयायिकाः महानसे यदा एकस्याः धूमव्यक्तेः प्रत्यक्षं तदा कालान्तरवृत्तीनां सर्वासामेव धूमव्यक्तीनां प्रत्यक्षं परिकल्प्य, तासु तदानीमेव वह्निव्याप्तिरपि गृहीता भवतीति स्वीकुर्वन्ति, तत्रानुमितेरपि प्रत्यक्षत्ववारणाय साक्षादिन्द्रिय सन्निकर्षवन्तं पदार्थं विषयीकृत्य जायमानं ज्ञानमेव प्रत्यक्षमिति सर्वेषां दार्शनिकानां नियमः। सत्येवं महानस-वृत्तिधूमप्रत्यक्षे यथा संयोगस्सन्निकर्षः तथा तत्काले जायमानधूमान्तरप्रत्यक्षेऽपि केनचित् सन्निकर्षेण भवितव्यम्। एतत्कृते सामान्यलक्षणसन्निकर्षः कल्प्यते। इन्द्रियेण साक्षात् सम्बद्धो धूमः, तद्वृत्तिसामान्यं धूमत्वम्, एतच्च देशान्तर कालान्तरवृत्ति-सर्वधूमव्यक्तिषु वर्तत इति एतादृशसामान्यद्वारा तादृश धूमान्तरव्यक्तीनामपि सन्निकर्षवत्वात् महानसधूमप्रत्यक्षकाले संयोगरुपसन्निकर्षेण अन्यासामपि धूमव्यक्तीनां प्रत्यक्षविषय-त्वमुपपद्यते इति नैयायिकाः। तदिदं मीमांसकानामनभिमतम्। अमीषामयमाशयः - यत्र यस्याः व्यक्तेरनुमितिः तत्र व्याप्तिसम्पत्तये तया व्यक्त्या अनुभूतपूर्वया भवितव्यमिति न निर्बन्धः, येन तदनुरोधेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति, यो यो धूमवान् स स वह्निमानिति अनुमानोपयुक्तायाः व्याप्तेस्स्वरुपमम्युपगच्छन्तः तादृशव्याप्ति-ग्रहणाय सामान्य-लक्षणाप्रत्यासत्तिं अनुमन्येमहि अपितु यज्जात्तीयेन अनुमानं तज्जातीयस्य यत्र यत्र धर्मिणि

दर्शनं तत्र तत्र नियतं लौकिकप्रत्यक्षगम्यं साध्यसजातीय सामानाधिकरण्यं व्याप्तिः। इयमेव अनुमानोपयोगिनी, इयं च यस्य यावन्ति सम्भवन्ति तस्य तावद्भिः भूयोदर्शनैः लौकिकप्रत्यक्षात्मकैरेव दृष्टेषु व्याभिचारादर्शनसहकृतैः अवगम्यत इति वदन्तः सामान्यलक्षणाप्रत्यासत्तिर्न स्वीकर्तव्येति। एवं चक्षुस्सन्निकृष्टे चन्दनखण्डे सुरभि चन्दनमिति प्रत्यक्षं जायते। तत्र संयोगसन्निकर्षेण पार्थिवद्रव्यस्य चन्दनस्य प्रत्यक्षविषयत्वे उपपद्यमाने चक्षुरिन्द्रियाग्राह्यस्य सौरभस्य प्रत्यक्षविषयत्वं नोपपद्यते। अतः द्रव्यग्रहणकाले यथाकथमप्युपस्थितस्य सौरभस्य साक्षाच्चक्षुस्सकृिष्टचन्दनप्रत्यक्षे भानमङ्गीकर्तव्यम्। विना च सन्निकर्षमेतदयोगात्, सन्निकर्षान्तरस्यासम्भवाच्च तदुपस्थितिरेव सन्निकर्ष इति ज्ञानरूपोऽयं ज्ञानलक्षणप्रत्यासत्तिरूपो व्यापारस्स्वीकृतः। परं मीमांसकाः प्राक्तन-सौरभानुभवजनित संस्कारसचिवेन इन्द्रियसंन्निकर्षेण सुरभि चन्दनमिति प्रत्यक्षे उपपद्य-माने न ज्ञानलक्षणाप्रत्यासत्तेरावश्यकतेति वदन्ति। सौरभांशे स्मृतित्वम्, इतरांशे चाक्षुषानुभवत्वमिति वदन्ति। प्रत्यभिज्ञायामिव, संशयेष्विव च अंशतः विरुद्धधर्मसमावेश इति साङ्कर्यदोषस्याकिञ्चित्करत्वादिति मीमांसाशयः। एवं भावनाबलजं ज्ञानं स्मृतिरेवेति वदन्तः योगज प्रत्यासत्तिमपि न स्वीकुर्वन्ति। स्पष्टञ्चेदं **श्लोकवार्तिक मानमेयोदय शास्त्रदीपिकादौ।** परन्तु नव्यमीमांसक ग्रन्थे भाट्टचिन्तामणौ सिद्धसुखविषयगत प्रवृत्त्यभावात् असिद्धसुखज्ञानविषयक प्रवृत्तिसिध्यर्थं, अरण्यस्थदण्डादौ घटहेतुताग्रहार्थम् एकस्यां घटव्यक्तौ घटपदस्य शक्त्यवगमे तस्मात्पदात् घटान्तरबोधोत्पत्यर्थञ्च सामान्यलक्षण प्रत्यासत्तिस्स्वीकर्तव्येति, एवं सौरभांशे सौरभत्वांशे वा प्रत्यासत्तेरभावात् चक्षुषा ज्ञातस्य सुरभिचन्दनखण्डस्य सुरमि चन्दनमिति ज्ञानं न स्यादिति ज्ञानलक्षणप्रत्यासत्तिरपि स्वीकर्तव्येति साधिता। एवं भाट्टदीपिकाव्याख्याने **भाट्टचिन्तामणौ** च योगजप्रत्यासत्तिरपि स्वीकृता। तस्यायमाशयः —योगजप्रत्यासत्तिपराणां पुराणानां अर्थवादत्वेन विधेयार्थ-स्तुतिमात्रपरकतया व्याख्यानेऽपि स्वशक्यार्थबोधकत्वस्य अवर्जनीयतया योगिनां सिद्धिरव्याहतैव। तेषां स्वार्थे प्रामाण्याभावेऽपि अगस्त्य-वसिष्ठ-विश्वामित्र-व्यासप्रभृतीनां समुद्रपान-ब्रह्मास्त्रग्रसन-त्रिशङ्कुस्वर्गसृष्टि-भारतयुद्धहतपुनरागमनाद्यत्यन्ताशक्यार्थानु-

ष्ठानस्य असिद्धिप्रसङ्गात्। किञ्चार्थवादानां स्वार्थे प्रमाणाभावे घृतेन शर्कराणामञ्जनम्, उच्चैस्त्वादीनां वेदधर्मत्वम्, अश्वप्रतिग्रहेष्टेः दातृकर्तृकत्वमित्याद्यनेकसिद्धान्तभङ्गा-पत्तिः। तस्माद्योगिनां योगज प्रत्यासत्तिरङ्गीकार्येति। किन्तु योगिनां प्रत्यक्षस्य धर्माधर्मप्रामाण्यासम्भव एव मीमांसातात्पर्यम्। प्रमाणान्तरसिद्धार्थदर्शित्वात् योगिनां न कोऽपि नूतनार्थसिद्धिस् सिध्यति। अन्यथा शशशृङ्गदीनामपि सिध्यापत्तेः। किञ्च योगिप्रत्यक्षेण अपूर्वपदार्थसिध्यङ्गीकारे सर्वदर्शनेषु सर्व प्रमाणसिद्धपदार्थानां तेनैव सिद्धिसम्भवात् अक्षपादादीनां इतर प्रमाणनिरूपणं निरर्थकं स्यात्। तस्माद्धर्माधर्माविव न योगजप्रत्यासत्तिविषयावित्येव मीमांसादर्शनाशयः।

ज्ञातसम्बन्धस्यैकदेशदर्शनात् एकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिः अनुमानमिति मीमांसाभाष्यम् (१-१-५)। तत्र ज्ञातसम्बन्धेति कर्मधारयः। सम्बन्धश्च नियमाख्यः व्याप्त्यपरपर्यायः। एकदेशशब्दाभ्यां च सम्बन्धिनोरभिधानम्। सम्बन्धो हि सम्बन्धिनोः व्यासज्य वर्तमानः एकदेशी। एकदेशौ च सम्बन्धिनौ ज्ञातसन्बन्धस्य एकदेशः धूमादिः। तस्य दर्शनात् एकदेशान्तरे वह्न्यादौ बुद्धिरनुमानं प्रमाणमित्युक्तम्। फलस्य प्रामाण्यदृष्ट्यत्थं व्यवहारः। व्याप्तिपक्षधर्मताज्ञानजन्यं अबाधितार्थविषयकं ज्ञानमनुमानमिति फलितम्। तत्र का नाम व्याप्तिः? सम्बन्धनियमो व्याप्तिः। को नाम नियमः? दृश्यमानेषु देशकालादिषु यो लिङ्गस्य लिङ्गिना सहभावः स एव नियमः। तेन यस्य येन यथा दृष्टेषु देशकालादिषु येषु केनापि सम्बन्धेन साहित्यं नियतमुपलब्धं, तेन देशान्तरकालान्तरादौ तस्य तादृशसाहित्यनियमादेव बोधनं भवति, तेन चानुमितिरिति फलितम्।

स च साहित्यनियमः भूयोदर्शनैः व्यभिचारादर्शनसहायैः अवगन्तुं शक्यते। व्याप्तिः, नियमः, अव्यभिचारः, अविनाभाव इति पर्यायाः। नियम्यं, गमकं, लिङ्गम्, साधनं, हेतुरिति पर्यायाः।

प्राभाकरमते तु अनुमानलक्षणमेवम्-प्राभाकराः भाष्यकारेण शबरस्वामिना निर्दिष्टे "ज्ञातसम्बन्धस्य एकदेशदर्शनात्-एकदेशान्तरेऽसन्निकृष्टेष्वर्थेषु बुद्धिरनुमानम्" इत्यनुमानलक्षणे नियमपदम्, अबाधितपदञ्च संयोज्य अनुमानलक्षणं निर्दिशन्ति,

"ज्ञातसन्बन्धनियमस्यैकदेशस्य दर्शनात्। एकदेशान्तरे बुद्धिरनुमानमबाधिते॥" इति **प्रकरणपञ्चिका** (p.१९६)। अत्र नियमपदं अबाधितपदञ्च हेत्वाभासव्यावर्तनार्थ-मिति शालिकनाथ:। एकाश्रयाश्रितयोरेकदेशयो: ज्ञातसम्बन्धनियमेन एकदेशेन सन्दिग्धस्य एकदेशान्तरस्य परिज्ञानम् (तन्त्ररहस्ये p.१०)। अत्र "एकदेशस्य", "एकदेशान्तर" इति च द्वाभ्यां शब्दाभ्यां क्वचिदाश्रितौ हेतुसाध्यौ उच्येते। ताम्यामेक आश्रय आक्षिप्यते। अतश्च समानाश्रितयोरेव द्वयो: गम्यगमक इति फलति। सन्निकृष्टपदं स्मरणाभि-माननिरासपरम्। सम्बन्धपदेन निरुपाधिक: सम्बन्धो गृह्यते, न तु कार्यकारण तादात्म्य संयोगसमवायैकार्थसमवायादिस्सम्बन्ध:। ततश्च निरुपाधिकसम्बन्धो व्याप्तिरिति प्राभाकरा: निरुपाधिकत्वञ्च उपाधिशून्यत्वम्। उपाधिलक्षणन्तु साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति नैयायिका:। अस्य संग्राहक: श्लोक: "एकसाध्याविनाभावे मिथस्सम्बन्ध शून्ययो:। साध्याभावाविनाभावी स उपाधिर्यदत्यय:"॥ इति श्रूयते। पद्य मिदं श्रीहर्षेण **खण्डन खण्डऽखाद्ये** (p. ३६८) चित्सुखाचार्येण **तत्त्वप्रदीपिकायां** (p. २९५)च उद्धृतम्। उदयनाचार्यलक्षणमिति **नयनप्रसादिनी**। कुमारिलभट्टस्येति चान्ये। तत्र सर्वत्रादर्शनात् बृहट्टीकास्थमित्यपि वक्तुं शक्यते। यदभाव: साध्या भावविनाभावी साध्येन व्याप्त:, साध्याभावव्याप्त्यभाव प्रतियोगी–साध्यव्यापक इति यावत्। मिथस्सम्बन्धशू न्ययोरित्यनेन साधनाद्यव्यापकत्वमुक्तम्। ईदृशोपाधिविरहो भूयोदर्शनगम्य इति निरुपाधिकसम्बन्धो व्याप्तिरिति सिध्यति—"य: कश्चित् येन यस्येह सम्बन्धो निरुपा-धिक:। प्रत्यक्षादिप्रमासिद्ध: स तस्य गमको मत:॥" इति **प्रकरणपञ्चिका** (p. २०६)। भूयोदर्शन इत्यत्र दर्शनपदं निश्चयपरम्। तथाच समानाश्रयाश्रितयोरेकदेशिनो: ज्ञात-सम्बन्धनियमस्यैकदेशस्य दर्शनात् एकदेशान्तरे असन्निकृष्टे अर्थे बुद्धिनुमानमिति लक्षणम्। इति **प्रकरणपञ्चिका** (p. २०६)।

महानसादौ वह्निधूमौ सहचरितौ पश्यत: प्रथमदर्शने एव धूमस्य वह्निना सम्बन्धो गृहीतो भवति। भूयो दर्शनस्योपयोग: सोपाधिकत्वशङ्कानिरासायैव। अत: "प्राथमिकं प्रत्यक्षमेव धूमाग्न्यो: सम्बन्धनियमे प्रमाणम्। भूयोदर्शनेन पश्चात्तस्य निरुपाधिक-

त्वनिश्चय'' इति **तन्त्ररहस्ये** (p. ११-१२)। एवञ्च गृहीतग्राहित्वमनुमानस्य प्राभाकाराणां मते। अग्नेर्धूमेन सह सम्बन्धो धूमसामान्यानुबन्धी। अतः सम्बन्धसामान्यावसायसमये एव यावद्धूमाधिकरणं अग्निसम्बन्धस्यावगतत्वात् गृहीतग्राहित्वमनुमानस्य। तथापि प्रत्युत्पन्नकारणजन्यत्वेन धारावाहिकन्यायेन प्रामाण्यमनुमानस्येति अनुभवगत-प्रामाण्यमव्याहतम्। उक्तश्चैतत्—''अहो अनुभवाविवेकिनो महान् प्रमादः, किं पूर्वदृष्टस्य अनुभवो न भवति। अनुभूतिश्च नः प्रमाणम्। अन्या च स्मृतिरन्योऽनुभवः...सिद्धश्चा-नुमानादिषु प्रमाणत्वमनुभूतेः'' (**बृहती** p. १०२-१०३), एवं ''स्यादेतत्...अनुभूतिस्तु प्रमाणमित्युक्तम्। धूमाच्च अग्निज्ञानमनुभवाकारं जायते धारावाहिकवत्। ...इह तु सम्बन्ध-नियमस्मरणमेकदेशदर्शनञ्च अनुभवकारणमस्तीति यथाप्रतीति अनुभूतिरूपमेवाश्रयितुं उचितेति युक्तमेवानुमानस्य प्रामाण्यम्।'' (**प्रकरणपञ्चिका** p. २०५)। एवञ्च नियतसम्बन्धैकदर्शनम्, सम्बन्धनियमस्मरणम्, अवाधितविषयत्वञ्चेति अनुमानसामग्री प्राभाकराणामिति भवति।

सा च पूर्वोक्तरूपा व्याप्ति द्विविधा-अन्वयव्याप्तिः, व्यतिरेकव्याप्तिरिति। तत्र साधनसत्वे साध्यस्यापि सत्वम् अन्वयव्याप्तिः। यथा-यत्र धूमः तत्र तत्र वह्निरित्यन्वय-व्याप्तिः। साध्यस्याभावे साधनस्याप्यभावः व्यतिरेकव्याप्तिः। यथा यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभाव इति। व्यतिरेकव्याप्तौ अन्वयव्याप्तेर्विपरीतो व्याप्यव्यापकभावो भवति। तादृशव्याप्तिविशिष्टो हेतुस्त्रिविधः अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति। तद्धेतुकं अनुमानमपि-अन्वयव्यतिरेक्यनुमानम्, केवलान्वय्यनुमानम्, केवलव्यतिरेक्य-नुमानञ्चेति त्रिविधम्। यस्य उभयविधा व्याप्तिरस्ति तदन्वयव्यतिरेकि। यथा-वह्निमान् धूमात् इति। यत्र यत्र धूमस्तत्र तत्र वह्निरिति दर्शनात् यत्र वह्न्यभावः तत्र धूमाभाव इति दर्शनात्। यस्य अन्वयव्याप्तिरेवास्ति न व्यतिरेकव्याप्तिः तत् केवलान्वय्यनुमानम्। यथा-घटोऽभिधेयः प्रमेयत्वात् इति। अत्र यद्यपि यत्र यत्र प्रमेयत्वम्, तत्र तत्र अभिधेय-त्वमित्यन्वयव्याप्तिस्सम्भवति तथापि यत्र अभिधेयत्वाभावः तत्र प्रमेयत्वाभाव इति व्यतिरेकव्याप्तिर्भवितुं नार्हति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च। यत्र तु

अन्वयव्याप्तिर्नास्ति केवलं व्यतिरेकव्याप्तिरेवास्ति तत् केवलव्यतिरेक्यनुमानम्। यथा पृथिवी इतरभेदवती गन्धवत्वात्, सर्वं ज्ञानम् स्वप्रकाशम्, ज्ञानत्वात् यस्य स्वप्रकाशत्वं नास्ति तस्य ज्ञानत्वमपि नास्ति यथा घटस्येति। पूर्वोक्तानुमाने यद्यत् गन्धवत् तत्तदितर भेदवत् इत्यन्वयदृष्टान्तो नास्ति। पृथिवीमात्रस्य पक्षत्वात्। पक्षभिन्नस्यैव दृष्टान्तत्वाभ्युपगमात्। द्वितीयानुमानेऽपि यस्य स्वप्रकाशत्वं तस्य ज्ञानत्वमस्तीति क्वचिदपि दर्शयितुमशक्यत्वात् अन्वयव्याप्तिर्नास्ति। स चायं केवलव्यतिरेकी हेतुः **आवीतहेतुरिति कथ्यते**।

मीमांसकमते अन्वयव्याप्तिव्यतिरेकव्याप्त्योः न समुच्चित्य अनुमितिकारणता, किन्तु पृथक् पृथगेव, क्वचित् अनुमित्युदय अन्वयव्याप्त्या, क्वचिद् व्यतिरेकव्याप्त्या। स्पष्टञ्चेदं-"व्याप्त्या साधर्म्य उक्ते च न वैधर्म्यमपेक्षते। परस्साधर्म्यदृष्टान्तात् तं च नापेक्षते यदा। पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम्"। इति **श्लोकवार्तिके** (p. ३३४). केचित्तु अवश्याभ्युपगन्तव्यया अर्थापत्त्यैव गतार्थतां मन्वानाः व्यतिरेकव्याप्तिमेव न स्वीकुर्वन्ति। एवं मीमांसकमते भाट्टे प्रामाकरे च केवलव्यतिरेक्यनुमानं न स्वीक्रियते। अत्र प्रकृतपक्षात्अन्यत्र अप्रसिद्धस्यैव पदार्थस्य साध्यत्वं वक्तव्यम्। एतस्मिंश्च स्वीकृते अदृष्टादीनां अलौकिकार्थानां केवलागमैकवेद्यानां अपि अनुमानविषयत्वं प्रसज्येत इति बिभ्यतो मीमांसकाः केवलव्यतिरेक्यनुमाननिरसने तत्पराः दृश्यन्ते। स्पष्टञ्चेदं **तन्त्ररहस्यमानमेयोदयादिषु**।

अनुमानं स्वार्थपरार्थभेदेन द्विविधम्। यत्र स्वयमेव हेतुं दृष्ट्वा व्याप्त्यादिस्मरणेन साध्यमनुमिनोति तत्स्वार्थानुमानम्। यत्र तु स्वप्रतिपन्नमर्थं दृष्ट्वा अनुमानेन परं बोधयितुमिच्छति तदर्थं वाक्यं उच्चारयति तत् परार्थानुमानम्। तच्च वाक्यं पञ्चावयवमिति नैयायिकाः —प्रतिज्ञा हेतु उदाहरण उपनयनिगमन रूपम्। तत्र पक्षस्य साध्यविशिष्टत्वेन कथनम्, अथवा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकः अविरोध्यर्थबोधकश्चोपदेशः प्रतिज्ञा। यथा पर्वतो वह्निमानिति, द्रव्यं वायुरिति च। अविरोध्यर्थग्रहणात् प्रत्यक्षानुमानागम स्वशास्त्रस्वचन विरोधिनो अर्था न प्रतिज्ञातार्थाः भवन्ति-यथा अनुष्णोऽग्निरिति प्रत्यक्षविरोधी, घनमम्बरमिति अनुमानविरोधी, ब्राह्मणेन

सुरा पेयेति आगमविरोधी, सत्कार्यमिति वदतो वैशेषिकस्य स्वशास्त्रविरोधी, शब्दो न अर्थप्रत्यायक इति स्वचनविरोधीति। एते **प्रतिज्ञाभासा** इति व्यवह्रियन्ते। पञ्चम्यन्तं तृतीयान्तं वा साधनत्वावेदकं लिङ्गवचनं हेतुः। यथा धूमवत्वात्, विद्यया यशः, अध्यनेन वसतीत्यादि उदाहरणम्। दृष्टान्ताभिधानपुरस्सरं व्याप्तिबोधकं वचनं, यत्र धर्मिणि सम्बन्धनियमो दृश्यते, उपनयाभिधान प्रयोजक जिज्ञासाजनकवाक्यं वा उदाहरणम्, यो यो धूमवान् स स वह्निमान् यथा महानस इति। सिद्धव्याप्तिकस्य हेतोः पक्षनिष्ठतया कथनम्, प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्ट पक्षबोधजनकं वाक्यमिति वा उपनयलक्षणम्-यथा धूमवानयं पर्वत इति। पक्षस्य हेतुसाध्यवत्तया पुनरुपसंहारः, सहेतुकं पक्षस्य पुनर्वचनम्, पक्षे साध्यस्य अबाधित्वप्रतिपादकं वा वचनम् निगमनं, यथा तस्मात् वह्निमानयं पर्वतः, तस्मात्तथा, इत्यादि। मीमांसकानां मते तच्च परार्थानुमानप्रयोजनकं वाक्यं अवयवत्रयविशिष्टमेव न तु नैयायिकादिवत् पञ्चावयवकम्। प्रतिज्ञया निगमनम्, हेतुना च उपनयो गतार्थ इति मन्वानाः मीमांसकाः, उभयोरेकत्रोपादाने पुनरुक्तिप्रसङ्ग इति मत्वा त्र्यवयवकमेव वाक्यं स्वीकुर्वन्ति। तच्च-प्रतिज्ञा हेतूदाहरणरूपम्, उदाहरणोपनय निगमनरूपं वा इति। प्रथमं तु पर्वतो वह्निमान् धूमवत्वात्, योयो धूम वान् स स वह्निमान् यथा महानस इति, द्वितीयं यो यो धूमवान् स स वह्निमान् यथा महानसः, धूमवांश्चायं पर्वतः, तथाचायमिति वा।

तच्चानुमानं प्रत्यक्षतो दृष्टसम्बन्धम्, सामान्यतो दृष्टसम्बन्धञ्चेति पुनर्द्विविधम्। यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृहयते तद्विशेषविषयं प्रत्यक्षतो दृष्टसम्बन्धमनुमानम्-यथा-गोमयेन्धनाग्निविशेषतज्जन्यधूमविशेषयोः सम्बन्धग्रहणं प्रत्यक्षतो जातं तस्मिन्नेव धर्मिणि कालान्तरे तस्यैव धूमविशेषस्य दर्शनेन तस्यैव सन्दिह्यमानसद्भावस्य अग्नि-विशेषस्य यदनुमानं तत्प्रत्यक्षतो दृष्टसम्बन्धात्मकमनुमानम्। यत्र सामान्ययोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत्सामान्यतो दृष्टसम्बन्धानुमानम्। आदित्यो गतिमान् देशान्तरप्राप्तिमत्वात् यो यो देशान्तर प्राप्तिमान् स स गतिमान् यथा देवदत्तः इति। अत्र गतिप्राप्त्योः सामान्ययोरेव प्रत्यक्षेण सम्बन्धो गृहीत इति आदित्ये गत्यनुमानोपयोगीदं

दृष्टसम्बन्धजन्यानुमानम्।'' प्रमेयमनुमानस्य दृष्टादृष्ट स्वलक्षणमिति (**प्रकरणपञ्चिका** (p. २१४) वदन्तः प्राभाकराः वह्न्यादि दृष्टस्वलक्षणानुमानजम्। कर्मादिकं अदृष्टस्वलक्षणा-नुमानजमिति द्वेधा वदन्ति।

**अनुमानदोषस्त्रिविधः** - प्रतिज्ञादोषः, हेतुदोषः, उदाहरणदोषश्चेति। प्रतिज्ञा-विरोधादयः प्रतिज्ञादोषाः। तत्र प्रतिज्ञाविरोधो नाम स्ववाग्विरोधः। तस्य त्रैविध्यम्-उच्चारणभेदात्, धर्मभेदात्, धर्मिभेदाच्च। यावज्जीवमहं मौनीति प्रथमस्योदाहरणम्। अत्र स्वपक्षः प्रतिज्ञोक्तिमात्रेणैव बाध्यते। सर्वं वाक्यं मृषेति द्वितीयोदाहरणम्। अत्र सर्वान्तर्गतस्य स्वचनस्य मृषात्वे इतरेषां वाक्यानां सत्यत्वसिध्या स्वपक्षबाधः। मम माता वन्ध्येति तृतीयस्योदाहरणम्। अत्र मातेति धर्मिनिर्देशेन स्वपक्षबाधः इत्यादि **श्लोकवार्तिके वर्णितम्** (p. ३२०)। **एते प्रतिज्ञाभासा इत्युच्यन्ते**। **हेतुदोषाः हेत्वाभासा** इति कथ्यन्ते। हेतुदोषोऽपि त्रिविधः —असिद्धिः, अनैकान्तिकत्वम्, बाधकत्वञ्चेति। तत्र असिद्धिः पञ्चधा-स्वरूपासिद्धिः, सम्बन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्त्यसिद्धिरिति। तेषु हेतुस्वरूपस्यैवासिद्धौ स्वरूपासिद्धिः, यथा बुद्धो धर्मवेदी सर्वज्ञत्वात् इति। नहि सर्वज्ञत्वस्वरूपं क्वचिदस्ति, मीमांसकमते ईश्वरस्यापि सर्वज्ञत्वनिराकरणात्। अथवा घटः पृथिवी पटत्वात् इत्यत्र घटरूपपक्षे हेत्वभावात् इति उदाहरणम्। हेतोः पक्षसम्बन्धाभावे सम्बन्धासिद्धिः। पक्षे व्याप्यत्वेनाभिमतस्य हेतुताव-च्छेदकसम्बन्धेनाभावः सम्बन्धासिद्धिरिति च लक्षणम्। वह्निरदाहकश्शीतत्वात्-, शब्दोऽनित्यः चाक्षुषत्वात् इत्यादि उदाहरणम्। शैत्यस्य वह्निसम्बन्धाभावात् चाक्षुष-त्वस्य शब्दसम्बन्धाभावाच्च। पक्षव्यतिरेकाभावेन पक्षसम्बन्धित्वाभावे, पक्षतावच्छेदक-हेत्वोरभेदे वा व्यतिरेकासिद्धिः - गोशब्दः सास्नादिमद्वचनः गोशब्दत्वात् इति, गगनं अनित्यम् गगनत्वादिति चोदाहरणम्। अत्र धर्मि व्यतिरेकेण गोशब्दत्वस्य गगनत्वस्य वा अभावात्। पक्षाप्रसिद्धिः आश्रयासिद्धिः, पक्षतावच्छेदकाप्रसिद्धिरपि आश्रयासिद्धिः, नित्यमाकाशम् अनवयवद्रव्यत्वात्, गगनकुसुमं सुरभि कुसुमत्वात्, काञ्चनमयपर्वतो वह्निमान् धूमात् इत्यादीन्युदाहरणानि। तत्र प्रथमे आकाशानङ्गीकर्तृ सौत्रान्तिकं प्रति

आश्रयासिद्धिः, द्वितीयेऽपि कुसुमे गगनीयत्वाभावात् आश्रयासिद्धिः, पक्षैकदेशे हेतोरवृत्तित्वं, उपाधिमत्वं वा व्याप्त्यसिद्धिरित्युच्यते। वायुः आकाशानन्यः मूर्तत्वात्, इत्युदाहरणम्। अत्र मूर्तत्वस्य आकाशव्याप्त्यभावात्। एवं वाय्वाकाशौ अनित्यौ मूर्त-त्वात् इत्यप्युदाहरणम्। अत्र पक्षौ वाय्वाकाशौ, तदेकदेशभूते आकाशे मूर्तत्वरूपहेतोर-भावात्। एवं क्रतुहिंसा अधर्मः हिंसात्वात्, बाह्यहिंसावत् इत्युदाहरणम्। अत्र निषिद्धत्वमु-पाधिः। स च साध्यव्यापकत्वे सति साधनाव्यापकत्वरूप एव। यत्र यत्र अधर्मत्वं तत्र तत्र निषिद्धत्वमिति साध्यव्यापकत्वम्। यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति तु नास्ति। यागीयहिंसाया अनिषिद्धत्वात्। ततश्च हिंसात्वरूपो हेतुः व्याप्त्यभावादेव सोपाधिकस्सन् क्रतुहिंसाया अधर्मत्वसाधने दुष्टो भवति। स्पष्टञ्चेदं **श्लोकवर्तिके** p. ३२३-, **मानमेयोदये** २९-, **भाट्टचिन्तामणौ** ४०—**शास्त्रदीपिकायां** p. ६४-च। साध्यसन्देह जनकत्वम्, सव्यभिचरितो हेतुर्वा अनैकान्तिकः। सन्देहजनकत्वञ्च साध्यतदभावसम्बन्धित्वज्ञानेन, सत्प्रतिपक्षितत्वेन चेति वक्तव्यम्। यथा नित्यश्शब्दः अमूर्तत्वादित्यत्र अमूर्तत्वरूपो हेतुः अनित्येषु कर्मादिष्वपि वर्तते इति सव्यभिचरितो हेतुः। अतस्साध्यसन्देहं जनयति। एवं वायुः अप्रत्यक्षः द्रव्यत्वे सति अरूपत्वात् इति हेतुः वायुः प्रत्यक्षः महत्वे सति स्पर्शवत्वात्, उद्भूतरूपवत्वाद्वा इति सप्रतिपक्षितो भवति। अत्रोभयोरपि अगृह्यमाण बलाबलत्वात् संशयहेतुर्भवतीति द्वयमपिअनिर्णायकम्। साध्याभावसाधकः, साध्यविपर्ययव्याप्तः, साध्याभावप्रतियोगी पक्षविपक्षयोरेव वर्तमानो वा हेतुः बाधक इत्युच्यते अस्यैव विरुद्ध इति नामान्तरम्। अयं धर्मस्वरूपबाधकः, धर्मविशेष बाधकश्चेति द्विविधः। शब्दो नित्यः कृतकत्वादिति धर्मस्वरूपबाधकहेतोः उदाहरणम्, अत्र नित्यत्वविपरीतेन अनित्यत्वेन व्याप्तं कृतकत्वमिति नित्यत्वं प्रति विरुद्धत्वात् बाधक इत्युच्यते। क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् इति धर्मविशेषबाधक-हेतोरुदाहरणम्। अत्र साध्यस्य कर्तुः अशरीरित्वं विशेषः। तद्विपरीतेन शरीरित्वरूपविशेषेण व्याप्तं कार्यत्वं घटपटादिषु दृष्टमिति अशरीरित्वस्य बाधकं भवति। अशरीरित्व-बाधे सकर्तृकत्वमपि बाध्यते। ततश्चायं हेतुबाधक इत्युच्यते। यद्यपि **श्लोकवार्तिके**

(p. ३२९) **शास्त्रदीपिकायां** (p. ६६) च धर्मस्वरूप-धर्मविशेषभेदेन बाधः षोढा इति वर्णितः। तथापि **भाट्टचिन्तामणि** (p. ४२) **मानमेयोदयादौ** च (p. ३२) विभागद्वयेनैव चरितार्थता दृश्यते। यद्यपि न्यायशास्त्रे अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः। कालात्ययापदिष्टश्चेति पञ्चाधा हेत्वाभासाः वर्णिताः तथापि सत्प्रतिपक्षितस्य अनैकान्तिकभेदे बाधितस्य बाधितविशेषणाख्ये पक्षाभासे च मीमांसका अन्तर्भाव-यन्ति।

यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं दृष्टं स दृष्टान्तः, सम्यक् दृष्टान्ताभिधानमुदाहरणम्, यत् साध्य-साधनयोः व्याप्ति प्रतिपत्तिस्थलं तदुदाहरणम्, दृष्टान्त इति वा उच्यते। यथा महानस इति। तद् साधर्म्यम् वैधर्म्यञ्चेति द्विविधम्। साधनस्य साध्येन अन्वयमुखोपदर्शनं साधर्म्योदाहरणम्। यथा यो यो धूमवान् स स वह्निमान् यथा महानस इति। व्यतिरेकमुखेन अथवा साध्याभावस्य साधनाभावेन अन्वयोपदर्शनं, दृष्टान्तभिधानं वा वैधर्म्योदाहरणम्। यथा यो वह्निमान् न भवति नासौ धूमवान् भवति यथा ह्रदः इति। उदाहरणलक्षणरहिताः उदाहरणवदवभासमानाः उदाहरणाभासा इत्युच्यन्ते। ते च साध्यहीनः, साधनहीनः, उभयहीनः, आश्रयहीनश्चेति साधर्म्योदाहरणाभासाः चतुर्विद्याः यथा-नित्यःशब्दः अकारणत्वात्, यदकारणं तन्नित्यमित्यत्र प्रागभाववत् इति साध्यहीनः, प्रध्वंसवत् इति साधनहीनः घटवत् इत्युभयहीनः, नरशृङ्गवदिनि आश्रयहीनः। नित्यत्वं नाम अविनाशित्वम्, न तु उत्पत्तिशून्यत्वे सनि नाशाप्रतियोगित्वम् इति स्वीकर्तव्यम्। वैधर्म्योदाहरणाभासा अपि साध्यहीन-साधनहीन-उभयहीन-आश्रयहीना इति चतुर्विधाः। यत् नित्यं तत् मूर्तमपि न भवति यथा कर्म इति साध्यहीनः, यथा परमाणुरिति साधनहीनः, यथा घट इति उभयहीनः, यथा वन्ध्यापुत्र इति आश्रयहीन इत्येते दृष्टान्ताभासाः। स्पष्टञ्चेदं **प्रकरणपञ्चिकायां** p. २२२, **मानमेयोदये** p. ३९, **प्रमाणलक्षणे** p. २२ च। परन्तु प्राभाकराः अन्वयदृष्टान्तेनैव व्याप्तिनिश्चये सति व्यतिरेकदृष्टान्तः नानुमानाङ्गमिति स्वीकुर्वन्ति। ततश्च तेषां मते वैधर्म्यदृष्टान्तो न स्वीकृतः, केवलं साधर्म्यदृष्टान्त एवेति भवति। यदि कश्चिदन्वयदृष्टान्तेन न परितुष्यति तस्य कृते व्यतिरेकदृष्टान्तः वैधर्म्य

दृष्टान्तो वा समादरणीय इति भाट्टाः स्वीकुर्वन्ति। प्राभाकरास्तु यो यो धूमवान् स सोऽग्निमानेवेति वीप्सावधारण वचनयोः प्रयोगादेव सम्यक् साधर्म्यदृष्टान्त प्रयोगेणैव वा सम्बन्धनियमावगतेः वैधर्म्यनिरूपणमनर्थकमिति वदन्ति। **ऋजुमार्गेण सिध्यन्तं को नु वक्रेण साधयेदिति** वदन्तस्ते साध्यदृष्टान्तः साध्यसम्बन्धाव्यभिचारावगतौ ऋजु-मार्गः, वैधर्म्यन्तु वक्रमार्ग इति तयोर्विकल्पासम्भव इति च वदन्ति। अत एव केवलव्यतिरेक्यनुमानमपि न स्वीक्रियते। **प्रकरणपञ्चिका** (p. २२२)।

**उपमानम्**

"उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनम्, गोस्मरणस्य" इति शाबर भाष्यम्। "तस्मात् यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम्। प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम्"॥ इति **श्लोकवार्तिके** (p. ३८२) "सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानम्" इति **प्रकरणपञ्चिका** (p. २६७)। "दृश्यमानार्थसादृश्यात् स्मर्यमाणार्थगोचरम्। असन्निकृष्टसादृश्यज्ञानंह्युपमितिर्मता" इति **मानमेयोदये** (p. ४७)। सदृशदर्शनादसन्निकृष्टेऽर्थे ज्ञानमुपमानमिति **प्रमाणलक्षणम्।** ततश्च पूर्वदृष्टेऽर्थे स्मर्यमाणे दृश्यमानार्थसादृश्यज्ञानमुपमानम्, दृश्यमानगवयनिरूपित सादृश्यप्रकारकगोविशेष्यकप्रमा उपमितिरिति भवति। तत्करणं गवयपिण्ड दर्शनं उपमानम्। पुरुषो हि नगरगः सन् अधिगतगुः अर्थेन्द्रियसंप्रयोगात् अधिगतगोसा-दृश्यः। ततश्च कुतश्चिन्निमित्तादरण्यमनुप्राप्तः गवयं पश्यन् समुद्बुद्धसंस्कारः गोगतसादृश्यमनुस्मरन् प्रत्येति गवयसदृशो गौरिति। नैयायिकास्तु गोसदृशो गवय इति आरण्यकपुरुषवाक्यं श्रुत्वा कदाचिदरण्यं गतः नागरिकः तत्र गवयं पश्यत् तस्मिन् गोसादृश्यमवगच्छति। अनन्तरं आरण्यकवाक्यार्थं स्मरति। स एव व्यापारः। गवयगत गोसादृश्यज्ञानमुपमानमिति वदन्ति।

अस्योपमितिज्ञानस्य शब्दजन्यत्वेन शब्दानतिरेकात् पृथक् प्रमाण्यं न सिध्यतीति मीमांसकानामाशयः। तस्मात् अनुभूतपूर्ववस्तुसदृशस्य वस्त्वन्तरस्य प्रत्यक्षे सति यत्

अनुभूतपूर्वस्य वस्तुन: प्रत्यक्षीक्रियमाणवस्तुसदृशतया ज्ञानं जायते तदुपमानफलमिति वर्णयन्ति। नगरस्थगो: अनिन्द्रियसंन्निकृष्टत्वात् नोपमानं प्रत्यक्षान्तर्भूतम्। नाप्यनुमानेन चरितार्थम्, उपमिनोमीत्यनुव्यवसायज्ञानं भवति, न तु अनुमिनोमीति वैलक्षण्य प्रतीते:। किञ्च सम्बन्धनियमस्मरणं अनुमानोदयकरणम्। अत्र च अवयवसामान्यबाहुल्य-भाजो गवयस्य सदृशतया प्रतीयमानस्यैव उपमानहेतुत्वमिति कारणभेदात् उपमानमनु-मानाद् भिन्नम्। नापि स्मृतिरुपमानम्, गोदर्शनसमयेऽप्रतीतगवयस्य तत्सादृश्यानुभवाभावात्। नापि शाब्दम्, पदज्ञानाद्यभावात्। ततश्चोपमानमतिरिक्तं प्रमाणम्। अस्य मीमांसाभिमत वैदिकोदाहरणन्तु-अतिदेशवाक्यकल्पनम् प्रकृतिवत् विकृति: कर्तव्येति। यत्र अङ्गानि विशिष्य नाम्नातानि तादृशेषु विकृतिकर्मसु अङ्गजातप्राप्तये विकृतिकर्मणां बोधकाले प्रकृतिकर्मणां उपदिष्टाङ्गानां नियमेनोपस्थितिरिति प्रतिपादयन्ति। अवगतसाङ्गदर्श-पूर्णमासादिरूपप्रकृतिपदार्थस्य विकृतिदर्शनेन तत्सदृशप्रकृतियागस्य स्मरणम्-सौर्यभाग-सदृश-एकदेवत्यत्वओषधिद्रव्यकत्वादिना आग्नेय इति। तेन सौर्ययागेन ब्रह्मवर्चसं भावयेत् आग्नेयवदिति। उक्तञ्चेदम् ''भिन्नानुमानात् उपमेयतोक्ता सौर्यादिवाक्यैरसहापि-दृष्टम्। सादृश्यतोऽग्न्यादियुतं कथं नु प्रत्याययेदित्युपयुज्यते न:'' इति **श्लोकवार्तिके** (p. ३८५)।

प्राभाकरमंते-एवम्- ''सादृश्यमिति हि सादृश्यम्'' इति **बृहत्याम्**, सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमुपमानमिति **प्रकरणपञ्चिकायाम्**, सादृश्यदर्शनात् तत्सदृशव-स्त्वन्तरगत सादृश्यज्ञानमुपमानमिति **तन्त्ररहस्ये** च दृश्यते। ततश्च पूर्वदृष्टगो: पुरुषस्य वने गवयं तत्सदृशं पश्यतो यत् गोगतगवयप्रतियोगिकसादृश्यज्ञानं-अनेन सदृशी मदीया गौ:'' इति तत् उपमानम्। प्राभाकरास्तु अभ्युपगमसिद्धान्तन्यायेन प्राय: काणाद-तन्त्रसिद्धान्त सिद्धमेव प्रमेयजातं अनभिमतपदार्थनिरसनपूर्वकं स्वीकुर्वन्ति। अतश्च सादृश्यमङ्गीकृत्य तस्य द्रव्याद्यन्तर्भावं प्राभाकरा नेच्छन्ति, सादृश्यं न द्रव्यम्, गुणकर्मणोरप्याश्रितत्वात्। गन्धादयो गुणा:, उत्क्षेपणादीनि कर्माणि च सदृशबोधविषया: भवन्ति। अत एव गुणे गुणानङ्गीकारात् सादृशयं न गुण:, नापि कर्म। अनुगताकार

प्रत्ययनिमित्तत्वाभावात् न सादृश्यं सामान्यम्। समवायस्तु सम्बन्धविशेषः। अतो न तत्र सादृश्यान्तर्भावः। विशेषस्तु प्राभाकररीत्या पृथक्त्वान्तर्गतत्वात् न पदार्थः। ततश्च पदार्थान्तरमेव सादृश्यम्। तन्मूलकत्वमुपमानस्येति वदन्ति। स्पष्टञ्चेदं **प्रकरणपञ्चिका-याम्**, pp. ७८-१०५.

**अर्थापत्तिः** "अर्थापत्तिरपि दृष्टः श्रुतो वा अर्थो अन्यथा नोपपद्यत इत्यर्थकल्पना" इति **शाबरभाष्ये**, "प्रमाण षट्कविज्ञातो यत्रार्थो नान्यथा भवेत्। अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता" इति **श्लोकवार्तिके** च (p. ३८७) तल्लक्षणमुक्तम्। प्रत्यक्षादि-प्रमाणपञ्चकेन प्रमित इति दृष्टशब्दार्थः। शब्दप्रमाणप्रमित इति श्रुतशब्दार्थः। श्रुत इति पृथगुपादानात् श्रुतातिरिक्तप्रमाणप्रमित दृष्ट इति गोवलीवर्दन्यायात् कल्पनीयः। यत्र प्रसिद्धि-अप्रसिद्धि निबन्धनं प्राशस्त्यं वक्तव्यमभिप्रेतं भवति तत्र गोबलीवर्दन्यायः। गोबलीवर्दशब्दे गोशब्देन बलीवर्दसिद्धौ बलीवर्दपदं दुर्दान्तत्वरूपप्राशस्त्यज्ञापनाय प्रयुक्तम्। एवं गोशब्दस्य स्त्रीव्यक्तौ प्रसिद्धत्वात् पुंव्यक्तावप्रसिद्धत्वात् बलीवर्द-प्रयोगः। एवमेवात्रापि शब्दानां शाब्दप्रमाणजनिततततया प्रत्यक्षत्व व्यवहारेऽपि दृष्टशब्दस्य चक्षुरादिप्रत्यक्षार्थे प्रसिद्धत्वात् केवलवेदैक वेद्यार्थेऽप्रसिद्धत्वात् तद्ग्रहणाय वेदातिरिक्त प्रमाणार्थग्राहकदृष्टशब्दप्रयोगः। अत एव दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति भिन्ना स्वीक्रियते। एवं च प्रमाणैः प्रमितस्य अर्थान्तरेण विना अनुपपत्तिमालोच्य तदुपपत्तये या अर्थान्तरकल्पना सा अर्थापत्तिरिति सम्पन्नः। "अन्यथानुपपत्या यदुपपादककल्पनम्। तदर्थापत्तिरित्येवं लक्षणम्" इति **मानमेयोदये**, साधारणप्रमाणानामसाधारणमानतः, विरोधादविरुद्धांशे धीरर्थपत्तिरिति च तत्रैव, एवं प्रत्यक्षेण शब्देन वा प्रतीतस्यार्थस्य उपपादकार्थान्तरकल्पनम् अर्थपत्तिरिति **भाट्टचिन्तामणौ**, **शास्त्रदीपिकायाञ्च** लक्षणं वर्णितम्। ततश्च अर्थस्य आपत्तिः - प्राप्तिः यस्मादिति बहुव्रीहिसमासेन अर्थापत्तिशब्दः प्रमाणपरः। एवं अर्थस्य आपत्तिः-कल्पना इति तत्पुरुष समासेन अर्थापत्तिशब्दः फलपरश्च भवति। तथा च यत्र अभिधीयमानेऽर्थे अनुपपत्तिवशात् योऽन्योऽर्थः प्रसज्यते सार्थापत्तिरिति भवति। यथा ज्योतिषगणितागममूलेनान्यप्रमाणेन देवदत्तस्य जीवने निश्चिते सति गृहेऽनवस्थितस्य

तस्य जीवतो बहिर्भावकल्पनां विना जीवनमनुपपन्नं भवतीति जीवनं बहिर्भावं कल्पयतीति सा अर्थापत्तिः। एवं देवदत्तनिष्ठं दिने भोजनराहित्यं पीनत्वं च प्रत्यक्षदृष्टं स्वोपपादकं रात्रिभोजनं कल्पयति। अत्र येन विना यदनुपपन्नं **तदुपपाद्यं** जीवनम्। अत्र उपपाद्यं जीवनं करणम्। यस्याभावे यस्यानुपपत्तिः स **उपपादको** बहिर्भावः। अत्र उपपादकः बहिर्भावः फलम् अत्र च प्रमाणावगतः जीवनबहिर्भावयोः परस्परः प्रतिघातः करणम्। गृहे वा अवस्थितो देवदत्तो बहिर्वेति केनचित् प्रमाणेनाबगतम्, अन्येन च गृहे नास्तीति। तदुभयं समुच्चितं परस्पर प्रतिघाति प्रतीयते। सोऽयं प्रतिघातो बहिर्भावकल्पनया समाधीयते। तेन प्रमाणसिद्धयो र्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेन आलोच्यमानोऽर्थापत्तेः कारणम्। तत्समाधानाय च अर्थान्तरकल्पना अर्थापत्तिरिति सिद्धम्। ततश्च प्रत्यक्षादिप्रमाणषट्केन प्रमितस्यार्थस्य अर्थान्तरेण विना अनुपपत्तिमालोच्य तदुपपत्तये या अर्थान्तर कल्पना सा अर्थापत्तिरिति सिध्यति। एवं कुतश्चन लौकिकात् वैदिकात् वा शब्दात् अवगतस्यार्थस्य अर्थान्तरेण विना अनुपपत्तिम् आलोच्य तदुपपत्तये या अर्थान्तर कल्पना सा श्रुतार्थापत्तिरित्यपि वक्तव्यम्। तत्र दृष्टार्थापत्तेरिमान्युदाहरणानि— १) प्रत्यक्षप्रमितान्यथानुपपत्या अर्थकल्पना यथा-प्रत्यक्षतोऽवगतात् दाहात् वह्नेर्दाहशक्तिकल्पन। २) अनुमानपूर्विकार्थापत्तिर्यथा-देशान्तर प्राप्तिलिङ्गकेनानुमानेन आदित्ये गतिमनुमाय तदन्यथानुपपत्या आदित्ये गमन शक्ति कल्पना। ३) शब्दपूर्विका प्रमाणग्राहिणी अर्थापत्तियथा-पीनो देवदत्तः दिवा न भुङ्क्ते इति श्रुतेन वाक्येन दिवा अभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थः प्रमितः तदन्यथानुपपत्तिमालोच्य तदुपपत्तये रात्रौ भुङ्क्ते इति रात्रिभोजन रूपार्थकल्पना। ४) उपमानपूर्विका अर्थापत्तिर्यथा गवयदर्शनात् एतत्सदृशो गौरिति यद् गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्या तादृशसादृश्यविशिष्टगवि तादृशप्रमाविषयत्वशक्तिरस्तीति कल्पना। अर्थापत्तिपूर्विका अर्थापत्तिर्यथा ५) अर्थबोधान्यथानुपपन्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदन्यथानुपपत्या शब्दस्य नित्यत्वकल्पना। स्पष्टमिदं शब्दनित्यत्वाधिकरणे। (१-१-६-२३)। अभावपूर्विकार्थपत्तिर्यथा (६) जीवतो देवदत्तस्य गृहेऽभावः योग्यानुपलब्ध्या प्रमितः। तदन्यथानुप-

पत्या च बहिर्भावस्य प्रमाणान्तरागम्यस्य या कल्पना सा अभावपूर्विकार्थापत्तिः। स्पष्टानि चेमानि **श्लोकवार्त्तिके**। (३८७-४०८) श्रुतार्थापत्तेरुदाहरणम्—यत्र अपरिपूर्णस्य वाक्यस्यान्वयसिध्यर्थं शब्द अध्याह्रियते, सा श्रुतार्थापत्तिः। लोके द्वारमित्युक्तौ तस्य सम्पूर्णतायै संव्रियताम्, आव्रियता मित्यादि शब्दान्तरस्य श्रुतशब्दैकदेशत्वेन कल्प्यते। एवं वेदेऽपि विश्वजिता यजेत इत्यादौ स्वर्गकाम इति श्रुतैकदेशवाक्यत्वेम कल्पनम्। तत्र विधिप्रमिता विश्वजिद्यागकरणिका भावनाविषयकप्रवर्तना इष्टोद्देश्यकत्वं विना अनुपपद्यमाना स्वर्गाद्युद्देश्यफलं कल्पयति।

प्राभाकरमते—"विना कल्पनयार्थेन दृष्टेनाऽनुपपन्नताम्। नयनाऽदृष्टमर्थं या सार्थापत्तिस्तु कल्पना" इति **प्रकरणपञ्चिकायाः प्रमाणपारायणे**। दृष्टेन अर्थेन अदृष्टस्य अर्थस्य अर्थान्तर कल्पनायां असत्यां अनुपपत्तिं आपादयता या अर्थान्तरकल्पना सा अर्थापत्तिरुच्यते। अर्थान्तरकल्पनायामसत्यां योऽर्थान्तरमनुपपन्नं कुरुते तत्रार्थापत्तिः प्रवर्तते (**तन्त्ररहस्ये**)। एवञ्च अर्थान्तरकल्पनायामसत्यां योऽर्थान्तरमनुपपन्नं कुरुते सा अर्थापत्तिः। अनुपपत्तिश्च सन्देहरूप एव। "तत्सन्देहव्युदासाय कल्पना या प्रवर्तते। सन्देहापादकादर्थात् अर्थापत्तिरसौ स्मृता" (**प्रकरणपञ्चिका** १०६) दृश्यते। प्रमीयते अनेन इति करणव्युत्पत्यङ्गीकारे अर्थसन्देहापादकोऽर्थः प्रमा, कल्पितोऽर्थः प्रमेयम्। प्रमितिः प्रमाणमिति भावव्युत्पत्यभ्युपगमे कल्पना प्रमाणम्, तदनन्तरभावि देवदत्तो बहिर्भाववान् इति विशिष्टज्ञानं फलम्।

अर्थापत्तेरनुमानेन गतार्थत्वं नैयायिकानामाशयः। देवदत्तो बहिरस्ति गृहेऽविद्यमानत्वे सति जीवनवत्वात्, यो जीवन् तत्र नास्ति सा ततोऽन्यत्र अस्ति यथाहम् इति अनुमानाकारं वर्णयन्तः गृहाभावदर्शनात् बर्हिभावकल्पनमनुमानमेवेति तेषामाशयः। मीमांसकास्तु अर्थापत्तेरनुमानेऽनन्तर्भावस्तु हेतुदोषादिति वर्णयन्ति। बहिर्भाव साधकानुमाने देवदत्तो बहिर्भाववान् गृहेअसत्वादित्यत्र गृहाधिकरणाभावप्रतियोगित्वं हेतुः। तस्य हि केवलस्य लिङ्गत्वं वा? जीवनविशिष्टस्य वा? इति विकल्प्य केवलस्य गृहाभावमात्रहेतोः मृते जनिष्यमाणेषु च व्याभिचारः, जीवनविशिष्टस्य गृहाभावहेतोश्च बहिर्भाव-

स्थानुमित्सितत्वेन निर्णीतत्वम् इति न किञ्चिदनुमेयमवशिष्यत इति सिद्धसाधनं दोषः। ततश्च अर्थापत्तेरनुमानेन न गतार्थतेति मीमांसकाः। "गेहाभावस्तु यश्शुद्धो वि-द्यमानत्ववर्जितः। स भूतेष्वपि दृष्टत्वात् बहिर्वृत्तेर्न साधकः" इति **श्लोकवार्तिके**। (३९२) "तच्च प्रत्यक्षादिभ्यो भिन्नम् रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात्" इति **शास्त्रदीपिकायाम्**, "नानुमिनोमि नोपमिनोमि न शब्दापयामि किन्तु अर्थापयामि इत्यनुभवादेव मानान्तरत्वं युक्तमिति **भाट्टचिन्तामणौ**, चोक्तम्।

प्राभाकरास्तु श्रुतार्थापत्तिं न स्वीकुर्वन्ति, तेषांमयमाशयः-पीनो देवदत्तः दिवा न भुङ्क्ते इत्यत्र श्रुतौ दिवाभोजनाभावः रात्रिभोजनं विना पीनत्वस्य अनुपपन्नत्वे सति अनुपपद्यमानोऽपि रात्रिभोजनमेव कल्पयति न शब्दम्। नहि शब्देन विना अर्थस्य अनुपपत्तिः। किन्तु अर्थेनैवेति तत्कल्पनैव उचिता। यदि अर्थकल्पनाय प्रवृत्ता अर्थापत्तिः रात्रिभोजनरूपस्यार्थस्य सविकल्पकज्ञानवेद्यत्वेन शब्दपूर्वकत्वप्रतीतेः शब्द एवादौ उपतिष्ठते इति शब्द एव कल्पनीय इत्युच्यते तदैवं समादधते प्राभाकराः- सर्वत्र सविकल्पकज्ञानेषु शब्दो विशेषणतया भासते। वाचकतया शब्दोऽर्थं अवच्छिनत्ति। तेन गौरिति प्रतीतौ गोशब्दवाच्योऽयमित्याकारकोऽर्थो गृह्यते। तर्हि अत्र शब्दः शब्दवाच्यत्वं निर्वहति। तेन अर्थस्याप्रतिपादकः अस्मिन् विषये शब्दः। किन्तु वृद्ध व्यवहारावगतया वाचकतया वाच्यं विशिनष्टि। तेन शब्दोऽर्थस्य अनुपस्थापकत्वात् प्रथमामपि अनुपपत्तिं शमयितुं क्षम इति नार्थापत्तिप्रमेयतां गन्तुमर्हति। तेन अर्थविषया एव इयमिति श्रुतार्थापत्तेरनभ्युपगमः। प्रपञ्चितश्चैतत् **प्रकरणपञ्चिकायाम्** (२७८- )। एवञ्च पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र "रात्रौ भुङ्क्ते" इति शब्दः कल्पनीय इति भाट्टाः, प्रभाकरास्तु रात्रिभोजनरूप अर्थ एवेति वदन्ति।

**अनुपलब्धिः** —"अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासंनिकृष्टस्य" इति शाबर भाष्यवाक्यम्। अत्र प्रमाणशब्दः प्रत्यक्षादिरुपप्रमापञ्चकपरः। तदभावोऽनुपलब्ध्याख्यं प्रमाणमित्यर्थः। यथा - भूतले घटो नास्तीत्येवं भूतलाधिकरणतया भूतलव्यतिरेकेण प्रतीयमानस्य घटाभावस्य प्रत्यक्षाद्यविषयस्य बोधकप्रत्यक्षादिप्रमापञ्चकस्योत्पत्तुं

योग्यस्यापि योऽनुत्पादः दृश्यादर्शन योग्यनुपलम्भादिपर्यायः प्रमाणाभावशब्दितः स एवानुपलब्ध्याख्यं प्रमाणमिति भावः। ततश्च भाष्यमिदं अनुपलब्धिप्रमाणलक्षण परमिति भाट्टानामाशयः।

भावाभावभेदेन भिद्यमाने पदार्थसामान्ये यो भावः येन इन्द्रियेण गृह्यते तदभावोऽपि तेनैव इन्द्रियेण गृह्यत इति प्रमाणचतुष्टयवादिनो नैयायिकाः। तत्तदिन्द्रियैः तत्तदभावे गृह्यमाणे तत्तत्प्रतियोग्यनुपलम्भस्य सहकारिकारणतां स्वीकुर्वन्तः अनुपलब्धेः प्रमाणान्तरत्वं न स्वीकुर्वन्ति।

तत्र मीमांसकाः भाट्टास्तु अर्थापत्तिपर्यन्तानि पञ्च प्रमाणानि भावमात्रगोचराणि नाभावग्रहणे व्याप्रियन्ते। तथाहि–न हि स अभावः इन्द्रियेण गृह्यते। इन्द्रियव्यापाराभावेऽपि तस्योत्पत्तेः। यो हि प्रातःकाले गृहेऽवस्थितः मध्याह्ने पृच्छ्यते–किमस्मिन् गृहे प्रातः कश्चित् श्यामो लोहिताक्षः पीनो दृष्ट इति स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालिकं इन्द्रियव्यापारं विनैव अवधारयति। अतश्च न इन्द्रियकरणकं तत् ज्ञानम्। लिङ्गलिङ्गिनोः सम्बन्धग्रहणाभावाच्च नाप्यनुमेयम्। सादृश्यज्ञानाभावात् नाप्युपमानम्। अतोऽवश्यं प्रमाणान्तरभूतया अनुपलब्ध्यैव अभावस्तादृशः प्रत्येतव्य इति अनुपलब्धेः षष्ठं प्रमाणत्वं स्वीकर्तव्यम्। "प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता" इति **श्लोकवार्तिके** (४०९) दृश्यते। तद्ग्राहकं च योग्यानुपलब्धि-र्मानान्तरम्। तथाहि अभावो नेन्द्रियग्राह्यः संनिकर्षाभावात् न च विशेषणादि संनि-कर्षः, तस्य प्रत्येकवृत्तितया उभयनिष्ठत्वाभावेन संनिकर्षत्वायोगात्, अभावस्याधिकरणा-त्मकत्वे भूतले घटाभाव इत्याधाराधेयभावप्रतीत्यनुत्पत्तेः" इति भाट्टचिन्तामणौ च दृश्यते। दर्शनयोग्यस्यादर्शनं–दर्शनाभावः **योग्यानुपलब्धिरिति** कथ्यते। तेन घटाभावादि-ज्ञानं दर्शनाभावेन प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकेन यदि घटस्स्यात् तदा दृश्येतेत्यकारकेन घटाभावो ज्ञायते। योग्यता च योग्यप्रतियोगिकत्व योग्याधिकरणत्वादिरूपा तत्तदभावग्रहे नानारूपा। ततश्च अभावश्चतुर्विध इति भवति। वर्णितञ्चेदं **श्लोकवार्तिके** "क्षीरे दध्यादि...उच्यते" इत्यन्तम्। तेषु मृत्पिण्डादौ कारणे कार्यस्य घटादेरुत्पत्तेः पूर्वं

योऽभाव: स प्रागभाव:, स च भविष्यतीति प्रतीतिविषय:। मृत्पिण्डे मुद्गरपातानन्तरं घटस्य योऽभाव: स प्रध्वंसाभाव:। यत्राधिकरणे यस्य कालत्रयेऽप्यभाव: सोऽत्यन्ता-भाव:, यथा वायौ रूपात्यन्ताभाव:। इदमिदं नेति प्रतीतिविषयोऽन्योन्याभाव:। यथा घटे पटभेद:।

प्राभाकरास्तु ''अभावोऽपि प्रमाणाभाव'' इति भाष्यं प्रमाणलक्षणपरं न स्वीकुर्वन्ति। तेषां मते अनुपलब्धेरधिकरणात्मकत्वात्, अधिकरणस्य भूतलादे: इन्द्रियग्राह्यत्वेन भावातिरिक्तस्य अभावस्य प्रमेयस्यैवाभावात् तदर्थं अनुपलब्धे: प्रमाणत्वेनाश्रय: नोपपद्यत इति अभावनिराकरणपरमिदं भाष्यमिति वदन्ति। अयमत्र तेषां सिद्धान्त:-भाववस्तूनां अवगति: द्विविधा। एका भावान्तरसंसृष्टविषया, अपरा तदेकविषया। द्वितीयापि द्विविधा-प्रतियोगिनि दृश्ये, अदृश्ये च। तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धि: सैव प्रतियोगिनोऽभाव:। तथा च यस्मिन् दृश्ये प्रतियोगिनि या तदेकविषया बुद्धि: सा तद-भाव इति विशेषतो व्यपदिश्यते-भूतले घटाभाव इति। अतो भूतले घटो नास्तीत्युक्ते घटे अदृश्ये भूतलमात्रस्य बोध इत्युक्तं भवति। प्रतियोगिनि दृश्यत्वञ्च अन्यत्र प्रमितस्यान्यत्र प्रसक्ति:। अस्य अस्वीकारे अप्रसक्तनिषेधस्समापद्येत। सा च प्रसक्ति: प्राभाकरमते ज्ञानविशेष इति अभावप्रतीतिरुपपन्ना भवति। प्रमाणान्तरवादिनां मते अनुपलब्धिलक्षणा प्रमाणानुत्पत्ति: सत्तया अवबोधिका? अथवा ज्ञाततया? इति विकल्प्य यदि ज्ञाततया तदा स्वापादने सर्वाभावप्रतीतिप्रसङ्ग:। अतो विदितैव अनुपलब्धि: अभाव प्रतीति कारणमिति पक्ष: स्वीकर्तव्यो भवति। तथा सति अनुपलब्धेराभावरूपतया तद्भानमपि अनुपलब्धि-प्रमाणगम्यमित्यनवस्था स्यात्। इति युक्तय: **प्रकरणपञ्चिकायां** (२८२) **प्रभाकरविजये तन्त्ररहस्ये** च वर्णिता:। ततश्च अनुपलब्धि: प्रमाणान्तरं नेति प्राभाकरा:॥

**शाब्दं प्रमाणम्**-''शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्'' इति **शाबर भाष्यम्**। अत्र शास्त्रमिति लक्ष्य निर्देश:, शब्दविज्ञानदसन्निकृष्टेऽर्थे विज्ञानमिति लक्षणम्। शास्त्रशब्देनात्र पङ्कजादिवत् योगरूढ्या धर्माधर्मप्रतिपादकानि-''प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥'' इति प्रसिद्धानि ''पुराण

न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।''
इत्युक्तानि चतुर्दश धर्मस्थानापरपर्यायाणि विद्यास्थानानि गृह्यन्ते। शब्दशब्देन
चोदनाभिधीयते। अर्थशब्दः धर्माधर्मवाचकः। तथा च चोदनात्मके शब्दविज्ञानात्
प्रमाणान्तरागम्यधर्माधर्मविषयकं ज्ञानं येन भवति तच्छास्त्रमिति। अतश्च प्रकृतलक्षणस्य
न वेदानुपयोगित्वम्, न वा लौकिकवाक्येष्वतिव्यापकत्वं वा। एवं पदश्रवणानन्तरं
गृहीतपदपदार्थसंगतिकस्य पुंसः पदार्थस्मृतौ जातायां तैरेव पदार्थैः स्मृतैः अज्ञात-
अबाधितार्थविषयकं यत् विशिष्टवाक्यार्थज्ञानं उत्पद्यते सा शाब्दीभावना प्रमा।
तज्जनकशब्दः प्रमाणमिति वक्तव्यम्। पदज्ञानं करणम्, पदार्थस्मृतिरवान्तरव्यापारः
शाब्दबोधः फलम्। पदानि स्वस्वार्थमवगमय्य निवृत्तव्यापाराणि भवन्ति। अवगतास्तु
पदार्थाः परस्परसंसर्गरूपं वाक्यार्थं लक्षणया प्रतिपादयन्तीति वाक्यार्थे पदार्थानां
लक्षणावादिनः मीमांसकाः। ततश्च शब्दज्ञानजन्यं असन्निकृष्टार्थविषयकं यथार्थज्ञानं
शब्दप्रमा, तत्करणीभूतशब्दः प्रमाणमिति भवति। एवं वाक्यश्रवणानन्तरं पदोपस्थितपदार्थानां
संसर्गविषयिणी प्रमितिः प्रत्यक्षादिविलक्षणा जायते तत्करणं शब्दः, तज्ज्ञानं वा
प्रमाणान्तरम् इति सिद्धम्। वाक्यार्थबोधे वैयाकरणानामिव धात्वर्थस्य न मुख्यविशेष्य-
त्वम्, न वा नैयायिकानामिव प्रथमान्तपदार्थस्य। किन्तु आख्यातार्थभूतायाः अर्थभावनायाः
मुख्यविशेष्यत्वम्। एवञ्च देवदत्तःपचतीत्यत्र पाकानुकूलकृत्याश्रयो देवदत्त इति, देवदत्तः
तण्डुलं पचतीत्यत्र तण्डुलकर्मकपकानुकूलकृत्याश्रयो देवदत्त इति च नैयायिकानां मते
बोधः। धात्वर्थमुख्यविशेष्यकवादिनां वैयाकरणानां मते देवदत्तनिष्ठः पाकः, देवदत्त-
निष्ठस्तण्डुलकर्मकः पाक इति बोधः। तत्र कारकाणां क्रियया साकमेव अन्वयनियमात्
प्रथमार्थस्यापि अभिहितकारकस्य क्रियायां अन्वयस्यैव युक्तत्वात् तादृशनियमोल्लङ्घनं
नैयायिकानां दोषः। सर्वत्र प्रत्ययार्थः प्रधानमिति यो नियमस्तस्य धात्वनन्तरप्रत्ययार्थे
परित्यागात् तादृशनियमोल्लङ्घनञ्च दोष इति मीमांसकाः आख्यातार्थमुख्यविशेष्यकं
शाब्दबोधं स्वीकुर्वन्ति। एवञ्च पचतीत्यत्र पाकं करोतीति, पचत्योदनमित्यत्र पाकेन
ओदनं करोतीति विवरणं भवति। एवञ्च धात्वर्थस्य कर्मत्वेन करणत्वेन वा आख्यातार्थकृतौ

अन्वयो युक्त इति देवदत्त:पचतीत्यस्य पाककरणिका देवदत्तकृति:, पचति ओदनं देवदत्त इत्यत्र पाककरणिका ओदनभव्यका देवदत्तकृतिरिति बोध: स्वीक्रियते।

तदिदं शाब्दं प्रमाणं पौरुषेयम्, अपौरुषेयमिति द्विविधम्, तत्र लौकिकं पौरुषेयम्, वैदिकन्तु अपौरुषेयम्। उभयत्रापि अनाप्तप्रणीतत्वरूपस्य अप्रामाण्यकरणस्याभावे शब्दस्यादुष्टत्वात् शाब्दं स्वत: प्रमाणम्। शब्दप्रमाणमन्यथापि द्वेधा विभज्यते-सिद्धार्थ बोधकम्, विधायकञ्चेति। नद्यास्तीरे पञ्च फलानि सन्ति, एष राजा द्राविड: इत्यादि लोके सिद्धार्थ बोधकम्। वेदे वज्रहस्त: पुरन्दर: इत्यादिवाक्यम्। विधायकमपि औपदेशिकम्, आतिदेशिकश्चेति द्विविधम्। इदं इत्थं कर्तव्यमिति औपदेशिकम्। तद्वदिदं कर्तव्यमिति आतिदेशिकम्। अतिथि: धृतसूपशाकादिभि: भोजयितव्य इति लौकिकौपदेशिकस्य उदाहरणम्। अवधात-प्रोक्षण-आधार-आज्यादिभि: अङ्गै: उपहृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं सम्पादयेदिति वैदिकौपदेशिकस्योदाहरणम्। देवदत्तवत् यज्ञदत्तो भोजयितव्य इति लौकिकातिदेशिकोदाहरणम्। सौर्ययागेन ब्रह्मवर्चसं सम्पादयेत् आग्नेयवत् उपकृत्य इति वैदिकातिदेशिकस्योदाहरणम्। अनयोरेव विस्तार: जैमिनिना द्वाशसु अध्यायेषु निरूपित:। तत्र पूर्वषट्कं उपदेशस्य उत्तरषट्कमतिदेशस्य विवरणपरम्। सर्वोऽयं विस्तर: वेदे चोदनालक्षणस्य धर्मस्य परिकर:। चोदना च लोके वेदे वा लिङ् लोट् तव्यप्रत्ययानां अर्थ:। तत्र पदश्रवणानन्तरं गृहीतपदपदार्थसङ्गतिकस्य पुंस: पदार्थस्मृतौ जातायां तैरेव पदार्थै: स्मृतैरज्ञाताबाधितार्थविषयकं यद्विशिष्टवाक्यार्थज्ञानमुत्पद्यते सा शाब्दी भावना, तज्जनकशब्द: प्रमाणम्। तत्र तत्तद्वाक्यस्थानि पदानि यदा स्वीयमर्थ मुपस्थाप्य विरतानि भवन्ति तदा पदैरभिहिता: पदार्था: आकाङ्क्षा-सन्निधि-योग्यतारुपै: कारणै: परस्परान्वययुक्ता: वाक्यार्थबोधका भवन्ति। ततश्च अभिहितानां पदार्थानां मिथोऽन्वयात् अभिहितान्वय इति वाद: प्रसिद्ध:। तादृशैरन्वितपदार्थैश्च वाक्यार्थे जननीये आकाङ्क्षा योग्यता आसत्ति: सहकारिकारणानि। घट: कर्मत्वमित्यादेर्निराकङ्-क्षतया स्वरुपायोग्यात्, अयमेति पुत्रो राज्ञ: पुरुषोऽपसार्यतामित्यादेर्जनितान्वयबोधेन निराकाङ्क्षाद् वह्निना सिञ्चतीत्यादेरयोग्यत्वात्, गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादेरनासन्नाच्च

शाब्दबोधानुदयात् आकाङ्क्षादीनां सहकारित्वं स्वीकर्तव्यम्। **आकाङ्क्षा**- पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा इति प्रसिद्धं लक्षणम्। क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियाया:, करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात्। गामानय इत्यादि लौकिकवाक्ये समिधो यजति दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्यादि वैदिकवाक्ये च तादृशाकाङ्क्षासत्वाल्लक्षणसमन्वय:। गौरश्व: पुरुषो हस्तीत्यादौ तदसत्वान्नातिव्याप्ति:। एवं पदनिष्ठा तत्पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपा आकाङ्क्षेति च लक्षणम्। अयमेति पुत्रो राज्ञ: पुरुषोऽपसार्यता मित्यत्र राजपदस्य पुत्रेण सह जनितान्वयबोधस्य न पुरुषसाकाङ्क्षता। स्पष्टञ्चेदं मानमेयोदये भाट्टचिन्तामणौ च। तात्पर्यविषयसंसर्गाबाध:, अन्वयप्रयोजकधर्मवत्त्वम्, शाब्दबोधजनकबाधाभावो वा **योग्यता** इति योग्यतालक्षणनि दृश्यन्ते। अस्ति चैतत् पयसा सिञ्चतीत्यत्र सेकान्वय प्रयोजकधर्मजलत्वस्य पयसि सत्वात् योग्यता। वह्निना सिञ्चेदित्यादौ तादृशसेकान्वय प्रयोजकधर्माभावात् न योग्यता। स प्रजपतिरात्मनो वुपामुदखिदत् इत्यादिवाक्ये तात्पर्य विषयतूपरपशु प्राशस्त्यस्याबाधात् योग्यता उपपद्यते। पदजन्यपदार्थोपस्थिति:, अव्यवधानेन पदजन्यपदार्थोपस्थिति:, अव्यवधानेन अन्वयप्रतियोग्युपस्थिति: एकेनैव पुंसा पदानां अविलम्बेनोच्चारितत्वम्, पदानां संविधानमिति **आसत्ति**लक्षणानि विद्यन्ते। तच्च संनिधानं शब्दैस्संनिहितत्वेन पदार्थानां बोधनरूप:। अत: कालकृतसन्निहितत्वाभावेन च द्वेधा सान्निध्यभावोऽत्र भवति। तत्र भिन्नकालोच्चरितयो: पदयोर्नान्वयबोधकत्वम्। नापि च गां बधानेत्यत्र दृश्यमानस्याप्यश्वस्य बन्धनक्रियायामन्वय:। तस्य शब्देन बोधितत्वाभावात्। अत: शब्दप्रतिपन्नानामेवान्वयनियम:। प्राभाकरमते आसक्ति: बुद्धिकृतैव हेतु र्न तु शब्द कालाभ्यां कृतेति स्वीक्रियते। स्पष्टेञ्चेदं **मानमेयोदये**। अव्यवधनेन अन्वयप्रतियोग्यु-पस्थितिरिति आसत्तिलक्षणे अव्यवधानञ्च प्रकृतान्वयाबोधाननुकूललक्षणेन। अननुकूलत्वञ्च प्रकृतान्वयबोधाननुकूलोपस्थित्यधिकरणत्वम्। ततश्च गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ नासत्ति:। अतश्च आन्तरालिकानुकूलपदार्थोपस्थितेर्न व्यवधायकत्वम्। श्लोकादौ तु आसत्तिभ्रमेण शाब्दबोध:। अथवा अन्वयप्रतियोग्युपस्थापकपदाव्यवधानमासत्ति:, श्लोकादौ

तु योजनावाक्यादेव शाब्दबोध:। एवं अश्रुतपदार्थस्थले "द्वार" मित्यादौ "पिधेही" ति पदाध्याहारपूर्विकैव पदार्थोपस्थिति:। प्राभाकरास्तु पिधानरूपस्यैवार्थस्य अध्याहार-मिच्छन्ति। स्पष्टञ्चेदं **प्रकरणपञ्चिकाया:** वाक्यार्थमातृकायाम् (३९८-)। तथासति पद जन्यपदार्थोपस्थितेरेव शाब्दबोधजनकत्वनियमात् अर्थाध्याहारे पिधानांशे शाब्दत्वा-भावात् शाब्दबोधो न भवेदिति **मानमेयोदये**।

अस्माच्छब्दात् श्रोतु: पुरुषस्य अयमर्थबोधो जायतामित्याकारिका या वक्तुरिच्छा सैव **तात्पर्य**मिति तादृशतात्पर्यज्ञानञ्च शाब्दबोधे कारणमिति न्यायदर्शनम्। यथा घटम् इति पदं आधेयतासंसर्गकघटप्रकारककर्मताविशेष्यकबोधं जनयतु इत्याकारिणीच्छैव तात्पर्यम्। तादृशेच्छया श्रोतृपुरुषस्य ज्ञानं जायते। तच्च ज्ञानं अनेन घटमिति पदं आधेयतासंसर्गेण घटप्रकारक कर्मताविशेष्यकबोधविषयकेच्छया उच्चारितमित्याकारकम्। योग्यताज्ञानादिवत् तात्पर्यमपि कारणमिति। शुकप्रभृति पक्षिणां शब्देभ्यो येषां शाब्दबोधो भवति तत्र ईश्वरेच्छारूपं, ईश्वरीयतात्पर्यं कारणम्। अपभ्रंशपदघटितवाक्येषु शुकादिवाक्येषु वा तादृशरुपेण शिशिक्षयितु: पुरुषस्यैव तात्पर्यं कल्पनीयम्। यदि तात्पर्यज्ञानं न कारणं तर्हि सैन्धवमानय इत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य च बोधो न भवेदिति। परन्तु मीमांसादर्शने तात्पर्यस्य शाब्दबोधजनने पृथक् कारणता न स्वीक्रियते, घटमानयेत्यादिस्थले तात्पर्यज्ञानमन्तरेणापि शाब्दबोधोदयात्। तात्पर्यज्ञानस्य कारणत्वस्वीकारे वैदिकवाक्येषु तात्पर्यज्ञानार्थं ईश्वर: कल्पनीयो भवेत्। यदि च अध्यापकतात्पर्यज्ञानं तत्रत्यस्थलीय शाब्दबोधोपपत्तये परिकल्प्यते तदपि नोचितम्। यत: सृष्टेरादौ अध्यापक एव कश्चिन्नास्तीति तात्पर्यज्ञानाभावात् शाब्दबोधानुत्पत्तिप्रसंगात्। किञ्च अग्निना सिञ्चतीत्यादावपि तात्पर्यग्रहाभावेनैव अन्वयबोधाभावे सिद्धे तद्वारणाय योग्यताज्ञानादीनां हेतुत्वस्य उच्छेद: प्रसज्येत। सैन्धवमानयेत्यादौ बोधद्वयीयसामग्रीसत्वे किमश्वविषयको बोध:, अथवा लवणविषयक इति सन्देहोच्छेदाय प्रकरणज्ञानवशात् गमनप्रसंगे वक्त्रोच्चारित-वाक्यजनितत्वात् अयं बोधोऽश्वविषयक एव, भोजनप्रकरणे तु लवणविषयक एवेति ज्ञानसम्भवात् न तात्पर्यज्ञानं कारणम्। अतश्च परमार्थदृष्ट्या आवश्यकप्रकरण-

समभिव्याहारादिना तज्ज्ञानसम्भवे "त द्धेतोरेव हेतुत्वे मध्ये किं तेन" इति न्यायेन तात्पर्य स्वीकारस्य वैयर्थ्यम्। प्रपञ्चितञ्चैतत् **मानमेयोदये भाट्टचिन्तामणौ च**। वैदिकवाक्यानां अर्थावधारणञ्च अनादिमीमांसापरिशोधिततर्कैः "उभयाकाङ्क्षा प्रकरणमित्यादिभिः प्रमाणैश्च भवतीति शाब्दबोधोपपत्तेः तात्पर्यज्ञानस्य शाब्दबोधकारणता नास्ति। इति। शाब्दबोधे पदार्थोपस्थितिमात्रं न कारणम्, पचतीत्यादौ प्रत्यक्षदृष्टकलापादेरपि शाब्दबोधापत्तेः, नापि पदजन्यपदार्थोपस्थितिर्हेतुः पदोपस्थितस्वाश्रयाकाशादेरपि शाब्दबोधापत्तेः। अतः वृत्या पदजन्यपदार्थोपस्थितिर्हेतुरिति वक्तव्यम्। तत्र **वृत्तिर्नाम** शाब्दबोधजनकोपस्थितिजनकज्ञानविषय इत्युच्यते। ततश्च शाब्दबोधौपयिकोप-स्थितिजनकः पदपदार्थयोस्सम्बन्धो वृत्तिरिति, पदार्थानां स्वार्थबोधकता वा वृत्तिरिति लक्षणम्। **अभिधा-लक्षणा-गौणीति** वृत्तयः तिस्त्र इति मीमांसादर्शनम्। शक्त्यपराभिधा अभिधा। "सामर्थ्यं सर्वभावानां शक्तिरित्यभिधीयते इति **श्लोकवार्तिकम्**, (२९९) पदानां स्वार्थे मुख्या वृत्तिरभिधा, सैव शक्तिरित्युच्यते। अव्यवधानेन शब्दजन्यप्रतीत्यनुकूला वृत्तिः शक्तिरिति **भाट्टचिन्तामणौ**। अव्यवहितत्वञ्च अर्थान्तरप्रतीत्यद्वारकत्वमिति स्वीकर्तव्यम्, साक्षात् शब्दजन्यार्थप्रमितिसहकारिज्ञानविषयत्वं शक्तित्वमिति लक्षणम्। अस्या एव शास्त्रान्तरे सङ्केतव्यवहारः। शक्तिरियं शब्दगतत्वेन अर्थगतत्वेन द्विविधा। तत्र शब्दगता शक्तिः मन्त्राणां विनियोजिका। अर्थगता शक्तिश्च "स्त्रुवेणं अवद्यति" स्वधितिना अवद्यति हस्तेन अवद्यति इत्यादिषु स्त्रुवस्य आज्यादिवत् द्रव्यादाने, स्वधितेः मांसावदाने, हस्तस्य पुरोडाशाद्यवदाने च। शक्तिरियं पदार्थान्तरमिति मीमांसादर्शनम्। सा च लौकिक वैदिकभेदेन द्विविधा। प्रथमा अग्न्यादिगता दाहकत्वशक्तिः, द्वितीया यागादिगता स्वर्गादिसाधनत्वशक्तिः, पदानां स्वार्थबोधकताशक्तिः अभिधानाम्ना व्यपदिश्यते दर्शनान्तरेषु। अर्थापत्या शक्तिः कल्प्यते। तथाहि-सत्स्वपि बीजादिषु अङ्कुरार्पणसमर्थेषु तेषां मूषिकाघ्राणे अङ्कुरोत्पत्ति र्नदृश्यते। तदन्यथानुपपत्या चैवं कल्प्यते-अवश्यमस्ति अतीन्द्रियमपि बीजादेः किञ्चित् रूपम्, यस्य विनाशात् अङ्कुरानुत्पत्तिरिति। तदेव शक्तिरिति व्यपदिश्यते। एवं यागादेरपि श्रुतिबोधितस्वर्गादिरूपफलसाधनत्वान्यथानुपपत्या

अपूर्वं नाम किञ्चित् कल्प्यते। ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिवाक्यैः ज्योतिष्टोमादीनां कर्मणां स्वर्गादिसाधनत्वं श्रूयते। तच्च स्वर्गादिकं देशान्तर-कालान्तर-शरीरान्तर भोग्यं आशुतरविनाशिनो यागादेर्नोत्पत्तिमर्हति। अतस्तावत्कालपर्यन्तावस्थायि किञ्चित् कल्प्यते। सैव यागादेश्शक्तिरपूर्वाभिधेया। सा च फलबलात् यजमानात्मनिष्ठतया कल्प्यते। साधितञ्चेदम्- "शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः"" "शक्तिस्तत्रास्ति काचिद्धि वहने सा समर्थ्यते। सङ्घातेन तु वर्णानां प्रत्येकं काचिदिष्यते॥" इति **श्लोक-वार्तिके** (२९९) एवं **तन्त्रवार्तिके**। यद्यपि शब्दनिष्ठशक्ति ज्ञाने सत्येव शाब्दबोधः, शाब्दबोधे च सत्येव शक्तिस्वरूपज्ञानमित्यन्योन्याश्रयदोष इति प्रश्न उदीयात् तथापि स्वाभाविकत्वादिति स्वीकारान्न दोष इति **शास्त्रदीपिकायाम्**। ततश्च घटपदस्य कम्बुग्रीवादिमदर्थानुगत घटत्वबोधकत्वम्। घटादिपदानां हि घटत्वादिजातिरेवाभिधेया, न व्यक्तिः। तासामानन्त्यात् एकस्यां व्यक्तौ शक्तिग्रहणे व्यक्त्यन्तरस्य बोधानापत्तेः। तत्रापि शक्तिस्वीकारे तासामनन्तत्वात् अतन्तशक्तिकल्पनाप्रसङ्गात्। नापि जातेरुपलक्षकत्वं स्वीक्रियते, तथात्वे नागृहीतविशेषणा बुद्धिः विशिष्टेषूपजायत" इति न्यायात् प्रथमो-पस्थितायां जातावेव लाधवात् शक्तिकल्पनौचित्यम्। अन्यथा जातिस्वीकाराप्रसक्तिः। ततश्च पदानां जातावेव शक्तिः, व्यक्तिबोधस्तु लक्षणाक्षेपादिना इति मीमांसादर्शनम्।

कस्य पदस्य कस्मिन्नर्थे शक्तिरित्यस्य विषयस्य निश्चयार्थं अन्यशास्त्राणीव मीमांसायामपि अष्टौ प्रामाणानि स्वीकृतानि-तानि व्याकरण-उपमान-कोश-आप्तवाक्य-व्यवहार-वाक्यशेष-विवरण-सिद्धपदसान्निध्य-रूपाणि। तेषु व्यवहार प्रसिद्धसान्निध्य विवरणानार्मनुमानेऽन्तर्भावः। व्याकरण वाक्यशेष कोशानां शाब्देऽन्तर्भावः। उपमाने-नोपमितिरूपः शक्तिग्रहः। कोशो वैजयन्त्यमरादिः। वेदलोकसाधारणं आप्तत्वञ्च प्रतारणाद्यप्रयोज्यहिताहितमनीषाप्रयोजकत्वमिति स्वीक्रियते। अत्र च आप्तवाक्यत्वेन न शक्तिग्रहहेतुता, किन्तु वाक्यत्वेनेति स्वीक्रियते लाघवात्। एवञ्च "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदमित्यादिवाक्येन शक्ति-ग्रहः। स्पष्टञ्चेदं **भाट्टचिन्तामणौ**। तेषु **व्याकरणं** नाम अष्टप्रस्थानमिन्द्रादिप्रणीतं

शब्दशास्त्रम्, पूर्वपूर्वव्याकरणतः शब्दगुणदोषविद्भिः अभियुक्तैः प्रकृति-प्रत्ययादि-परिकल्पनया कृतं शब्दसाधुत्वाख्यायकं शास्त्रमिति कथ्यते। कर्मणि द्वितीया, कर्तरि प्रथमा, इत्यादीनां धातु प्रकृति प्रत्यय, पाचक-पाठकादीनां, निपाताव्ययादीनाञ्च शक्तिग्रहो भवति। सादृश्यज्ञानात्मकप्रमाणमुपमानम् यथा गोसदृशो गवयपदवाच्य इति सादृश्यज्ञानात् गवयो गवयपदवाच्य इत्याकारकः शक्तिग्रहो, भवति। क्वचित् वैधर्म्यज्ञानादपि उपमितिर्जायते धिक् करभमतिदीर्घग्रीवम्, कठोरकण्टकाशिनम् अपसदं पशूनामिति वाक्यात् अतिदीर्घग्रीवत्वादिपशवन्तर वैधर्म्यज्ञानात् उष्ट्रे करभपदवाच्यताग्रहः। कोशो नाम अमर-निघण्डु-वैजयन्त्यादिः। ''स्वरव्ययं स्वर्गनाकत्रिदिवत्रिगशालयाः'' इति कोशात् नाकादिपदानां स्वर्गे, ''अप्येकदन्तहेरम्बलम्बोदर गजाननाः'' स्वसमानार्थकशब्द-समूहात्मकात् कोशात् गणेशरूपे अर्थे शक्तिग्रहो भवति। **आप्तवाक्यं** नाम प्रयोगहेतुभूतयथार्थ-ज्ञानवत्पुरुषोच्चारितवाक्यम् तस्मादपि शक्तिग्रहः यथा-कोकिलः पिकपदवाच्य इत्याप्तवाक्येन पिकपदस्यार्थमजानानस्य पिकपदस्य कोकिलात्मकेऽर्थे शक्तिग्रहो भवति। **व्यवहारो** नाम प्रयोज्यवृद्धमुद्दिश्य उत्तमवृद्धादिकृतः शब्द-प्रयोगः चेष्टाद्यात्मको वा। प्रयोज्यवृद्धप्रयोजकवृद्धव्यवहारः। प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यवृद्ध-प्रवृत्तिमुपलभमानो बालः प्रयोज्यवृद्धस्य तद् ज्ञानं ज्ञाने शब्दस्यैव हेतुतां तदन्यथानुपपत्या च शक्तिं परिकल्पयन् आवापोद्वापाभ्यां तत्तत्पदस्य तत्र तत्रार्थे शक्तिमवधारयति। यथा केनचित् प्रयोजकवृद्धेन गुरुणा प्रयोज्यवृद्धं स्वशिष्यं प्रति घटमानयेत्युक्तम्। ततश्च प्रयोज्यवृद्धेन घट आनीतः। तदवधार्य पार्श्वस्थो पौत्रो बालः घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमबधारयति। तत्र यद् आदौ प्रयोजकवृद्धेन घटमानयेत्युक्तम्, ततश्च प्रयोज्यवृद्धस्य शाब्दबोधः, ततो घटानयनं मदिष्टसाधनमिति ज्ञानम्, ततश्च घटानयने प्रवृत्तिः। ततो घटानयनरूपा चेष्टा भवतीतिरीत्या घटानयनस्य घटमानयेतिशब्द प्रयोज्यत्वं बोध्यम्। अत्रेयमनुमानप्रवृत्तिः - इदं घटानयनं घटानयन-विषयकप्रवृत्तिजन्यम् चेष्टात्वात् मदीय चेष्टावत्। ततश्च सा प्रवृत्तिः घटानयनधर्मिक कृतिसाध्यताज्ञानजन्या प्रवृत्तित्वात् निजप्रवृत्तिवत्। तादृश प्रवृत्तिजनक तादृशकृति-

साध्याताज्ञानं असाधारण हेतुकं कार्यत्वात् घटवत् इति। असाधारणकारणं च वृद्ध-वाक्यमेव भवति। तदनन्तरं घटं नय गामानय इति वाक्यात् आवापोद्वापाभ्यां घटादिपदानां कार्यन्वितघटादौ बालः शक्तिं निश्चिनोति-अनुमिनोति। घटपदं आनयन-नयनात्मक-कार्यान्वितघटे शक्तम् अनुपपत्तिप्रतिसन्धानं विना तादृश-कार्यन्वित घटविषयकबोध-तात्पर्येण वृद्धोच्चरितत्वात्। ततश्च घटमानय घटं नय इत्यादि वृद्धव्यवहार प्रयोजक वाक्यानि प्रवर्तकत्वेन लिङादिपदघटितानि, एवं तद्व्यवहारदर्शिनः शिशवोऽपि कार्यताविषयकघटाद्यर्थबोधं प्रत्येकघटादिपदानां सामर्थ्यमवधारयन्तः तदुत्तरकालमपि कार्यन्वितघटादौ शक्तिज्ञानेनैव तादृशघटादिबोधं स्वीकुर्वन्ति। इत्थं प्रयोजकवृद्ध-प्रयोज्यवृद्धयोः पारस्परिक व्यवहारतः बालस्य शक्तिग्रहो भवति। **वाक्यशेषो नाम**-प्रकृतवाक्यतिरिक्ते वाक्ये प्रकृत-वाक्यार्थोपयोगी पदकदम्बोऽर्थवादाद्यात्मकः। यथा-अक्ताः शर्करा उपदधाति, तेजो वै घृतमित्यत्र येन केनचित् घृततैलादिना अञ्जनं कार्यम् वाक्यशेषस्थघृतशब्दस्य स्तावकत्वात् उपलक्षणत्वमात्रमिति संशयो विध्यपेक्षित-विशेषस्यार्थवादेन नियमनं युक्तमिति घृतेनैव अञ्जनं कार्यमिति "सन्दिग्धे तु वाक्यशेषा-दिति सूत्रोदाहरणं प्रसिद्धम्। एवं स्वाराज्यकामोऽग्निष्टोमेन यजेत इत्यादि विधिशेषी-भूतेभ्यः "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत्सुखं स्वंः पदास्पदम्" इत्यादिवाक्येभ्यः स्वरादिपदस्य स्वर्गसुखादौ शक्तिग्रहः। एवं यव-मयश्चरुर्भवतीत्यत्र यवपदस्य याजक-द्विजादीनां दीर्धशूकविशेषे अपशब्दभाषिणां यवनादीनां प्रियङ्गुतण्डुले च प्रयोगात् मध्यस्थस्य कुत्रार्थे शक्तिरिति सन्देहे "यदान्याः ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति" इति "वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशलिनः॥" इति श्रुतिस्मृतिवाक्यशेषात् यवपदस्य दीर्धशूकात्मके यत् ज्ञानं शाब्दबोधात्मकं भवति तत् वाक्यशेषस्योदाहरणम्। **विवरणं** नाम-तत्समानार्थकपदान्तरम्। तस्मादपि शक्तिग्रहो भवति। यथा-घटोऽस्ति इत्यस्य विवरणं कलशोऽस्ति इति क्रियते। ततश्च पूर्वोक्तविवरणात् घटपदस्य कलशे शक्तिर्निर्णीयते। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणात् पाकशब्दः विक्लत्यनुकूलव्यापारावच्छिन्ने

प्रसिद्ध इति पचति इत्यस्य पचधातोः विक्लत्तिरूपेऽर्थे प्रत्ययं यत्नार्थकत्वंञ्च कल्प्यते। **सिद्धपदस्य सान्निध्यादपि शक्तिग्रहो भवति।** सिद्धपदस्य सान्निध्यं नाम असाधारण-धर्मात्मक प्रसिद्धार्थकपदस्य सहोच्चरितत्वज्ञानम्। तस्मात् शक्तिग्रहो यथा- इहसहकारतरौ मधुरं पिको रौति इत्यत्र पिकशब्दस्य कोकिले शक्तिग्रहः। पिकः कूजति पञ्चममिति कोशात् पञ्चमादिस्वररूपं माधुर्यम्। तत्र मधुरशब्दस्य सहकारतरुशब्दस्य च सान्निध्यात् पिकपदस्य कोकिलात्मकेऽर्थे शक्तिग्रहो भवति। एवं नीरूपस्पर्शवान् वायुः, नीरूपं निःस्पर्शं च मनः, इत्यादौ रूपशून्य-स्पर्शशून्यवदादिषु वाय्वादिषु शक्तिग्रहो भवति। एवं सत्कृत्यालङ्कृतां कन्यां ददानः ककुदः स्मृत इत्यादौ उक्तरीत्या कन्यादातरि ककुदपदस्य शक्तिग्रहो भवति। वर्णितञ्चेदं **सिद्धान्तमुक्तावली शब्दशक्तिप्रकाशिकादौ।**

**लक्षणा**वृत्तिः - लक्षणा तु "अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते" इति **तन्त्रवार्तिके** लक्षणलक्षिता। सादृश्यान्यशक्यसम्बन्धेनाशक्योपस्थितिः, स्वशक्यसम्बन्धत्वं वा लक्षणेति **भाट्टचिन्तामणिः**। शक्यसम्बन्धो लक्षणा, स्वज्ञाप्यसम्बन्धेनोद्बुद्धशक्तिसंस्कारतो बोधो लक्षणा इत्यादि **लधुमञ्जूषायां** मीमांसकमतनिरूपणावसरे लक्षणाविचारे वर्णितानि। गभीरायां नद्यां घोष इत्यादौ गभीरायां नद्यामिति वाक्यस्य गभीराभिन्ननदीतीरे लक्षणा। मीमांसकमते वाक्ये शक्तेरस्वीकारात् शक्यसम्बन्धरूपलक्षणायास्तत्रासम्भवात् ज्ञाप्य-सम्बन्धरूपा लक्षणा स्वीक्रियते। तथाहि- नहि तत्र गभीरपदं तीरलक्षकम्, नद्यामित्यनेन अन्वयानापत्तेः। न हि तीरं नदी। अत एव न नदीपदेऽपि लक्षणा, गभीरपदार्थानन्वय-प्रसङ्गात् नहि भवति तीरं गभीरमिति। नापि पदद्वये प्रत्येकं लक्षणेति वक्तव्यम् विशिष्ट-नदीतीराप्राप्तिप्रसङ्गात्। न च नदीपदमेव गभीरनदीतीरलक्षकम् गभीरपदं तत्र तात्पर्य-ग्राहकमिति वाच्यम्, विनिगमकाभावात्। नच नदीपदस्य द्रव्यवाचकतया साक्षात् सम्ब-न्ध एव विनिगमक इति वाच्यम्। गभीरपदस्यापि नित्यं गुणवाचकतया तेनापि साक्षात् सम्बन्धेऽविशेषात्। अतः समुदाये एव लक्षणा स्वीकार्या इति मीमांसकानामाशयः।

स्वशक्यसम्बन्धवत्वं लक्षणेति भाट्टचिन्तामणिः। तस्याश्च पदनिष्ठत्वं स्वाश्रय-सम्बन्धिवाचकत्वसम्बन्धेन। यथा गङ्गायां घोष इत्यादौ गङ्गापदशक्यप्रवाहसम्बन्धो

लक्षणा, तज्ज्ञानकार्यतावच्छेदकं च गङ्गासम्बन्धवत्तीरत्वप्रकारकतीरविशेष्यकशाब्द-त्वम्। गङ्गासम्बन्धस्य सम्बन्धत्वेन भानं संयोगत्वेन वा, गङ्गासम्बन्धितीरे घोषः, गङ्गासम्बन्धयुक्ततीरे घोष इत्युभयविधानुभवात्। एवं सिंहो देवदत्तः इत्यत्रापि परम्परासम्बन्धेन सिंहसम्बन्धी देवदत्तः इति बोधे लक्षणा। अभिधेयाविनाभूतस्य अभिधेयसम्बन्धेन यत्र प्रकारता तत्र वृत्तिर्लक्षणा इति युक्तम्। यदा तु सिहंनिष्ठ क्रौर्यसजातीयक्रौर्यवलेन देवदत्तप्रतीतिः तदा गौणीति वक्तव्या। अभिधेयाविना-भूतप्रतीतिर्लक्षणेत्यस्य स्वशक्यसम्बन्धत्वमित्यर्थः। तस्याश्च पदनिष्ठत्वं स्वाश्रयसम्बन्धि-वाचकत्वसम्बन्धेनेति गङ्गायां घोष इत्यादौ गङ्गापदशक्यप्रवाहसम्बन्धो लक्षणा। एवं नीलं घटमानयेत्यत्र नीलशब्दस्य गुणवाचकस्य तद्विशिष्टे लक्षणा। एवं गामानयेत्यत्र गोपदं आकृतिबोधकं तत्सहचरितां व्यक्तिं लक्षयति। परन्तु व्रीहीन् प्रोक्षति इत्यादौ व्रीह्यादिपदं अपूर्वसाधनत्वलक्षणम्। अपूर्वसाधनत्वावच्छिन्नान् व्रीहीन् प्रोक्षेत् इति लाक्षणिकशाब्द-बोधः। अत्र गोपदवत् व्रीहिपदं न व्रीहिव्यक्तिं लक्षयति, तथासति नीवारादिषु व्रीहिवैकृतद्रव्येषु प्रोक्षणासिद्धेः। यदि व्रीहिपदं व्यक्तिलक्षकं स्यात् तर्हि वैकल्पिकद्रव्येषु यवेषु व्रीहिसदृशेषु प्रतिनिधिद्रव्येषु प्रोक्षणाभावप्रसङ्गः स्यात्। अतः अपूर्वसाधनत्वे व्रीहिपदस्य लक्षणा समाश्रीयते। एवं पदार्थद्वारा वाक्यर्थोपस्थिति र्लक्षणयेति वाक्येऽपि लक्षणावादिनः भाट्टमीमांसकाः। **लक्षणाबीजन्तु** तात्पर्यानुपपत्तिर्वा अन्वयानुपपत्तिर्वा इत्यत्र विवदन्ते दर्शनकाराः। तेषु वैयाकरणाः नैयायिकाश्च तात्पर्यनुपपत्तिरेव लक्षणाबीजमिति वदन्ति। स्पष्टञ्चेदं **लघुमञ्जूषा सिद्धान्तमुक्तावल्यादौ**। परन्तु आयुर्वै धृतमित्यादौ तात्पर्यानुपपत्यैव निर्वाहेऽपि व्रीहीन् प्रोक्षति सोमेन यजेत इत्यादौ वेदकर्तृ-पुरुपाभावेन तात्पर्याभावात् अन्वयानुपपत्तिरेव लक्षणावीजमिति पूर्वमीमांसकाः। **भाट्टचिन्तामणौ** च शक्यार्थान्वयानुपपत्तिर्लक्षणाबीजम्, न तु तात्र्यानुपपत्तिरित्युक्तम्। वेदे तदसम्भवात् इति च। सेयं लक्षणा द्विविधा-जहत्स्वार्था, अजहत्स्वार्था चेति। तत्र जहत्स्वार्थाया लक्षणम् स्वशक्यार्थाविशेष्यकान्वयबोधलक्षणा जहत्स्वार्था। यथा गङ्गायां घोष इति। अत्र शक्यार्थस्य न भानम्, अपितु लक्ष्यार्थस्यैव। द्वितीयाया अजहत्स्वार्थायाः

स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका इति लक्षणम्। यथा यष्टी: प्रवेशय इति। अत्र शक्यार्थस्यापि क्रियान्वय:। यष्टीरिति पदस्य यष्टिधरेषु इति लक्षणा स्वीक्रियते। एवं छत्रिणो यान्ति छत्रिअच्छत्रिषु गच्छत्सु छत्रिणां बाहुलयेन छत्रिणो यान्ति इति अच्छत्रिषु यानकर्तृत्वानुपपत्या छत्रिपदस्य छत्रि-अच्छत्रि-उभयसाधारणे एकार्थवाहित्वे अजह-त्स्वार्था लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यत्र काकशब्दे दध्युपघातके लक्षणां स्वीकृत्य दध्युपघातकेभ्य: काकेभ्य अकाकेभ्यश्चेति दधि रक्ष्यतामिति बोध:। विषं भुङ्क्ष्व, शुक्ल:पट, इतीदमुदाहरणद्वयं वेदान्तशास्त्रे यथसंख्यमुदाहृतम्। यष्टी: प्रवेशय सोऽयं देवदत्त इत्यादि जहदजहल्लक्षणेत्युक्तम्। वेदान्तदर्शनोक्तलक्षितलक्षणाया अप्यनयोरेवान्तर्भाव:। सिंहो माणवक इत्यत्रापि परम्परासम्बन्धेन सिंहसम्बन्धी माणवक इति लक्षणैव। अभिधेयसम्बन्धस्य तत्र वृत्तित्वात्। यदा तु सिंहनिष्ठक्रौर्यस-जातीय क्रौर्यकत्वेन माणवकप्रतीति:, तत्र गौणीति वक्तव्या। अतएव व्रीहिन् प्रोक्षति इत्यादौ असत्यप्यविनाभावे दर्शपूर्णमासैकवाक्यतया अपूर्वसाधनत्वं लक्ष्यते इति मीमांसामर्यादा। एकवाक्यता च क्वचित् प्रत्यक्षा-यथा-सोमेन यजेत इति। क्वचित्तु प्रकरणाद्यनुमेया-यथा-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, समिधो यजतीत्यनयो: समिदाद्युपेता दर्शपूर्ण-मासभावना कर्तव्येत्येवंरूप एकवाक्यता कल्प्यते।

**गौणीवृत्ति:** -लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता'' इति **तन्त्रवार्तिके** दृश्यते। सादृश्यरूप शक्यसम्बन्धो गौणीति नैयायिका:। स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणीति वैयाकरणा:। स्वशक्यगुणसमानजातीय गुणयोगनिमित्तत्वं गौणत्वमिति **मीमांसाकौस्तुभे**। स्वशक्यसम्बन्धिगुणसजातीयगुण-वदुपस्थितिहेतुवृत्तिर्गौणीति **भाट्टचिन्तामणौ**। तत्र स्वं सिंहादिपदम्, तच्छक्यं सिंहादि, तस्य गुणा: क्रौर्याद्या:, तत्सजातीया: गुणा: क्रौर्याद्या: माणवके देवदत्ते वा वर्तन्त इति सिंहपदं देवदत्ते माणवके वा गौणमिति युज्यते। अत: स्वशक्यसमवेतगुणवत्ता गौणीवृत्तिरिति। आरोपितार्थवृत्तित्वं गौणत्वम्, सिंहो देवदत्त इति प्रयोक्ता सिंहत्वादि देवदत्ते आरोप्य वाक्यं प्रयुङ्क्ते, बोद्धा च तथैव प्रतिपद्यते। आरोपश्च आहार्यो

बोध्य:। परन्तु तदभाववति तत्प्रकारकं ज्ञानम् **आरोप**:। यथा रजतत्वाभाववतीं शुक्तिं रजतत्वेन जानीयामिति बाधज्ञानसमकालिकेच्छाजन्यं इदं रजतमिति ज्ञानम्। अत्र बाधज्ञानसमकालिकेच्छाजन्यं ज्ञानम् स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारकं ज्ञान मित्यपि प्रसिद्धम्। यथा इदं रजतमिति स्थले स्वं रजतत्वम्, तद्विरोधी धर्म: रजतत्वाभाव:, स धर्मितावच्छेदको यत्र, एवं स्वं रजतत्वम् प्रकारो यत्र तादृशं ज्ञानमियं शुक्ती रजतमिति ज्ञानम्, तदेव च **आहार्यम्**। लोके आरोपाहार्यादिकर्तु: पुरुषस्य सद्भावात् तादृशव्यवहार: कामं युज्यते। परन्तु अपौरुषेये वेदे आरोपकपुरूषाभावेन आरोपो न सम्भवति इति गौणीवृत्ते: पृथक् स्वीकार: मीमांसकाभिमत:। एवविध गौणत्वाङ्गीकारेण शक्यार्थत्यागाभावेन वेदप्रामाण्यापत्तिलेशोऽपि न भवति। ततश्च अग्निर्माणवक इत्यत्र वह्नित्वलक्षितात् अर्थात् यत् शुद्धत्वम्, तेजस्त्वम्, पैङ्गल्यम्, इत्यादि: गम्यते तत्सादृश्यात् माणवके या बुद्धिर्जायते सा गौण्या वृत्या। एवं वेदवाक्यानां यजमान: प्रस्तर:, आग्नेयो वै ब्राह्मण: यजमानो यूप: इत्यादीनां यजमानप्रस्तरयो: यागकारणत्वरूपगुणयोगेन यजमानपदं प्रस्तरे गौणम्, अग्निब्राह्मणयोरेकप्रजापति-मुखप्रभवत्वरूपगुणयोगेन आग्नेय ब्राह्मणे गौणम्, चक्षुर्गम्यत्व-ऊर्ध्वत्व-तेजस्त्व साधर्म्यात् यजमानपदं यूपे गौणमित्यादि **मीमांसासूत्र-शाबरभाष्य-तन्त्रवार्तिकादौ** प्रथमा-ध्यायचतुर्थपादे विस्तृतम्। ततश्च **गौणी लक्षणातो भिन्ना** वृत्तिरिति मीमांसका:। यत्र स्वशक्यवृत्तिगुणानामेव सम्बन्धत्वेन रूपेण बोध: तत्र लक्षणा। अत एव गङ्गायां घोष इत्यत्र प्रवाहसम्बन्धस्य संसर्गतयैव भानात् तत्र लक्षणा गौणीस्थले तु क्रूरत्वादीनां प्रकारतया भानात् गौणीवृत्तिरिति। अतएव **तन्त्रवार्तिके**-''अभिधेयाविनाभूतप्रतीतिर्लक्षणा, लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टातु गौणता'' इत्युक्तम्। आलङ्कारिकास्तु व्यञ्जनावृत्तिमतिरिक्तां स्वीकुर्वन्ति-''विरतास्वमिधाद्यासु यत्रार्थो-बोध्यतेऽपर:। सा वृत्ति र्व्यञ्जना नाम शब्द-स्यार्थादिकस्य च॥'' **व्यञ्जना** च शक्ति लक्षणाद्यजन्यप्रतीतिजनक: पदादिगतो व्यापार: इति लक्षयन्ति। गङ्गायां घोष इत्यत्र गङ्गागतशैत्यपावनत्वादिविशेषार्थप्रतिपादनम्, गतोऽस्तमर्क इत्यत्र मानिनीं प्रति मा हठं गा इति, ब्राह्मणान् प्रति सन्ध्या उपास्यतामिति,

वणिजः प्रति पण्यान्यपसार्यन्तामिति विशेषार्थप्रतिपादनम्, गच्छ गच्छासि चेत् कान्त तत्रैव स्यज्जनि र्मम इत्यत्र वाक्ये तव गमने मम मरणं भविष्यतीति विशेषार्थप्रतिपदनं च व्यञ्जनावृत्यैव भवतीत्युदाहरन्ति। नैयायिकाः शक्तिमूलायाः व्यञ्जनायाः शक्तौ लक्षणामूलायाः लक्षणायाम्, क्वचिन्तु अनुमानेन गतार्थतां वर्णयन्तः व्यञ्जनां न स्वीकुर्वन्ति। वेदान्तिनः व्यञ्जनानिराकरणे नैर्भर्यं न स्वीकुर्वन्ति। वैयाकरणाः व्यञ्जनावृत्तिं वर्णयन्ति। परन्तु अपौरुषेये वेदे व्यञ्जनावृत्तेरनुपयोगात् मीमांसका व्यञ्जनावृत्तिं न स्वीकुर्वन्ति। स्पष्टञ्चेदं **लघुमञ्जूषा-सिद्धान्तमुक्तावली-शक्तिवादमाधवीयव्याख्या-वेदान्त-कल्पलतिका-भाट्टचिन्तामण्यादौ।**

शब्दप्रमायाः करणीभूतं पदं-**रूढम् यौगिकम्, योगरूढम्, यौगिकरूढञ्चेति** चतुर्विधम्। तेषु यत् समुदायशक्त्या अर्थप्रत्यायकम्, शास्त्रकृत्कल्पितावयवार्थाप्रत्यायकं प्रकृतिप्रत्ययसमुदायार्थमात्रबोधकञ्च तत् रूढं पदम्। यथा घटः, मणिरित्यादिपदम्। मणिशब्दे शब्दार्थकात् मण्धातोः कर्तरि इन् प्रत्यये सति निष्पन्नादपि मणिशब्दात् शब्दकर्तृत्वरूपोऽर्थः न स्वीक्रियते परन्तु रत्नरूप एवार्थः स्वीक्रियते। स च रूढिमहिम्नैव। अवयवशक्त्यार्थप्रत्यायकं पदं यौगिकम्, शास्त्रकृत्कल्पितावयवार्थमात्रप्रत्यायकं यौगिकम्। यथा चित्रगुः, पाचक इत्यादिपदम्। बहुव्रीहिसमासबलेन चित्रात्वविशिष्टगवां स्वामीत्यर्थः चित्रगुपदात् स्वीक्रियते। विक्लित्तितदनुकूलव्यापारार्थकेन पचधातु कर्त्रर्थकेन अकप्रत्ययेन योगात् विक्लित्यनुकूलव्यापारश्रयरूपोऽर्थः पाचकशब्दात् स्वीक्रियते। अवयवशक्त्या समुदायशक्त्या च एकार्थप्रत्यायकत्वम्, अवयवशक्त्युपोद्वलितसमुदाय-शक्त्यार्थप्रतीतिजनक्रत्वम्, शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपित समुदायार्थ-बोधकत्वं वा योगरूढस्य लक्षणम्-यथा पङ्कजादिपदम्। अत्र पङ्कजनिकर्तृत्वपद्मत्वो-भयप्रकारकोपस्थितेरानुभाविकत्वात्। अन्यथा पङ्कजादिपदात् भेकादिबोधोऽपि स्यात्। समुदायशक्त्या अवयवशक्त्या च भिन्नार्थप्रतिपादकं पदं यौगिकरूढमित्युच्यते मण्डप-अश्वगन्धादिपदम्। मण्डं पिबतीतिव्युत्पत्या कदाचित् मण्डपानकर्तारम्, कदाचित् रूढ्या गृहवितानं च मण्डपपदमभिधत्ते इति मण्डपपदं यौगिकरूढम्। अश्वगन्धशब्दः अश्वसम्बन्ध-

वत्तया वाणिशालाबोधे यौगिकम्, ओषधि विशेषे रूढञ्चेति यौगिकरूढं भवति। एवं उद्भित्पदं योगेन तरुगुल्मादिवाचकं रूढ्या तन्नामकयागविशेषवाचकमिति उद्भिदा यजेत पशुकाम इत्यादौ ज्ञायते। स्पष्टञ्चेदं **भाट्टचिन्तामणि-लघुमञ्जुषा मुक्तावल्यादौ**।

**प्राभाकरमते** शब्दविज्ञानापेक्षादात्ममनस्संनिकर्षात् यददृष्टार्थविषयं विज्ञानं तत् **शास्त्रं (शब्द:) नाम प्रमाणमि**त्युच्यते। ''शास्त्रं शब्दविदा यदसन्निकृष्टार्थविज्ञानम्'' इति **प्रकरणपञ्चिकायां तन्त्ररहस्ये** चोक्तम्। **शाबरभाष्यो**क्तं-शास्त्रं शब्दविज्ञाना-दसन्निकृष्टेऽर्थे विज्ञानमिति शास्त्रलक्षणं न लौकिकवैदिकशब्दसाधारणम्, लौकिकानां आप्तवाक्यानां अनुमानप्रमाणेऽन्तर्भावात् न तत्साधारणामिदं लक्षणम्। परन्तु वैदिकानामेव वाक्यानां प्रमाणान्तरापरिच्छिन्नकार्यार्थावनोधकत्वात् तदसाधारणमेव लक्षणमिति तेषामाशय:। एवञ्च प्राभाकराणां मते लौकिकवाक्यानां नैव प्रमाणशब्दत्वम्। प्रमाणशब्दस्तु वेदात्मक अपौरुषेय एव। तथाहि-पदानां खलु स्वाभाविकी अर्थबोधनानुकूलशक्तिरस्ति। न केवलमियं पदार्थमात्रानुकूला, अपितु इतरान्वितपदार्थबोधानुकूला। तादृशान्वयस्यापि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वञ्च अङ्गीकुर्वन्त एते प्राभाकरा: अन्विताभिधानवादिन इत्युच्यन्ते। विभक्त्यन्तस्य एकपदस्य अर्थेन अन्वितो अन्य: पदार्थ: पदेन अनुभाव्यते, न तु विभक्त्यन्तपदार्थमात्रम्। एवञ्च अन्वितस्य अभिधानमि-त्यर्थ:। लोके केवलेन पदार्थमात्रेण न कश्चिद् व्यवहरति, अपितु विशिष्टेनैव, अन्ततो गत्वा अस्ति भवतीत्यर्थेनैव वा व्यवहार: क्रियते। प्राथमिकशक्तिग्रहणवेलायां एव व्युत्पित्सुर्बाल: स्वप्रयोजनार्थं व्यवहरतो: उत्तमवृद्धमध्यमवृद्धयोर्वाक्यात् विशिष्टे एव अर्थे शक्तिं गृह्णाति। पदानां आवापोद्वापाभ्यां विपर्यासेऽपि प्रथमातिक्रमणे मानाभावात् अन्विताभिधानं युज्यत इति वदन्ति। स्पष्टञ्चेदं **प्रकरणपञ्चिकावाक्यार्थमातृकायाम्**। तत्र पदार्थांशे ज्ञाता सती शक्ति: कारणम्, अन्वयांशे स्वरूपसती शक्ति: कारणम्। अत एवैते कुब्जशक्तिवादिन इति कीर्त्यन्ते। एवं वदतां प्राभाकराणामयमाशय: -वैदिकेषु पदेषु स्वभावसिद्धया अन्विताभिधानानुकूलशक्त्या बोधं जनयत्सु तस्मिंश्च बोधे स्वत: प्रामाण्यशालिनि वेदवाक्यानां स्वतस्सिद्धं प्रामाण्यम् अप्रकम्प्यं भवतीति। लोके शब्दस्य

विसंवाददर्शनात् वेदेऽपि तादृशानां शब्दानां विसंवादित्वशङ्कानिरासाय वेदप्रामाण्यपरि-पालने भूयसा दत्तादराः प्राभाकराः लौकिकशब्दानां पृथक् प्रमाणत्वमेव न स्वीकुर्वन्ति। तेषामनुमानेनैव गतार्थत्वात्। विषयोऽयं प्रकरणपञ्चिकायाः **नीतिपथे वाक्यार्थमातृ-कायाञ्च** सिद्धान्तितः। "श्रूयतामवधानेन गतिर्नरगिरामपि। अनुमानात् पृथग्भावं तासां नेच्छन्ति सूरयः।" इति। एवञ्चायं निष्कर्षः कर्तव्यः -यत्-वेदशब्दः, लौकिकाप्तशब्द इत्युभयप्रामण्यं भाट्टेषु नैयायिकेषु च निरूपयत्सु उभयस्याप्यनुमानरूपतया पृथक्प्रामाण्य-विरहं वैशेषिकेषु च निरूपयत्सु एकस्य पृथक् प्रामाण्यं, अपरस्य अनुमानत्वञ्च वदन्तः प्राभाकराः तृतीयं पन्थानमनुसरन्ति। इति। ततश्च प्राभाकरसिद्धान्ते वैयाकरणाभिमतं स्फोटरूपं शब्दतत्वं नाभिमतम् परन्तु वर्णाश्च नित्याः, तादृशक्रमवन्तो वर्णाः पदमिति शब्दस्वरूपम्, अर्थाश्च प्रवाहरूपेण नित्याः, शब्दार्थयोः प्रत्याय्यप्रत्यायकभाव-रूपस्सम्बन्धः औत्पत्तिक-अपौरुषेयः, तत्परिज्ञानञ्च शक्तिग्रहात् शक्तिग्रहश्च वृद्धव्यवहारेणेति स्वीकुर्वन्ति। शाब्दबोधे आकाङ्क्षा-सन्निधियोग्यताः उपलक्षणानि भवन्ति। तत्र अन्वितस्याभिधानार्थम्, उक्तार्थघटनाय वा प्रतियोगिनि या जिज्ञासा सा **आकाङ्क्षा**, यस्यार्थस्य श्रवणानन्तरं आकाङ्क्षायोग्यताभ्यां अर्थान्तरे बुद्धिपरिवृत्तिः स **सन्निधिः**, सम्बन्धार्हत्वं **योग्यत्**वमिति **प्रकरणपञ्चिकायाः वाक्यार्थमातृकायां** लक्षणानि वर्णितानि। तदिदं शाब्दं प्रमाणं **उपदेशजम्, कार्यजञ्चेति** द्विविधम्। जैमिनेर्द्वादशलक्षण्यां पूर्वषट्के उपदेशः उत्तरषट्के अतिदेश इति भाट्टसम्प्रदायः। प्राभाकरास्तु उपदेशस्य न केवलं आतिदेशिकत्वम्, न वा औपदेशिकत्वम्, किन्तु विध्याक्षिप्तत्वात् उपदिष्टत्वम्, तद्वद्भावेन प्रापितत्वात् आतिदेशिकत्वमपि। अतश्च उभयलक्षणाक्रान्तत्वात् उभयरूपत्वं शास्त्रस्येति वदन्तः पूर्वषट्के उपदेशप्रमेयम्, उत्तरषपके कार्यप्रमेयमिति मन्यमानाः सम्पूर्णस्यास्य शास्त्रस्य शब्दनिरूपणपरत्वं उपपादयन्ति। एवं शास्त्रे लिङादेः कार्ये शक्तिः, लोके च क्रियाकार्ये लक्षणेति तज्ज्ञानस्य प्रवृत्तिहेतुत्वम्। तच्च कृतिसाध्यत्वे सति कृतिनिरूपितोद्देश्यताशालित्वात् कार्यमित्युच्यते। प्रमाणान्तरागोचरत्वात् अपूर्वमित्यप्युच्यते। पुरुषं तत्तत्कर्मणि नियोजयत् नियोग इति गीयते। ततश्च प्राभाकरमते एवं शाब्दबोध

प्रक्रिया-''ज्योतिष्टोमेन स्वर्गकामो यजेत'' इत्यत्र लिङ्प्रत्ययेन कृतिसाध्यतया अपूर्वमभिधीयते। तत्र कृतेः तत्साध्यस्य कर्तृसंख्यायाश्च शब्दार्थत्वेऽपि ''यत्परः स शब्दार्थः'' इति न्यायेन प्राधान्येन अपूर्वस्य वाक्यार्थता। कृत्यभिधानन्तु कार्याभिधानेनैव लभ्यत इति अनन्यलभ्यः शब्दार्थ इतिन्यायेन कार्यस्य प्राधान्येन प्रत्ययार्थत्वे कृतिसंख्ययोरुपसर्जनत्वं एकेनैव अभिधाव्यापारेण-अवगम्यते। व्यापारन्तराभ्युपगमे विरम्य व्यापारापत्तेः। अर्थ द्वयस्य एकव्यापारेण शब्दतात्पर्य विषयकत्वेऽपि गोत्वगोव्यक्त्योरिव प्रधानोपसर्जनभावो अविरुद्ध एव। शब्दस्य तथाविधसामर्थ्यावधारणात्। तेन लिङ्प्रत्ययस्य कार्याभिधायकत्वेऽवधारिते यजिप्रकृतिः तदाकाङ्क्षितविषयं समर्पयति। तथा च यजेत इत्यनेन यागविषयककृतिसाध्यं इति बोधः पर्यवस्यति। पूर्णायां कृतिविषयकाङ्क्षायां स्वर्गकामपदं कृत्याश्रयं नियोज्यं अभिधत्ते। ज्योतिष्टोमेनेत्यत्र च प्रकृत्या यागपरिच्छेदाय तन्नाम अभिधीयते। तृतीयाविभक्तिश्च औपादानिकं यागकरणत्वमनुवदति। एवञ्च स्वर्गकामनियोज्याश्रितज्योतिष्टोमनामकयागविषयककृतिसाध्यं अपूर्वमिति शाब्दबोधरूपः वाक्यार्थः पर्यवस्यति। तथा च शक्तिर्लक्षणा गौणीति वृत्तित्रयम्, परन्तु शक्तेः पदार्थान्तरत्वम्, आकाङ्क्षायोग्यतासन्निधिसहकारित्रयं स्वीकरोति प्राभाकरसम्प्रदायः। असन्निकृष्टशब्देन सपरिकरापूर्वस्थितिम्, तद्बोधकं शास्त्रमेव शब्द इति तस्यैव प्रामाण्यम्। वर्णितञ्चेदं शास्त्रं (शब्दः) शब्दविदां यदसन्निकृष्टार्थविज्ञानम् इति **प्रकरणपञ्चिकाया अमृतकलायाम्**।

एतावत्पर्यन्तं प्रत्यक्षानुमानोपमानावेद्ययोः केवलवेदशब्दैकवेद्ययोः धर्माधर्मयोः निरूपणाय प्रवृत्ते मीमांसाशास्त्रे प्रत्यक्षादिप्रमाणान्तरावेद्यत्वनिरूपणाय प्रत्यक्षादिप्रमाणानां वर्णनं कर्तव्यमापतितम्। ततश्च प्रत्यक्षानुमानोपमानलौकिकशब्दर्थापत्तिअनुपलब्धीनि प्रमाणानि लौकिकानि इति कथ्यन्ते।

# तृतीयं कुसुमम्

वेदार्थोपयोगीनि धर्माधर्मभेद-धर्माङ्गत्व-क्रम-अतिदेश-ऊह बाधारव्यानि शास्त्रीयाणि अलौकिकानि प्रमाणानीत्यभिधीयन्ते। तेषां विचारे सोदाहरणं कृते समग्रं मीमांसाशास्त्रं विचारितं परिशीलितञ्च भवति। तत्र अलौकिकानि अथवा पूर्वमीमांसाशास्त्रीयाणि प्रमाणानि धर्मबोधक-धर्मभेदक-धर्माङ्गताबोधक-क्रमबोधक-अतिदेशबोधक-ऊहबोधक-बाधबोधकभेदेन सप्तधा भिद्यन्ते। तेषु विधि-अर्थवाद-मन्त्र-नामधेय-स्मृति-शिष्टाचाररूपाणि षट् धर्मबोधकप्रमाणानि। शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणि षट् धर्मभेदकप्रमाणानि। श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या इति षट् धर्माङ्गताबोधकानि विनियोगे प्रमाणानि। श्रुति-अर्थ-पाठ-स्थान-मुख्य-प्रवृत्ति रिति षट् क्रमबोधकप्रमाणानि। वचन-नाम-लिङ्गानि त्रीणि अतिदेश प्रमाणानि। स्थानापत्तिरूहे प्रमाणम्। प्रत्याम्नान-प्रतिषेध-अर्थलोप इति त्रीणि बाधे प्रमाणानि। एतानि शास्त्रप्रसिद्धानि प्रमाणानि अलौकिकानि भवन्ति।

### पूर्वमीमांसादर्शने

प्रमाणानि

- लौकिकानि
- अलौकिकानि (शास्त्रीयाणि)
  - धर्मबोधक
    1. विधि
    2. अर्थवाद
    3. मन्त्र
    4. नामधेय
    5. स्मृति
    6. शिष्टाचार
  - धर्माङ्गताबोधक
    1. श्रुति
    2. लिङ्ग
    3. वाक्य
    4. प्रकरण
    5. स्थान
    6. समाख्या
  - क्रमबोधक
    1. श्रुति
    2. अर्थ
    3. पाठ
    4. स्थान
    5. मुख्य
    6. प्रवृत्ति
  - अतिदेशबाधक
    1. वचन
    2. नाम
    3. लिङ्ग
  - ऊहबोधक
    1. स्थानापत्तिः
  - बाधबोधक
    1. प्रत्याम्नाय
    2. प्रतिषेध
    3. अर्थलोप
  - धर्मभेदक
    1. शब्दान्तर
    2. अभ्यास
    3. संख्या
    4. संज्ञा
    5. गुण
    6. प्रकरणान्तर

# तृतीयं कुसुमम्

वेदार्थोपयोगीनि धर्माधर्मभेद-धर्माङ्गत्व-क्रम-अतिदेश-ऊह बाधारव्यानि शास्त्रीयाणि अलौकिकानि प्रमाणानीत्यभिधीयन्ते। तेषां विचारे सोदाहरणं कृते समग्रं मीमांसाशास्त्रं विचारितं परिशीलितञ्च भवति। तत्र अलौकिकानि अथवा पूर्वमीमांसाशास्त्रीयाणि प्रमाणानि धर्मबोधक-धर्मभेदक-धर्माङ्गताबोधक-क्रमबोधक-अतिदेशबोधक-ऊहबोधक-बाधबोधकभेदेन सप्तधा भिद्यन्ते। तेषु विधि-अर्थवाद-मन्त्र-नामधेय-स्मृति-शिष्टाचाररूपाणि षट् धर्मबोधकप्रमाणानि। शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणि षट् धर्मभेदकप्रमाणानि। श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या इति षट् धर्माङ्गताबोधकानि विनियोगे प्रमाणानि। श्रुति-अर्थ-पाठ-स्थान-मुख्य-प्रवृत्ति रिति षट् क्रमबोधकप्रमाणानि। वचन-नाम-लिङ्गानि त्रीणि अतिदेश प्रमाणानि। स्थानापत्तिरूहे प्रमाणम्। प्रत्याम्नान-प्रतिषेध-अर्थलोप इति त्रीणि बाधे प्रमाणानि। एतानि शास्त्रप्रसिद्धानि प्रमाणानि अलौकिकानि भवन्ति।

## पूर्वमीमांसादर्शने

### प्रमाणानि

लौकिकानि | अलौकिकानि (शास्त्रीयाणि)

**धर्मबोधक**

१. विधि
२. अर्थवाद
३. मन्त्र
४. नामधेय
५. स्मृति
६. शिष्टाचार

**धर्माङ्गताबोधक**

१. श्रुति
२. लिङ्ग
३. वाक्य
४. प्रकरण
५. स्थान
६. समाख्या

**क्रमबोधक**

१. श्रुति
२. अर्थ
३. पाठ
४. स्थान
५. मुख्य
६. प्रवृत्ति

**अतिदेशबाधक**

१. वचन
२. नाम
३. लिङ्ग

**ऊहबोधक**

१. स्थानापत्तिः

**बाधबोधक**

१. प्रत्याम्नाय
२. प्रतिषेध
३. अर्थलोप

**धर्मभेदक**

१. शब्दान्तर
२. अभ्यास
३. संख्या
४. संज्ञा
५. गुण
६. प्रकरणान्तर

तदिदं शाब्दप्रमाणारव्यं शास्त्रं मीमांसादर्शने अप्रणेतृकम् अथवा अपौरुषेयम्, आप्तप्रणेतृकम्, अथवा पौरुषेयमिति द्वेधा विभक्तुं शक्यते। तत्र स्वार्थप्रवृत्तप्रमाणान्तर-निरपेक्षम् अपौरुषेयमथवा अप्रणेतृकम्। तच्चापौरुषेयं शास्त्रं मन्त्र -ब्राह्मण-समन्वय-भेदेन त्रिविधम्। तेषु "याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम्। तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते॥" **जैमिनीयन्यायमालायां** "तच्चोदकेषु मन्त्राख्या" इति सूत्रवलाच्च अभियुक्तानां मन्त्रपदवाच्यत्वप्रकारकनिश्चयविषयो मन्त्र इति लक्षणम्। मन्त्रपदवाच्यतावच्छेदकश्च अखण्डोपाधिर्वेति वक्तव्यम्। एवं शेषे ब्राह्मणशब्दः इति सूत्रबलात् मन्त्राश्च ब्राह्मणञ्चेति द्वौ भागौ तेन मन्त्रतः अन्यद् ब्राह्मणमित्येतद् ब्राह्मणलक्षणमिति **जैमिनीयन्यायमालाविस्तराच्च** मन्त्रभिन्नवेदत्वं अखण्डौपाधिर्वा ब्राह्मणत्वमिति तस्य लक्षणम्। भेदसंसर्गादिविलक्षणार्थविषयकज्ञानावेदकं वाक्यं समन्वयात्मकं शास्त्रम् तेषु "उरू प्रथस्व" (तैत्तरीयसंहिता: वाक्यम्, अग्निमीले-पुरोहितमित्यादि ऋग्वाक्यम्, इषेत्वाऊर्जेत्वा इति, "अग्न आयाहि वीतये" तैत्तरीयब्राह्मणवाक्यानि च **मन्त्रवाक्यानि**। "वायुर्वैक्षेपिष्ठा देवता" इति तैत्तरीय-संहितावाक्यम्, कपिञ्जलानालभेत इति वाजसनेयीसंहितावाक्यम्, अग्निर्मूर्धादिवः ककुद्" इति ऋग्वेदीयवाक्यं च **ब्राह्मणवाक्योदाहरणानि**। औपनिषदानि तत्त्वमसि अहं ब्रह्मास्मि इत्यादिवाक्यानि **समन्वयात्मकानां उदाहरणानि**। तच्च ब्राह्मणवाक्यं औपदेशिकम्, आतिदेशिकञ्चेति द्विविधम्। अवधातप्रोक्षणाधारआज्यभागादिभिरङ्गैः उपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं सम्पादयेदित्यादि औपदेशिकम्। सौर्यभागेन ब्रह्मवर्चसं सम्पादयेदाग्नेयवदुपकृत्य इत्यादि आतिदेशिकम्।

वेदे द्वितीयादिष्षष्ठान्तोऽध्यायः औपदेशिकः। सप्तमाध्यायादिः दशमान्त अध्यायः आतिदेशक इति मीमांसाशयः। एकादशद्वादशाध्यायौ उभयसाधारणाविति च। औपदेशिकं ब्राह्मणवाक्यञ्च **विधिमन्त्रनामधेयनिषेधार्थवादात्मकं** चतुर्विधमित्यपि विभज्यते। आप्तप्रणेतृकम्, अथवा पौरुषेयं वाक्यं स्वार्थप्रवृत्तप्रमाणान्तरसापेक्षम्। प्रमाणान्तरापे-क्षणञ्च अस्य प्रामाण्यस्थापनाय। प्रमाण्यस्थापनञ्च अप्रामण्यहेतुनिराकरणार्थम्। **आप्तप्रणे-**

**तृकं** वाक्यं लौकिकम्,-**स्मृति**,-**शिष्टाचाररूपम्**। ततश्च विधिमन्त्रनामधेयनिषेधार्थ-वादस्मृतिशिष्टाचाराः अलौकिकानि शास्त्रप्रसिद्धानि धर्मे प्रमाणानि भवन्ति।

तत्र **विधि**र्नाम प्रवर्तना-निवर्तनान्यतरबोधकं वाक्यम्। प्रर्वतना-निवर्तने प्रवृत्तिनिवृत्तिजनकौ व्यापारौ। तौ च लोके अयमत्र प्रवर्तताम्, अयमस्मात् निवर्तताम् इत्याकारकपुरुषाशयरूपौ। अपौरुषेये वेदे तु पुरुषाभावात् लिङादिनिष्ठौ उक्तपुरुषा-शयसमानाकारौ अलौकिकौ धर्मौ, वेदस्य लिङादिप्रेरितो यजे इति व्यवहारात्। तत्र नञ्समभिव्याहाररहितलिङादिना प्रवर्तना, नञ्सहितलिङादिना च निवर्तना अभिधीयते। शक्यतावच्छेदकस्तु इच्छा-अलौकिक धर्मोभयसाधरणो विषयिताविशेषः। प्रवर्तना च अज्ञातार्थविषयिणी एव फलवती भवति। ततश्च अज्ञातार्थज्ञापको वेदभागो विधिः, स च प्रयोजनवदर्थविधानेन अर्थवान्, तादृशश्चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते-यथा-अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि विधिरयं मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद् होमं विधत्ते। अग्निहोत्रहोमेन स्वर्गं भावयेत् इति। स च विधि-प्रेरणा-प्रवर्तनादिशब्दाभिधेयः प्रवृत्यनुकूलव्यापारः। लोके गामानय इत्याचार्यवाक्यश्रवणानन्तरं शिष्यप्रवृत्तिदर्शनात् शब्दप्रवृत्तौ प्रवर्तनाज्ञानं हेतुः, सा च प्रवर्तना पचेत् इत्यादि लौकिकवाक्ये पुरुषनिष्ठ अभिप्रायविशेषः। वेदस्यापौरुषेयत्वात् यजेत स्वर्ग काम इत्यादिवैदिकवाक्ये शब्दनिष्ठैव प्रवर्तता। शब्दनिष्ठत्वादेव **शाब्दीभावना** इत्युच्यते। स एव विध्यर्थः। वेदे सर्वत्र

विधिवाक्येषु यजेत इत्यादिषु अंशद्वयमस्ति। यजिधातुः, प्रत्ययश्च। प्रत्ययेऽप्यंश-द्वयम् आख्यातत्वम्, लिङ्त्वञ्चेति। तिङ्संज्ञकास्तिबाद्यादेशा: **आख्यातशब्देन** व्यवह्रियन्ते। तथा च यजेत इत्यत्र यज्धातुः प्रकृतिभागः। स च एकोंशः। त इति प्रत्ययभाग अपरोंशः। प्रत्यये अंशद्वयन्तु न स्वरूपेण, किन्तु धर्मद्वयद्वारा। यजेत इत्यत्र लिङः स्थाने त इत्ययमादेशः कृत इति तत्र स्थानिद्वारा लिङ्त्वरूपो धर्म एकः। स च आदेशे तप्रत्यये अनुवर्तते। अपरस्तु आख्यातत्वरूपो धर्मः प्रत्ययस्य स्वगत एव। यजेत इत्यत्र प्रकृत्यंशस्य यज् इत्यस्य यागोऽर्थः। देवतोद्देशेन द्रव्यत्यागो याग इति। प्रत्ययांशस्य अर्थस्तु तादृशयागानुकूला भावना। भावना च व्यापारविशेषः। यागोत्पादकव्यापारविशेषश्च द्विविध:साक्षात् यागोत्पादकः, परम्परया यागोत्पादकश्च। तत्र आद्यः साक्षा-द्यागोत्पादकव्यापारः प्रयत्नरूपः सामग्रीसम्पादन-ऋत्विग्वरणादिरूपो वा यजमान-निष्ठः। यजमानश्च यजनकर्ता। अयं यजमाननिष्ठव्यापार **आर्थीभावना** इत्युच्यते। यजनकर्तृत्वरूपो योऽर्थस्तन्निष्ठत्वात् तस्य व्यापारस्य। अर्थस्य यागकर्त्रादेरियं आर्थी। भावना व्यापारः। द्वितीयस्तु परम्परया यागोत्पादको व्यापारः, एवमेवं कर्तव्यमित्येवं प्रेरणारूपः। स च यजनकर्तारं यः प्रेरयति तादृशप्रयोजककर्तृनिष्ठः। अयं **शाब्दीभावना** इत्युच्यते। प्रेरणारूपव्यापारस्य शब्दनिष्ठत्वात्। शब्दस्य इयं शाब्दी। यजेत स्वर्गकाम इत्यादिर्वेदशब्द एव अत्र प्रयोजककर्तृत्वं अपौरुषेयस्य वेदस्यैव। स च वेदः शब्दरूप एवेति प्रेरणायाः शब्दनिष्ठत्वात् शाब्दीभावना इति व्यवह्रियते। एवञ्च पुरुषनिष्ठायाः प्रवृत्तेरनुकूलः प्रवर्तनाख्यः शब्दनिष्ठः व्यापारः विध्यर्थ इति सिध्यति। नैय्यायिकानां मते तु लिङ्लोट्तव्यप्रत्ययैरभिधीयमानोऽर्थो विधिः। स च इष्टसाधनत्व-कृतिसाध्यत्व-बलवदनिष्टाननुबन्धित्वत्रितयरूपः। तत्र विशेषणविशेष्यभावे विनिगमकाभावात् प्रत्येकं लिङादेश्शक्तिः। व्युत्पत्तिवैचित्र्याच्च अर्थत्रयस्यापि युगपदेव बोधः। तज्ज्ञानमेव प्रवृत्तिं प्रति कारणम्। प्रवृत्तिकारणत्वाच्च प्रवर्तनाशब्देनाभिधीयते। ततश्च प्रवर्तनैव **लिङाद्यर्थस्य** विध्यर्थ इति वदन्ति।

मीमांसकानामाशयस्तु-एवम्-इष्टसाधनत्वादीनां अन्यलभ्यत्वेन लिङर्थत्वानुपपत्तिः "अनन्यलभ्यश्शब्दार्थ" इति न्यायात्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यादिविधयः यागादिकं विदधानाः स्वविषयीभूते यागादौ पुरुषं प्रवर्तयन्ति। प्रवर्तमानश्च पुरुषः यावत् स्वप्रवृत्तिविषयीभूते यागादौ स्वाभिलषितफलसाधनत्वं नावगच्छति तावन्न प्रवर्तते। तस्य अप्रवृत्तौ विधेः प्रवर्तकत्वं न सिध्यति। अप्रवर्तकत्वे च विधिरनर्थकः सम्पद्यत इति विधिरेव स्वप्रवर्तकत्वसिध्यर्थं स्वविषयीभूतस्य यागादेः धात्वर्थस्य इष्टसाधनत्वं, आक्षिपति। आप्ततमो विधिः अनर्थावहे अथवा अकृतिसाध्ये कर्मणि न कदापि पुरूषं प्रवर्तयितुम् ईहत इति विधिबलादेव बलवदनिष्टाननुबन्धित्वं, कृतिसाध्यत्वञ्च आक्षिप्यते। तथा च इष्टसाधनत्वादित्रयस्य अन्यलभ्यत्वात् न लिङादिबोध्यत्वम्। किन्तु प्रवर्तकपुरुष-निष्ठः अयमत्र प्रवर्ततामित्याकारकः अभिप्रायविशेष एव लोके लिङर्थः। तत्र हि गामानय इति लिङादिशब्दघटितवाक्यश्रवणे अयं मां गवानयने प्रवर्तयति इति श्रोता अवगच्छति। तत्र तादृशबोधकारणजिज्ञासायां आवापोद्वापाभ्यां लिङादेरेव प्रवृत्यनुकूलव्यापारवाचि-त्वमध्यवसीयते। प्रेषणाज्ञादीनामपि पुरुषाशयविशेषरूपत्वमेव। सर्वेषामेषां लिङादिवा-च्यत्वेऽपि न तेन तेन रूपेण लिङादिभिरभिधानम्। किन्तु प्रवृत्यनुकूलव्यापारत्वेनैव। एतादृशप्रवृत्यनुकूलव्यापारस्यैव मुख्यं प्रवर्तकत्वम्। तदाश्रयत्वात्तु पुरुषः प्रवर्तक इत्युच्यते। ततश्च प्रवृत्यनुकूलव्यापारः प्रवर्तनैव लिङर्थः। अपरे तु मीमांसका एवं वदन्ति-वेदास्तु अकृतकाः। ततश्च तत्र पुरुषसम्बन्धो नास्ति। आज्ञादयस्तु पुरुषाशय विशेषाः। ततश्च वेदे आज्ञादीनामसम्भवः परन्तु यजेत स्वर्गकाम इत्यादिवाक्यश्रवणसमनन्तरं वेदस्य लिङादिप्रेरितोऽहं यागादिकं करोमीति व्यवहारो दृश्यते। तथा च वैदिकलिङादि-निष्ठः प्रवर्तनाप्रेरणापरपर्यायः पुरुषप्रवृत्यनुकूलव्यापारः कश्चिदवगम्यते। स च पुरुषप्रवृत्ति भवनानुकूलत्वात् भावनेति, वैदिकशब्दनिष्ठत्वाच्च शाब्दीभावनेति कथ्यते। ततश्च लोकवेदसाधारण्येन व्यापारमेकं शक्यतावच्छेदकीकृत्य अनुकूलत्वादेः संसर्गबललभ्य-त्वमङ्गीकृत्य प्रवृत्यनुकूलव्यापार एव लोकवेदसाधारणसामान्येन लिङर्थ इति स्वीकर्तव्यम्। विशेषलाभस्तु तत्तत्समभिव्याहारलभ्य इति वदन्ति। अन्येतु सर्वत्र प्रवृत्तिं प्रति

इष्टसाधनत्वस्यैव करणत्वेनानुभवात् लिङादिः स्वसमभिव्याहृतधात्वर्थनिष्ठमिष्टसाधनत्वमेव प्रवृत्यनुकूलव्यापारत्वेन रूपेण अभिधत्ते। किञ्च आख्यातत्वांशेन अर्थभावनाभिधाने फलान्वयाभावप्रसक्त्या पुरुषप्रवृत्यनुदयापत्तिः, अतः लिङादिनिष्ठा अर्थभावनाभिधानानुकूला अभिधाख्या शक्तिरेव लिङादिभिरभिहिता प्रवत्तिं जनयतीति प्रवर्तनेत्युच्यते। अत्र तन्त्रवार्तिकस्थं ''अभिधा भावनामाहुरन्यामेव लिङादय'' इति वाक्यमिति वदन्ति। इतरे तु अन्यनिष्ठव्यापारबोधकत्वस्यैव शब्दस्वभावत्वात् स्वनिष्ठव्यापारबोधकत्वस्य क्वाप्यदर्शनात् अभिधाशक्तेर्लिङ्वाच्यत्वकल्पने तद्विरोधात् उक्तशक्तेस्संख्याभिधनानुकूलतया तया सह विनिगमनाविरहाच्च अलौकिकधर्मविशेष एव लिङादिनिष्ठः प्रवर्तनाभिधेयः स एव शाब्दीभावनाभिधेयः। तज्ज्ञानमेव प्रवृत्तिकारणमिति कथञ्चित्स्वीकार्यमिति वदन्ति। नव्यास्तु कार्यताज्ञानं द्विविधम्- मयेदं कर्तुं शक्यत इत्येवंरूपमेकम्, ममेदं अवश्यं कार्यमित्येवंरूपं द्वितीयम्। तयोराद्यं पदार्थनिष्ठयोग्यतागम्यमिति न प्रवृत्तिं प्रति हेतुः। द्वितीयन्तु स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिं प्रति हेतुः। इदमेव स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वम्, स्वं नियोज्यः, तद्विशेषणं काम्ये फलकामना, नित्ये शुचितत्कालजीवित्वादि इति इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यकार्यताज्ञानस्य चिकीर्षाद्वारा प्रवर्तकत्वं सिद्धं भवति। तत एव इष्टसाधनत्वेनाज्ञाते मध्वन्नभोजने, अनिष्टसाधनत्वेन ज्ञाते विषभोजने, बलवदनिष्टानुबन्धित्वेन ज्ञाते मधुविषसम्पृक्तान्नभोजने न प्रवृत्यापत्तिः। एवञ्च 'इष्टसाधनत्वबलवदनिष्टाननुबन्धित्व शुचितत्कालजीवित्वज्ञानजन्यानां कार्यताज्ञानानां कार्यताज्ञानत्वेनानुगतानां प्रवृत्तौ हेतुत्वकल्पनं लाघवम्। इष्टसाधनत्वज्ञानादीनां प्रवृत्तिं प्रति हेतुत्वे तु हेतुहेतुमद्भावत्रयकल्पनागौरवम्। न च इष्टसाधनत्वादिज्ञानानां कार्यताज्ञानहेतुत्वकल्पने तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन'' इति न्यायात् प्रवृत्तिं प्रति तेषामेव कारणत्वं युक्तम्। शाब्दबोधे तात्पर्यज्ञानस्येव प्रवृत्तौ कार्यताज्ञानस्य लाघवेन हेतुत्वात् तद्धेतुप्रकरणादीनां शाब्दबोधहेतुत्वाभाववत् कार्यताज्ञानजनकेष्टसाधनत्वज्ञानादीनामपि तद्धेतुत्वकल्पनायोगात्। तस्मात् कार्यता ज्ञानमेव

प्रवर्तकं, कार्यत्वमेव विध्यर्थ इति वदन्ति। स्पष्टाश्चेमे विचारा: **विधिविवेक-भावनाविवेक-न्यायप्रकाश-न्यायसुधा-न्यायरत्नमाला-मीमांसाकौस्तुभ-भाट्टचिन्तामण्या**दौ।

प्राभाकरमीमांसादर्शने तु **अपूर्वरूपं कार्यं लिङादि**प्रत्ययवाच्यं स एव विध्यर्थ इति स्वीक्रियते। अयमेव प्रवर्तकज्ञानोपधायकतानिर्वाहकव्यापार: नियोग इत्युच्यते। ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादौ यजेतेत्यत्र लिङ्प्रत्ययेन कृतिसाध्यतया अपूर्वम-मिधीयवे। तत्र कृतेस्तत्साध्यस्य कर्तृसंख्यायाश्च शब्दार्थत्वेऽपि यत्परस्सशब्दार्थ इति न्यायेन प्राधान्येनापूर्वस्य वाक्यार्थत्वम्। कृत्यभिधानन्तु कार्याभिधानेनेव लभ्यत इति अनन्यलभ्यश्शब्दार्थ इति न्यायेन कार्यस्य प्राधान्येन प्रत्ययार्थत्वे कृतिसंख्ययो रुपसर्जनत्वम् एकेनैव अभिधाव्यापारेण अवगभ्यते। व्यापारान्तराभ्युपगमे विरम्य व्यापारापत्तेः। अर्थद्वयस्य एकव्यापारेण शब्दतात्पर्यविषयत्वेपि गोत्वगोव्यक्त्योरिव प्रधानोपसर्जनभावोऽविरुद्धएव। शब्दस्य तादृशसामर्थ्याविधारणात्। तेन लिङ्प्रत्ययस्य कार्याभिधायकत्वेऽवधारिते यजिप्रकृतिस्तदाकाङ्क्षितविषयं समर्पयति। तथा च यजेतेत्यनेन यागविषयककृतिसाध्य-मिति वाक्यार्थबोध: पर्यवस्यति। पूर्णायाञ्च कृतिविषयाकाङ्क्षायां स्वर्गकामपदं कृत्याश्रयं नियोज्यमभिधत्ते। ज्योतिष्टोमेनेत्यत्र च प्रकृत्या यागपरिच्छेदाय तन्नामाभिधीयते। तृतीया च औपादानिकं यागकरणत्वमनुवदति। एवं च स्वर्गकामनियोज्याश्रितज्योतिष्टोम-नामकयागविषयककृतिसाध्यमपूर्वमिति वाक्यार्थ:। स्पष्टञ्चेदं-"तस्मान्नियोज्यसम्बन्ध-समर्थं विधिवादिभि:। कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते" नियोज्यसम्बन्धसमर्थं कालान्तरस्थायि कार्यं क्रियातिरिक्तं लिङादिभिरुच्यते इति **प्रकरणपञ्चिकाया:** वाक्यार्थ-मातृकायां **तन्त्ररहस्ये** च।

काम्यफलबोधनरहितविधिवाक्येषु स्वाध्यायोऽध्येतव्य इत्यादिवाक्येषु तव्य-प्रत्ययेन स्वाध्यायमधीयीतेति लिङ्प्रत्ययेन च शब्दभावनया स्वाध्यायपदवाच्यमध्य-मस्था: सर्वे लिङादय: प्रेर्यन्ते, अर्थलाभादिभि: प्ररोचनां कृत्वा लिङादिभि: पुरुष: प्रवर्तनीय:। अर्थभावनया पुरुषो अर्थावबोधे नियुज्यते। अध्ययनेन मीमांसया उपस्मृत्य

स्वाध्यायार्थबोधं भावयेदिति। अतोऽत्रापि भावनाद्वयसिद्धिरिति वदन्ति। एवं नित्यकर्मबोधके अहरहः सन्ध्यामुपासीत इत्यादौ शौचादिमत्वप्रतिसन्धानजन्यं कार्यताज्ञानं लिङर्थ इति तदेव प्रवर्तकम्। तत्र स्वं-प्रवर्तमानः पुरुषः, तद्विशेषणं-कामना शौचादिः तद्वत्ता-तद्विद्यमानता, तत्प्रतिसन्धानं-तज्ज्ञानम् तज्जन्यं-यत्कार्यताज्ञानम् इत्यर्थः। ततश्च अहमिदानींतनकृतिसाध्यसन्ध्यावन्दनकः ब्राह्मणत्वे सति विहितसन्ध्याकालीनशौचादिमत्वात् इति शौचादिमत्वप्रतिसन्धानजन्यं कृतिसाध्यताज्ञानमेव प्रवर्तकमिति च स्वीकुर्वन्ति। स्पष्टञ्चेदं विध्यर्थनिरूपणावसरे **न्यायसिद्धान्तमञ्जर्याम्**।

सोऽयं विधिः प्रमाणान्तरेण अज्ञातस्य अलौकिकश्रेयस्साधनीभूतस्य यागादेर्विधायकः, स च यागादिरेव धर्म इति, विधेधर्मबोधकत्वे प्रामाण्यं सिद्धम्। विधिश्चायं अपूर्व-उत्पत्ति-विनियोग-गुण-विशिष्ट-प्रयोग-अधिकार-नियम-परिसंख्याविधिभेदात् भिन्नः। तेषु **अपूर्वविधिः** —अत्यन्ताप्राप्तविषयप्रापको विधिः। विधिरत्यन्तमप्राप्ते" इति तन्त्रवार्तिकम्। अप्राप्तप्रापकत्वञ्च प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वम्, प्रमाणान्तरजन्यप्रतीत्यविषयविषयकप्रतीतिजनकत्वं वा। ततश्च यस्य यदर्थत्वं लिलक्षयिषित विधिवाक्यव्यतिरिक्तेन वाक्यान्तरेण प्रत्यक्षादिप्रमाणान्तरेण च अप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः। यजेत स्वर्गकामः, अग्निहोत्रं जुहुयात् स्वर्गकामः" व्रीहीन् प्रोक्षति इत्यादिविधिरपूर्वविधिः। यथा दण्डसत्वे घटसत्वम्, दण्डाभावे घटाभाव इत्येवमन्वयव्यतिरेकाभ्यां घटस्य दण्डस्य च कार्यकारणभावो लोकत एव सिद्धो भवति न तथा स्वर्गयागयोः कार्यकारणभावो लोकतोऽवगन्तुं शक्यते, नापि यजेत स्वर्गकाम इत्यादिवाक्यव्यतिरिक्तेन वाक्यान्तरेण ज्ञायते, किन्तु अनेनैव विधिनेति भवत्ययमपूर्व विधिः। एवं प्रोक्षणस्यात्यन्तमप्राप्तत्वात् तत्प्राप्तिफलकं व्रीहिप्रोक्षणविधायकं व्रीहीन् प्रोक्षतीति वाक्यं अपूर्वविधिः। अयमपूर्वविधिः - जाति-द्रव्य-गुण-क्रिया-क्रत्वर्थ-पुरुषार्थ-विधिभेदेनापि भिन्नः। रवादिरं वीर्यकामस्य यूपं कुर्वीत गोदेहनेन पशुकामस्य प्रणयेत्" यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचः सदो मिनुयात्"" अग्निहोत्रं जुहोति" समिधो यजति" इत्यादीनि यथासंख्यमुदाहरणवाक्यानीति **बालप्रकाशः**। **उत्पत्तिविधिः**

– कर्मस्वरूपमात्रबोधको विधिः उत्पत्तिविधिः तत्र कर्मस्वरूपबोधकत्वञ्च कर्मस्वरूप-निष्ठाज्ञातज्ञाप्यत्वशब्दितविधेयताख्यविषयताविशेषशालिबोधतात्पर्यकत्वम्। ततश्च प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनताबोधकं कर्मस्वरूपबोधकं विधिवाक्यं उत्पत्ति-विधिरिति भावः। यथा अग्निहोत्रं जुहोतीति वाक्यम्। अग्निहोत्रहोमेन इष्टं भावयेदिति वाक्यार्थः। अत्र अज्ञातस्य कर्मस्वरूपस्यैव अग्निहोत्ररूपस्य ज्ञापनम्। एवं स्वर्गकामोऽ-श्वमेधेन यजेत'' इत्यादि वाक्यं उत्पत्तिविधिः। क्रत्वर्थपुरुषार्थभेदेनापि उत्पत्तिविधिर्द्वि-विधः –क्रत्वर्थोत्पत्तिविधेरुदाहरणम्–समिधो यजति, पुरुषार्थोत्पत्तिविधेरुदाहरणम्–अग्निहोत्रं जुहोतीति **बालप्रकाशः**। **विनियोगविधिः** – अङ्गताबोधको विधि-र्विनियोगविधिः। अङ्गमप्रधानम्–द्रव्यदेवतादि। तस्य प्रधानेन सम्बन्धबोधनात् द्रव्यदेवतादीनां अङ्गता ज्ञाता भवति। प्रधानं–मुख्यम्–वाक्यान्तरविहितं यागहोमादि। ततश्च तयोस्सम्बन्धमङ्गाङ्गिभावं यो विधिर्बोधयति स विनियोगविधिरित्युच्यते। तथा च अङ्गप्रधानसम्बन्धबोधकः, प्रधाने अङ्गसम्बन्धबोधको वा विधिर्विनियोगविधिः। दध्ना जुहोतीत्युदाहरणम्। अत्र अग्निहोत्रं जुहोतीत्यनेन वाक्यान्तरेण विहितः होमः प्रधानम्। दधिद्रव्यमप्रधानम्। तयोरङ्गाङ्गिभावरूपं सम्बन्धं दध्ना जुहोतीति वाक्यं बोधयति। जुहोतीत्यत्र व्यत्ययेन विध्यर्थे लट्। जुहुयादित्यर्थः। दध्ना होमं भावयेदि-त्यर्थः। तृतीयाविभक्तिः सम्बन्धबोधिका भवति। गुणविधेरपीदमुदाहरणं भवति। ततश्च इष्टसाधनताबोधको विधिर्विनियोगविधिरित्यपि लक्षणं भवति। अग्निष्टोमे प्रवृणक्ति इति। अनेन प्रवर्ग्यस्य अग्निष्टोमोपकाररूपेष्टसाधनता ज्ञाप्यते। **गुणविधिः** –विहिते कर्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुणविधिः। दध्ना जुहुयादिति। अत्र अग्निहोत्रं जुहुयादित्यनेन होमस्य प्राप्तत्वात् तदङ्गतया होमोद्देशेन दधिमात्रविधानम्। अत्र धात्वर्थ होमोद्देश्यत्वादेव तस्य प्रत्ययार्थभावनायां साध्यत्वेनान्वयः। दध्ना होमं सम्पादयेदिति। **विशिष्टविधिः** – यत्र मानान्तरेण विध्यन्तरेण वा अप्राप्तानां द्रव्यदेवतादिगुणानां प्रधानोपसर्जनभावेन शेषशेषिभावेन वा विशिष्टं विधत्ते स विशिष्टविधिः। सोमेन यजेतेत्युदाहरणम्– सोमलताविशिष्टो यागोऽत्र विधीयते। अत्र वचनान्तरेण यागः न प्राप्तः

नापि यागे गृह्यमाणः सोमरूपः गुणः। अतोऽनेन वाक्येन यागः, सोमरूपोगुणोऽपि विधीयते। उद्देश्यविधेयभावेन स्वर्गाद्युद्देशेन सोमविशिष्टो यागो विधेयः। यथा नीलो घट इत्यादौ नीलविशिष्टघट इति लक्षणया स्वीक्रियते एवमेवात्रापि सोम इति प्रकृतौ मत्वर्थलक्षणा आश्रियते। धात्वर्थस्य कर्मणः करणत्वेन भावनायामन्वयः। भावनायाः करणाकाङ्क्षायां शान्तायां सोमपदस्य करणत्वेनान्वयोऽनुपपन्नः। ततश्चान्चयानुपपत्या लक्षणा स्वीकार्या भवति। ततश्च सोमवता यागेन इष्टं भावयेदिति वाक्यार्थः। **प्रयोग-विधिः** – प्रयोगाविलम्बबोधको विधिः प्रयोगविधिः। प्रधानविधिर्यदा इतिकर्तव्यताङ्क्षायाः शान्त्यै विध्यन्तरेणान्वयं अपेक्षते तदा यावत्क्रिया-जातं अङ्गत्वेन तत्र सम्बद्धं तावत्क्रियाबोधकैस्तैस्तैरङ्गिविधिभिस्सह प्रधानविधिरेकवाक्यतया सर्वेषां वाक्यानां मिलित्वा यो महावाक्यार्थस्तादृशमहावाक्यार्थावगतो यो विधिः स प्रयोगविधिरुच्यते। ततश्च प्रयोगप्राशुभावबोधकः, प्रधानविधिरेव अङ्गविधि-भिरेकवाक्यतया महावाक्यता-मापन्नस्सन् सर्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिः, स्वाङ्गानुष्ठान-बोधकः, अङ्गप्रधानविध्येकवाक्यताबोधको वा, विनियोगोत्पत्तिविध्युपजीवको वा? भवति। अग्निं प्रणयति, अग्निषु समिध आदधाति, समिधो यजति, तनूनपातं यजति इत्यादिभिः प्रयाजानूयाजादिभिः उपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति कल्पितं वाक्यमेव प्रयोगविधिरित्युच्यते। ततश्च प्रधानविधिरेव उक्तवक्ष्यमाण-विधिमेलनरूपप्रयोगविधिरित्युच्यते। ततश्च क्रमबोधकवाक्यं प्रयोगविधिरिति वक्तव्यम्। क्रमबोधने श्रुत्यादीनि प्रमाणानि भवन्ति। तानि **क्रमवोधकप्रमाणा**नीत्युच्यन्ते। तानि श्रुतिलिङ्गवाक्य प्रकरण स्थान समाख्याख्यानि षट् प्रमाणानि **अङ्गत्वबोधकानि प्रमाणानि** इति च उच्यन्ते। एतैस्सहकृतैः पौर्वापर्यं ज्ञातुं पार्यते। ततश्च क्रमवोधकप्रमाणानीत्यपि व्यवह्रियन्ते। तत्र **क्रमो** नाम विततिविशेषः पौर्वापर्यरूपो वा। **वितति**र्विस्तारः। अयं च विस्तारविशेषरूपः क्रमः सर्वाङ्गघटितसमुदायरूपः अङ्गवाक्यैकवाक्यतापन्नप्रधानविधिरूपप्रयोगविधिना बोध्यते। पौर्वापर्यरूपः क्रमस्तु पूर्वकालभवत्वापरकालभवत्वरूपः तत्तदङ्गकर्मनिष्ठः तत्तदङ्गविधिना बोध्यते। अत्र

क्त्वाप्रत्यय प्रथमादिशब्दरूपा श्रुतिः प्रमाणम्। वेदं कृत्वा वेदिं करोतीत्यादि वाक्यमुदाहरणम्। ततश्च अव्यवहितोत्तरत्वमानन्तर्यं क्रमः, अनुष्ठीयमानकर्मणां अव्यवहितोत्तरत्वरूपानन्तर्यस्य वोधको विधिः - प्रयोगविधिरिति सिध्यति। **अधिकारविधिः** - कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। दर्शपूर्णमासादिना उत्पद्यमानस्वर्गादिस्वाम्य-बोधको विधिरधिकारविधिरिति सिध्यति। कर्मजन्यफलभोक्तृत्वमत्र फलस्वाम्यम्। ततश्च अधिकारः फलम्। तत्सम्बन्धबोधको विधिरधिकारविधिः। प्रयोजनमनुद्दिश्य प्रवृत्यभावात् विधिबलात् फलवाचकशब्दः फलेप्सुं पुरुषं अधिकारिणं निर्दिशति। अधिकारश्च न कामनावत्पुरुषमात्रस्य, किन्तु अधिकारिविशेषणविशिष्टस्य, अधिकारि-विशेषणञ्च स्वाध्यायाध्यनसम्पादिताक्षरग्रहणविशिष्टं तत्तत्क्रतुविषयकमर्थज्ञानम्, आधानसिद्धाहवनीयाद्यग्निमत्वम्, तत्त्कर्मानुष्ठानशक्तिश्च। एवं मनुष्याणामपि फलप्रेप्सूनामपि वैदिकश्रद्धालूनामपि विकलाङ्गानां नाधिकारः। तेषां यथावत् कर्मानुष्ठाना-सम्भवात्। अन्धस्याज्यावेक्षणासम्भवात् मूकस्य मन्त्रोच्चारणाशक्तेः, पङ्गोर्विष्णुक्रमणे सामार्थ्याभावात्, बधिरस्य मन्त्रादिश्रवणाभावात्। ततश्च अप्रतिसमाधेयाङ्गानां अन्धादीनां कर्मसु अधिकारो नास्ति। प्रतिसमाधेयाङ्गानां प्रतिसमाधानानन्तरमेवाधिकारः। तथा च कर्मणः फलसम्बन्धबोधको विधिरधिकारविधिरिति वक्तव्यम्। अग्निहोत्रं जुहुयात् स्वर्गकामः, दर्श पूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादि वाक्यान्युदाहरणानि। स्वर्गमुद्दिश्य यागं विदधद्भिरेतै र्वाक्यैः स्वर्गकामस्य यागजन्य फलभोक्तृत्वं प्रतिपाद्यते। अधिकारविधेः क्रत्वर्थ-पुरुषार्थ-नैमित्तिक-अनैमित्तिक-काम्यनैमित्तिक-संबलितादिभेदाः **बालप्रकाशे** वर्णिताः। **नियमविधिः** -पक्षे प्राप्तस्याप्राप्तांशपूरणफलो विधिर्नियमविधिः, यश्च पक्षे प्राप्तमर्थं नियमयति, पक्षे अप्राप्तस्य प्रापको विधिः, अत्यन्ताप्राप्तिफलको विधिः, साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिरिति वा नियमविधिलक्षणानि भवन्ति। "नियमः पाक्षिके सति" इति **तन्त्रवार्तिके**। पाक्षिकाप्राप्तप्रापकत्वं नियमविधित्वम्। अनेकसाधनमध्ये अप्राप्तिपक्षं नियमयतीति नियमविधिरिति वक्तव्यम् एकैकस्य प्राप्तौ सत्यां तादृशानेकसाधनमध्ये यदेकं किञ्चिदिष्टं तस्य साधनस्य

यो विधिस्स नियमविधिः। तत्र च यदिष्टं तदेव यदि कदाचित् स्वभावत एव कर्ता गृह्णाति तदा नियमविधेर्न किञ्चित् कृत्यम्। किन्तु तादृशेष्टसाधनव्यतिरिक्तं किञ्चित् साधनं ग्रहीतुं प्रवर्तते तदा अयं विधिः उपस्थितो भूत्वा इष्टं साधनं तदानीमप्राप्तं ग्राहयति। तदा अनिष्टस्य साधनस्यार्थिकी निवृत्तिर्भवति। एवं च अनिष्टं साधनं नियमन्नयं नियमविधिरुच्यते। अत्र नियम अयोगव्यवच्छेदरूपः। तथा च नानासाधनसाध्याक्रियायां एकसाधनप्राप्तौ अप्राप्त-स्यापरसाधनस्य प्रापको विधिरिति यावत्। व्रीहीनवहन्ति, समे यजेत इत्यादि वाक्यं नियमविधेरुदाहरणम्। तत्र व्रीहिषु नखविदलनमुसलावहननयोः प्राप्तौ मुसलावहननमेव नियम्यते। व्रीहीनवहन्तीति विध्यभावे दर्शपूर्णमासादिकेषु व्रीहिषु उत्पत्तिवाक्या-वगतपुरोडाशोपयोगितण्डुलनिष्पत्यनुकूलवैतुष्यकार्याय अवहननवत् कदाचित् नरवविदलनमपि प्राप्नुयात् इति तस्मिन् पक्षे अवहननस्य प्राप्त्यभावात् कार्यान्यथोपपत्तेः अवहननस्य पाक्षिकी प्राप्तिः स्यात्। सत्यस्मिन् विधौ अवहनेनैव वैतुष्यं कार्यमिति नियमे सति विदलनं सर्वात्मना निवर्तत इति नियमविधिरयम्। अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जायत इत्यङ्गीकारात् अवहनविधिर्न व्यर्थः। समे यजेत इत्युदाहरणान्तरम्। दर्शपूर्णमासाभ्यां यजेतेति यागः कर्तव्यतया विहितः। स च देशमन्तरा कर्तुम-शक्य इत्यर्थादेव देशविशेषः कश्चित् प्राप्नोत्येव। स च देशविशेषः समो विषमश्चेति द्विविधः। तत्र यदा यजमानः साहजिकतया सम एव देशे यष्टुमिच्छति तदा समे यजेतेति वचनमुदासीनमेवावतिष्ठते। यदातु कदाचित् विषमे देशे यष्टुं आरभते तदा वचनबोधितस्य समदेशस्याग्रहणात् तद्बोधनार्थं वाक्यमिदं प्रवर्तते। ततश्च विषमदेशनिवृत्तिरार्थिकी सिद्धा भवति। नियमविधितक्रमेण विषमदेशे यागः कृतश्चेत् स यागो यथाशास्त्रं नानुष्ठितो भवति। सोऽयं नियमविधिः क्रत्वर्थ पुरुषार्थभेदेन प्रतिनिधि प्रतिपत्तिविधितदुभयव्यक्तिरिक्त भेदेन जातिक्रियाद्रव्यगुणभेदेन च बहुविध इति **बालप्रकाशिकायाम्**। **परिसंख्याविधि**-द्वयोः समुच्चित्यप्राप्तौ इतरनिवृत्तिफलको विधिः, उभयत्र नियतप्राप्तौ एकनिवृत्तिरूप-परिसंख्याफलको विधिः, उभयोश्च युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः, सर्वत्र प्राप्तस्य क्वचिद्विधिः, अन्ययोगव्यवच्छेदक विधिः, प्रसञ्जकप्रवृत्तिविरोधिविधि,

एकस्मिन् अङ्गिनि उभयोरङ्गयोः, अङ्गिद्वये एकस्य वा अङ्गस्य समुच्चित्यप्राप्तौ इतरनिवर्तको विधिरिति वा परिसंख्याविधिरित्युच्यते। परिसंख्या-वर्जनम्। तद्बोधको विधिः। ततश्च एकस्मिन् प्रधाने नियतप्राप्तस्य अङ्गद्वस्य एकस्मिन् अङ्गे नियतप्राप्तस्य प्रधानद्वयसम्वन्धस्य अन्यतरनिवृत्तिफलको विधिः परिसंख्यांविधिरिति वक्तव्यम्। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते'' इति **तन्त्रवार्तिकम्,** तथा च एकस्मिन् कार्ये द्वयोस्साधनयोर्युगपाप्राप्तौ इतरव्यावृत्तिपरत्वं परिसंख्याविधेः कार्यमिति सिध्यति। ततश्च नियमपरिसंख्याविध्योः भेदोऽपि स्फुटः। निंयमविधौ नियमो विधेयः, स च नियमोऽप्राप्तांशपूरणात्मा, अप्राप्तांशपूरणं फलम्, इतरव्यावृत्तिस्तु न विधेया, तस्या विप्रकृष्टत्वात्। परिसंख्यायान्तु साधनद्वयस्य नित्यप्राप्तत्वेन नियमस्य फलत्वायोगात् इतरनिवृत्तिरेव विधेया, सैव फलमिति भेदस्सिध्यति। ''इमामगृभ्णन् रशनामृत-स्येत्यश्वाभिधानीमादत्ते'', ''गृहमेधीये आज्यभागौ यजति'', ''अत्रह्येवावपन्ति'' पञ्च पञ्चनखा भक्ष्या इत्यादीन्युदाहरणानि। परिसंक्या द्विविधा-श्रौती लाक्षणिकी चेति तत्र श्रौत्याः पूर्वोक्तवाक्यत्रयम् उदाहरणम्। पञ्च पञ्चनखा भक्ष्या इति तु लाक्षणिक्या उदाहरणम्। अथवा प्राप्तपरिसंख्या अप्राप्तपरिसंख्येति द्विविधा। तत्र प्राप्त-परिसंख्याया उदाहरणं पञ्च पञ्चनखा भक्ष्या इति। अप्राप्तपरिसंख्याया इमामगृभ्णन् रशनामिति उदाहरणम्। अत्र चयनप्रकरणे 'इमामगृभ्णन् रशनाम् ऋतस्य इत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः। एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रः रशनाऽऽदानप्रकाशनसामर्थ्यरूपात् लिङ्गात् अश्वरशनाऽऽदाने इव गर्दभरशनादानेऽपि प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेण अश्वरशनामेव आददीत न तु गर्दभरशनाम्। सा तु तूष्णीमेव ग्राह्येति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति इतरनिवृत्तिर्भवति। तथाच लिङ्गकल्प्यश्रुत्या उभयत्र विनियोगे प्रसक्ते ततः पूर्वमेव प्रत्यक्षवचनेन एकत्र विनियोगे तत एव मन्त्रस्य प्रयोजनाकाङ्क्षाशान्तेः लिङ्गात् श्रुतिकल्पना नावतरतीति अप्राप्त-परिसंख्येयम्। नात्र त्रैदोष्यम्, अश्वरशनाङ्गत्वस्य स्वार्थस्यैव विधेयत्वात्, लिङ्गकल्प्यश्रुतेः पूर्वमेव प्रत्यक्षवचनप्रवृत्तेः। अत एव न परार्थस्वीकारः, नापि प्राप्तवाधः, लैङ्गिक

श्रुतिकल्पनाप्रतिषेधेन गर्दभरशनाङ्गत्वस्याप्राप्तेः। एवं गृहमेधीये आज्यभागौ यजतीति वाक्यं श्रूयते, तत्रैकस्मिन् गृहमेधीयेऽङ्गिनि आज्यभागयोः तदितरेषामङ्गानां च युगपत्प्राप्तौ सत्याम् अनेन आज्यभागाद्यतिरिक्तानां व्यावृत्तिः क्रियते। एवं अत्र ह्येवावयन्ति इत्यपि श्रौतीपरिसंख्याया उदाहरणम्। त्रीणीह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुभ्। अत्रह्येवावयन्ति अतएवोद्वपन्तीति श्रूयते। **आवापः** - संग्रहः, **उद्वापः** - त्यागः यज्ञस्योदरस्थानीयानि गायत्री-वृहत्यनुष्टुप्छन्दांसि, अत्र ह्येवावयन्ति अत्र पूर्वोक्त-च्छन्दस्स्वेवावपन्ति-प्रक्षेपं कुर्वन्ति इत्यर्थः। सोमयागेषु ज्योतिष्टोमः प्रकृतिभूतो यागः। तत्रत्यस्तोमसंख्यापेक्षया क्वचिद् विकृतिषु अधिका स्तोमसंख्या दृश्यते। यथा एकविंशतिना अतिरात्रेण प्रजाकामं याजयेयुरिति। क्वचिच्च विकृतिषु न्यूना स्तोमसंख्या दृश्यते। यथा त्रिवृदग्निष्टुदग्निष्टोम इति। अत्र प्रकृतौ द्वादशस्तोत्राणि बहिष्पवमानमेकं चत्वारि आज्यानि चत्वारि पृष्ठयानि माध्यन्दिनपवमानमेकं आर्जवपवमानमेकं यज्ञायज्ञियमेकमिति। विकृतौ च अधिकसंख्यासंपत्तये प्रकृततः प्राप्तेषु स्तोत्रेषु अविशेषात् साम्नामावापः सर्वत्र प्राप्तः। तथा न्यूनसंख्यासंपत्तयेऽविशेषात् सर्वेभ्य एव तेभ्यः साम्नामुद्वापः प्राप्तः। तत्र चैषा परिसंख्या-अत्र ह्येवावपन्ति। अत एवोद्वपन्तीति। अत्र इत्यनेन अत इत्यनेन च यज्ञोदरस्थानापन्नपूर्ववाक्योक्तगायत्र्यादिकं त्रयं परामृश्यते। तत्रैवावापः।, तत एवचो-द्वापः। गायत्र्यादीनां च पवमानेष्वेव सत्त्वात् तद्विषय एवायमावापः उद्वापश्च, नान्यस्तोत्रेषु। जैमिनीयन्यायमालायां १०/५/६ इत्थमुक्तम्-स्तोमस्य विवृद्धये साम्नामावापः क्रियते, ह्रासाय चोद्वापः। तावुभावापोद्वापौ गायत्र्यादिष्वेव नान्यत्रेत्यत्र ह्येवावपन्तीत्यादिना नियम्यत इति। तत्र अत्र ह्येवावपन्ति इति वाक्यम्। अत्रेति इदंशब्दात् त्रळ्, इदंशब्दश्च पूर्वपरामर्शी, पूर्वञ्च गायत्री-बृहती-अनुष्टुभ छन्दांसि कीर्तितानि। तत्र छन्दश्शब्दः छन्दोवाचकः, छन्दस्सम्बन्धिस्तोत्रवाचको वा। **स्तोत्रं** नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठ-गुणाभिधानम्। सामगानेन सह मन्त्रद्वारा देवतागुणकीर्तनम्। स्तोत्रगता संख्या स्तोमः। ततश्च युगपत् सर्वस्तोत्रेषु प्राप्तस्य सामावापस्य अनेन परिसंख्या क्रियते-एतत्त्रयातिरिक्तेषु पवमानस्तोत्रसम्बन्धिषु छन्दस्सु पवमानातिरिक्तस्तोत्रेषु वा न सामावापः कार्यः। एवञ्च

अत्रह्येवावपन्ति इति वाक्यं विवृद्धस्तोमकेषु पवमानातिरिक्तस्तोत्रेषु सामावापपरिसं ख्यापकम्। तथा च इतरव्यावृत्तिरूपार्थस्यैव एवशब्देन अभिधानात् **श्रौती** परिसंख्या। **आर्थ्या**: अथवा लाक्षणिक्या: परिसंख्याया उदाहरणन्तु पंच पञ्चनखा भक्ष्या इति। श्रीमद्रामायणे श्री रामचन्द्रं प्रति वालिन उक्तिरियम्। (४/१७/३७)। अत्र पञ्च पञ्चनखा: प्राणिन: भक्ष्या इत्यार्थी परिसंख्या। पञ्चनखा: -सेधा-गोधा-कच्छप-शल्यक-शशाख्या: प्राणिन: भक्ष्या इत्यस्य वाक्यस्य पञ्चनखभक्षणमर्थ:। स चात्र न विधातुं शक्यते। तस्य रागत एव प्राप्तत्वात्। पक्षे प्राप्त्यभावाच्च न नियम:। अतस्तद्वाक्यं व्यर्थम्। किञ्चात्र अपञ्चनरवभक्षणनिवृत्तौ वक्तुस्तात्पर्यम्। तच्चात्र न तस्माद्वाक्यादवबुध्यते। तथा च तात्पर्यानुपपत्या लक्षणा स्वीकार्या भवति। पञ्चनखपदस्य पञ्चनखभिन्नेऽर्थे लक्षणा। भक्ष्या इत्यस्य च अभक्ष्या इत्यर्थे। एवञ्च अभक्ष्या पञ्चनखभिन्ना इत्यर्थे सति वक्तुस्तात्पर्यार्थ: सिद्धो भवति। वाक्यवैयर्थञ्च परिहृतं भवति। ततश्च वाक्यस्यास्य पञ्चनखातिरिक्तपञ्च अभक्ष्या इत्यर्थ: पर्यवस्यति। अतएवेयं परिसंख्या त्रिदोषा। दोषत्रयं च स्वार्थहानि:, परार्थस्वीकार:, प्राप्तबाधश्चेति। विधिधटितवाक्यस्य हि विधानं व्यापार:। स त्यज्यत इति श्रुतहानि:। वर्जनबोधनञ्च नञ्घटितवाक्यस्य व्यापार:। सोऽत्र स्वीक्रियत इति अन्यार्थस्य कल्पना इति अश्रुतकल्पना। रागत: प्राप्तस्य अपञ्चनखभक्षणस्य बाधनं क्रियत इति प्राप्तबाधश्चेति दोषत्रयम्। तथा च परिसंख्यायां निवृत्तिरेव शब्दतात्पर्यविषयी-भूता। नियमविधिर्भावविषयक:, परिसंख्यातु वर्जनरूपाभावविषयिणीति च तयोर्भेदो वक्तव्य:। क्रत्वर्थ पुरुषार्थ-दृष्टार्थ-अदृष्टार्थ-भेदेन परिसंख्याया अवान्तरभेदोऽपि सोदाहरणं **बालप्रकाशे** दृश्यते। परन्तु तान्युदाहरणानि अत्रैव प्रतिपादितानि। सर्वतन्त्रस्वतन्त्रै: चतुरधिकशताधिकग्रन्थप्रणेतृभि: प्रसिद्धतमै: अप्पय्यदीक्षितै: स्वकृतौ विधिरसायने वार्तिकोक्तानि अपूर्वनियमपरिसंख्याविधिलक्षणानि अव्याप्त्यतिव्याप्तिभि: ग्रस्तानि इति विमृश्य-''नित्यौदास्यान्यकिञ्चिद्विगलितनियतं यस्य तत्प्राप्तिमात्रं तत्कालं यस्य बोधस्समुदयति निवृत्यात्मनावश्यमेवा। प्राप्तिं भिन्नस्य ताभ्यां कथमपि विदधत् स्याद-पूर्वोविधि र्न: कुर्वन् प्राप्तिं तयोस्स्यात् स नियमपरिसंख्यामिधान: क्रमेण।।'' इति

वर्णितानि। ततश्च उभयोः नियम्यनिवृत्योः प्राप्तिं कुर्वन् विधिः क्रमेण नियम परिसंख्या-विधिः, नियम्यप्राप्तिं कुर्वन् नियमविधिः, निवृत्तिप्राप्तिं कुर्वन् परिसंख्याविधिरिति, नियमपरिसंख्यान्यप्राप्तिकारी विधिरपूर्वविधिरिति लक्षणानि च प्रतिपादितानि। परन्तु विधिरसायनोक्तदूषणानां खण्डनमण्डनपरेषु दुरूहशिक्षा-विधिभूषण-विधिरत्नावली-विधिदूषण- विधित्रयपरित्राणादिषु ग्रन्थेषु विधित्रयलक्षणविकासाः दृश्यन्त इति तु प्रस्थानान्तरमिति नात्रास्यावश्यकविचारः प्रतन्यते।

**मन्त्रः** - ''तच्चोदकेषु मन्त्राख्या'' इति **जैमिनिसूत्रम्** (२२-१-३२) प्रयोग-समवेतार्थस्मारकेषु वेदवचस्सु मन्त्र इति नामधेयमिति तस्यार्थः। ततश्च विहित यागाद्यनुष्ठानसम्बन्ध्यर्थप्रकाशकत्वं मन्त्रत्वमिति लक्षणम्। कर्मानुष्ठानकाले समुच्चार्य-माणाः मन्त्राः। ते च कर्माङ्गभूतदेवतादिपदार्थाभिधायकाः सन्तः देवतादिपदार्थान् स्मारयन्ति। एतद्देवतादिपदार्थस्मरणमेव मन्त्रोच्चारणस्य प्रयोजनम्। एतच्च दृष्टं फलमिति न तस्यादृष्टं फलं किञ्चित्। ''दृष्टे फले सम्भवति अदृष्टफलकल्पनाया अन्याय्यत्वात्।'' अपूर्वरूपमदृष्टं फलन्तु मन्त्रोच्चारणपूर्वकदेवतादिपदार्थस्मरणस्य। नियमविधिना मन्त्रोच्चारणपूर्वकदेवतादिपदार्थस्मरणस्य बोधितत्वात्। तथाच प्रयोग-समवेतार्थस्मारक, अनुष्ठानकारकद्रव्य देवतादिलिङ्गस्मारको वेदभागो वा मन्त्र इति तस्य लक्षणं भवति। परन्तु वसन्ताय कपिञ्जलानालभेत, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोर्हस्ताभ्यां अग्नये जुष्टं निर्वपामि, ''अहे बुध्निय मन्त्रं मे गोपाय इत्यादि वाक्येषु अव्याप्त्यतिव्याप्त्यादिसम्भवात् अभियुक्तानां मन्त्रपदवाच्यत्वप्रकारनिश्चयविषयो मन्त्र इति, याज्ञिकानां अभियुक्तानां समाख्यानं मन्त्र इति वा लक्षणं निर्दुष्टम्।

मन्त्रपदवाच्यतावच्छेदकश्च अखण्डोपाधिरित्याशयः। मन्त्राणां प्रामाण्यं तु प्रयोग-विधिवाक्येन सह एकवाक्यतया प्रमाण्यं भवति। वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वात् ऐन्द्र्या गार्हपत्यमुपनिष्ठते इत्यादि श्रुतमन्त्रविनियोगविधौ कल्पितविधौ वा मन्त्राणां पदार्थत्वेन मन्त्रविनियोजकवाक्यार्थप्रतीतिजनकत्वात् पदार्थबोधनविधया प्रामाण्यं भवति। सोऽयं मन्त्रस्त्रिविधिः - करणमन्त्रः, क्रियमाणानुवादिमन्त्रः, अनुमन्त्रण-मन्त्रश्चेति यत्र पूर्वं मन्त्रमुच्चार्थ तदन्ते कर्म क्रियते स करणमन्त्रः - यथा इषेत्वा ऊर्जेत्वा इत्यादिः। अत्र पूर्वंमन्त्रमुच्चार्य तदन्ते छेदनं क्रियते। एवं याज्यापुरोऽनुवाक्यादयश्च। यत्र तु मन्त्रोच्चारणसमकालमेव कर्मानुष्ठीयते स क्रियमाणानुवादी मन्त्रः। यथा "युवा युवासा" इत्यादिः यूपवेष्टनमन्त्रः। अत्र यूपवेष्टनं मन्त्रोच्चारणञ्च युगपदेवानुष्ठीयते। ये तु कर्मानुष्ठानानन्तरं पठ्यन्ते तेऽनुमन्त्रणमन्त्राः। यथा "अग्नेरहं देवयज्यया अन्नादो भूयासम्" इत्यादिः। कर्मानुष्ठानमनु मन्त्रयन्त इत्यनुमन्त्रणम्। **बालप्रकाशे** यद्यपि अन्ये बहवो मन्त्रभेदाः वर्णिताः तथापि तेषां सर्वेषां एतेषु त्रिष्वेवान्तर्भावो भवितुमर्हति।

**नामधेयम्** — धर्मबोधकप्रमाणेषु नामधेयस्य तृतीयं स्थानम्। धर्मबोधकेषु वेदवाक्येषु कानिचन तादृशानि वाक्यानि दृश्यन्ते येषु द्रव्यदेवतादिप्रतिपादनं नास्ति। ततश्च तेषां प्रामाण्यं नास्तीति स्यात्- यथा उद्भिदा यजेत "बलभिदा यजेत, विश्वजिता यजेत" इत्यादीनि वाक्यानि श्रूयन्ते। तत्र कारणं-धर्मप्रमाणत्वेन अभिमतेषु वेदभागेषु अनन्तर्भावः। विधिस्तावत् साक्षात्प्रमाणम् धर्मविधायकत्वात्। निषेधश्च धर्म विरोध्यनर्थनिवर्तकत्वेन। अर्थवादमन्त्रौ तु विध्यन्वयेन। उद्भिदादि न विधावन्तर्भवति। विध्यर्थभावनांशेषु भव्येतिकर्तव्यताकरणरूपेषु कस्याप्यप्रतिपादनात्। नापि निषेधे, तत्र नञअसत्वेन प्रवर्तनाविरोधिनिवर्तनाया अप्रतिपादनात्। नाप्यर्थवादे, स्तुतिनिन्दयोरप्रतिपाद-नात्। नापि मन्त्रे, उत्तमपुरुषादीनां मन्त्रलिङ्गादीनामभावात्। यथा-अग्नये जुष्टं निर्वपामि इत्युत्तमपुरुषः, अग्ने यशस्विन् यशसे समर्पय" इत्यामन्त्रणम्, उवीचासि वस्वीचासि" इत्यस्यन्तरुपम्। इषेत्वोर्जेत्वा" इति त्वान्तं रूपम्। एतेषु उत्तमपुरुषादीनां मन्त्रलिङ्गा-नामश्रवणात् उद्भिदादिवाक्यं अप्रमाणं भवेत्। तेषां प्रामाण्यरक्षणाय नामधेयकल्पना

स्वीक्रियते। विधेयार्थपरिच्छेदको नामधेय इति तस्य लक्षणम्। उद्भिदादिवाक्येषु उद्भिदादिशब्दः यागनामधेयम्। तेन विधेयार्थपरिच्छेदः क्रियते। विधेयार्थपरिच्छेदकत्वं नाम विधेयार्थस्य इयत्त्या मर्यादाकरणम्। अत्र पशुकामो यजेत इत्यस्य पदद्वयस्या-यमर्थः - पशुरूपं फलं यागेन कुर्यात् इति। तत्र केन यागेन इत्यपेक्षायां उद्भिदा इति तृतीयान्तं पदं यागसामान्येन अन्वेति। यागसामान्यन्तु न विधियोग्यम्। यथा च लोके दृश्यते-गच्छ पच इत्युक्ते गमनक्रिया पचनक्रिया च विधातुं शक्यते, न तु सामान्यतः कुरु इत्युक्ते क्रियासामान्यं विधातुं शक्यते। यदि कश्चित कुरु इत्युक्ते तर्हि बोद्धा प्रकरणादिना तदभिप्रायं संभाव्य कञ्चित् क्रियाविशेषं कर्तुमारभते। तथा च सामान्यशब्दादपि क्रियाविशेष एव विधेयो भवति। स च क्रियाविशेषेऽमुक इति परं सामान्यशब्दान्नावगम्यते। तदर्थं विशेषार्थावबोधकपदापेक्षा। एवञ्च सामान्य शब्दादपि विशेषस्यैव विधानम्, विशेषशब्दादपि विशेषस्यैव विधानमिति समम्। परन्तु आद्यात् अनियतविशेषविधानम्, द्वितीयात् नियतविशेषविधानमिति भेदः। न तु सामान्यशब्दात् विशेषविधानं न भवतीति मन्तव्यम्। "निर्विशेषं न सामान्यमिति" न्यायात्। किञ्च यज्धातुः उद्भिच्छब्दश्चेत्यनयोः यागविशेषवाचित्वस्वीकारे तयोस्साम्यात् भिन्नार्थकत्वाभावेन तयोस्सामानाधिकरण्यं न भवेत्, भिन्नप्रवृत्तिनिमित्तकानां शब्दानां एकस्मिन् अर्थे प्रवृत्तिः **सामानाधिकरण्य**मिति शास्त्रप्रक्रियास्वीकारात्। अतः उद्भिच्छब्दस्य यज्धातुना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत् स्वीक्रियते। तत्र हि नीलोत्पलशब्दे उत्पलशब्दस्य अर्थात् अन्यो नीलशब्दस्य नीलगुणरूपः वाच्यार्थोऽस्ति। यथा च उत्पले नीलो गुणः नीलं वस्त्रमित्यादिप्रयोग दृश्यते नैवमत्र यागवृत्तिः कश्चिद्धर्मः उद्भिच्छब्देन उच्यते। नापि यागादन्यत्र क्वचित् तच्छब्दस्य प्रयोगो दृश्यते। एवं च नीलोत्पलादिवत् नात्र सामाना-धिकरण्यम्। किन्तु वैश्वदेव्यामिक्षा इत्यत्र आमिक्षाशब्दवत् सामानाधिकरण्यम्। तप्ते पयसि दध्नि मिश्रिते तत्र यो घनीभूतः पदार्थः सा **आमिक्षा**। द्रवीभूतः पदार्थः **वाजिन**-मित्युच्यते। वैश्वदेवीशब्दश्च देवतावाचकशब्दप्रकृतिकतद्धितप्रत्ययान्तः। विश्वेदेवा देवताः अस्येत्यर्थे सास्य देवता इति सूत्रेण अण् प्रत्यये ङीपि च सिद्धः। तद्धितश्च सास्य

देवता इति सर्वनामार्थे स्मर्यते। सर्वनाम्नाञ्च उपस्थित विशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्देपात्तो विशेष इत्यपेक्षायां आमिक्षासान्निध्यात् आमिक्षारूपो विशेष इत्यवगम्यते। ''आमिक्षां देवतायुक्तां वदत्येव हि तद्धितः।'' इति **तन्त्रवार्तिके।** ततश्च यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेन आमिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यं एवं सामान्यस्याविशेषात् अविधेयत्वात् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यं सिध्यतीति नामधेयानां विधेयार्थपरिच्छेदकत्वेन प्रामाण्यं सिध्यति। **परिच्छेदो** नाम इतरव्यावृत्तिः। एवं च उद्भिदादिशब्दाः नामधेयभूताः इतरेभ्यो यागहोमादिम्यः स्वाभिधेयं यागहोमादिकं व्यावर्तयन्तीति नामधेयानां धर्मे प्रामाण्यं सिध्यति। **नामधेयभेदः** - निमित्तभेदेन नामधेयभेदाः भवन्ति। **मत्वर्थक-लक्षणाभयात्** अथवा **यौगिकव्युत्पत्तिबलात्** एकम्, **वाक्यभेदाद् द्वितीयम्, तत्प्रख्यशास्त्रा** तृतीयम्, **तद्व्यपदेशा**च्चतुर्थमिति तस्य भेदाः। तत्र मत्वर्थलक्षणाभयात् अथवा यौगिकव्युत्पत्तिबलादित्यस्योदाहरणम्- उद्भिदा यजेत पशुकाम इति वाक्यम्। उद्भिदा यजेत पशुकाम इत्यत्र तृतीयान्तेनोद्भिच्छब्देन योऽर्थो विवक्षितः सोऽयं यागे कश्चिद् गुणः स्यात्। दध्ना जुहोतीत्यनेन गुणविधिना समानत्वात्। दधिशब्दार्थवत् उद्भिच्छब्दार्थस्य लोकप्रसिध्यभावात् रूढ्यभावेऽपि अवयवार्थनिर्वचनेन अर्थावगमो भवति। उद्भिद्यते भूमिरनेनेति करणव्युत्या खनित्रवाची असौ शब्दः। तथा च ज्योतिष्टोमेन यजेत इति प्रकृते खनित्ररूपो गुणोऽनेन विधीयते। ततश्चास्य वाक्यस्य गुणविधायकत्वं स्वीकृव्य उद्भिदा यागं भावयेदिति वाक्यार्थो वक्तव्यः। तदा पशुकामपदस्य नान्वयः संभवति। यदा तु यागेन पशुं भावयेदित्येवं पशुकामपदस्य अन्वयः क्रियते तदा उद्भिदा इत्यस्य नान्वयः सम्भवति। एकेनैव वाक्येन उभयविधाने विरुद्धत्रिकद्वयापत्तिः। उद्भिदा यजेत पशुकाम इत्यत्र मानान्तरेणाप्राप्तस्य यागस्यानुवादासम्भवात्, पशुकर्मकभावनायां करणत्वेन यागो विधेयः। यागेन पशून् भावयेदिति। ततश्च यागस्य विधेयत्वम्। फलं प्रति च शेषतया प्रतीयमानत्वात् गुणत्वम्। फलसिध्यर्थं पुंसा अनुष्ठीयमानत्वादुपादेयत्वमिति। विधेयत्व-गुणत्व-उपादेयत्वादिकं त्रिकं यागेऽस्ति। तथा यागोद्देशेन उद्भिद्गुणविधौ

विधित्सितगुणापेक्षया प्राधान्यम्-उद्देश्यत्वम्-अनुवाद्यत्वं चेति द्वितीयं त्रिकम्। तदेतत् त्रिकद्वयं परस्परविरुद्धं एकस्मिन् यागे प्रसज्येत। वाक्यार्थ द्वयेनोभयविधाने वाक्यभेद-दोषः - उद्भिदा गुणेन यागं भावयेत्, यागेन फलं भावयेदिति। उद्भिच्छब्दस्य कर्म-विशेषनामधेयत्वाङ्गीकारे तु तस्य यजिधात्वर्थे सामानाधिकरण्येनान्वयात् उद्भिन्नाम्रा यागेन पशुं भावयेदित्येकं एवोद्देश्यविधेयभावः। तथा च न विरुद्धत्रिकद्वयापत्तिर्नापि वाक्यभेदः। परन्तु तादृशदोषद्वयभयात् नामधेयत्वमिति न वक्तुं शक्यते, किन्तु मत्वर्थलक्षणाभयात् नामधेयत्वमित्येव वक्तव्यम्। यतः - यत्र अगत्या कश्चित् दोषः स्वीकार्यो भवति तत्र यो दोषः लघीयान् स एव स्वीकार्यः इत्युद्भिच्छब्दस्य नामधेयत्वाभावे विरुद्ध त्रिकद्वयापत्तिरूपगुरुदोषपेक्षया वाक्यभेददोषः एवापाद्यो भवेत्। तदपेक्षया च लघीयान् मत्वर्थलक्षणारूपो दोषः। तेन सत्यां गतौ न वाक्यभेदः, न वा विरुद्धत्रिकम्। अत्र यागेन पशुं भावयेत् इत्युक्ते केन यागेनेत्याकाङ्क्षायां उद्भिदा इति तृतीयान्तपदं यागनामत्वेनान्वेति। उद्भिद्यते पशुरूपफलं अनेनेति व्युत्पत्या यागनामत्वमुद्भिच्छस्योपपद्यते। यद्यपि खनित्ररूपोऽर्थोऽपि उद्भिच्छब्दस्य विद्यते तथापि सामानाधिकरण्यस्यानियामक-त्वात् खनित्रार्थं त्यक्त्वा यागनामत्वमेव स्वीक्रियते। यदि खनित्रवाचित्वं स्वीक्रियते तर्हि उद्भिदा साध्यो यो यागः तेन यागेन पशु भावयेदिति उद्भिद् यज्धात्वोर्वैयधिकरण्यं स्यात्। यागनामत्वे तु उद्भिन्नामकेन यागेन पशुं भावयेदिति सामानाधिकरण्यं सुलभम्। उद्भिच्छब्दस्य मत्वर्थलक्षणया खनित्रवता यागेन पशुं भावयेदित्येवं यदि सामानाधिकरण्योपपत्तिः क्रियते तदा मत्वर्थलक्षाणादोषः परिहार्यो भवति। तस्मात् मत्वर्थलक्षणाभयात् उद्भित्पदं यागनामधेयम्, वैयधिकरण्यान्वयदोषापेक्षया मत्वर्थलक्षणादोषो लघीयान्। लक्षणा हि शब्ददोषः। वैयधिकरण्यं अन्वयदोषः। अत एवात्र वैयधिकरण्यभयात् नामधेयत्वमिति नोक्तम्। दध्ना जुहोति, व्रीहिभिर्यजेत इत्यादौ दध्यादिशब्दानां द्रव्यविशेषेऽत्यन्तं रूढतया यागनामधेयत्वासम्भवात् अगत्या गुणत्वमाश्रीयते। सोमेन यजेत इत्यत्रापि अप्रसिद्धार्थनामधेयत्वकल्पनापेक्षया वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणम्। प्रकृते तु उद्भिच्छब्दस्य लोकप्रसिद्धार्थाभावात्

यागनामधेयत्वाङ्गीकारो युक्तः। नाम्नः प्रयोजनन्तु सर्वत्र व्यवहारलाघवमेव। अतश्च नामधेयस्वीकारे ऋत्विग्वरणादिषु अनेन अहं यक्ष्ये इत्याख्यानं लघु भवति। तस्मात् लक्षणाभयात् उद्भिच्छब्दः यागनामधेयवाची। **वाक्यभेदभयात् नामधेयत्वम्।** अस्य उदाहरणम्—चित्रया यजेत पशुकाम इति वाक्यम्। अत्र यथा सोमशब्दस्य लता-विशेषरूपो रूढ्यर्थः प्रसिद्धः तथा चित्राशब्दस्य न कश्चित् विशेषोऽर्थः प्रसिद्धः। किन्तु भिन्नभिन्नानेकधर्मयुक्तं वस्तु चित्राशब्देनोच्यते। दधिमधु घृतमापो धानास्तण्डुलास्तत्सं-सृष्टं प्राजापत्यमिति उत्पत्तिवाक्येन विहितस्य यागस्य भिन्नभिन्नदध्याद्यनेकद्रव्ययुक्तत्वात् तस्य चित्रेति नामधेयं युज्यते। यथा सोमेन इत्यादौ सोमशब्दस्य शक्त्यन्तरकल्पना-रूपगौरवभिया न कर्मनामधेयत्वं स्वीकृतम् तथात्र गौरवं नास्ति। नापि अग्नीषोमीयं पशुमालभेत इति वाक्यप्राप्तं पशुयागं यजेत इति शब्देन अनूद्य चित्रत्वस्त्रीत्वरूपगुणद्वयविधानं इति स्वीकर्तुं शक्यते। मानान्तरप्राप्तं कर्मोद्दिश्य अनेकगुणविधाने वाक्यभेदापत्तिः "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः" इति न्यायविरोधश्च। मानान्तराप्राप्तकर्मणि तु अनेकदेवता–अष्टाकपालपुरोडाश–अमावास्या–पौर्णमास्याद्यनेकगुणविशिष्टो द्रव्यदेवता-सम्बन्धेन अनुमितो यागो विधीयत इति सिद्धान्तः "अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः इति। ततश्च प्रकृतो दध्यादिद्रव्यको याग एव चित्राशब्देन उच्यत इति फलसाकाङ्क्षस्य तस्य उत्पत्तिवाक्यस्य पशुरूपं फलमनेन चित्रया यजेत पशुकाम इति वाक्येन बोध्यत इति नात्र वाक्यभेदः। यदि च चित्रेति यागनामधेयं न स्वीक्रियते तर्हि वाक्ययेदो दुरुद्धरः स्यात्। तथाहि चित्राविचित्रं कञ्चित्पदार्थविशेषं चित्राशब्दार्थं गृहीत्वा प्रकृते यागे स पदार्थविशेषो गुणत्वेन विधीयते चेत् पशुकामपदं अनन्वितं स्यात् उभयविधाने तु वाक्ये, चित्रया यागं भावयेत्, यागेन पशुं भावयेदिति वाक्यभेदः स्पष्टः। चित्राशब्दस्य कर्मनामधेयत्वे चित्राशब्दप्रवृत्तिनिमित्तस्य चित्रत्वस्य मिथो विचित्रदधिमध्वादिअनेक-द्रव्यसाधनके कर्मविशेषे सत्वात् न वाक्यभेदः। यद्यपि कर्मनामधेयत्वे चित्राशब्दे स्त्रीत्वं नोपपद्यत इति स्यात् तथापि जलनामसु अप्शब्दस्येव, इष्टिवाचकतया वा स्त्रीत्वमिति उपपत्तिर्वक्तव्या। **तत्प्रख्यन्यायात् नामधेयत्वम्।** तत्प्ररव्यञ्चान्यशास्त्रमिति

**जैमिनिसूत्रम्**। तस्य विधित्सितगुणस्य प्रख्यं प्रख्यापकं-प्रापकम् अन्यशास्त्रं यत्र भवति तत्र तादृशगुणबोधकत्वेन ग्रहीतुं योग्यं पदं नैरर्थक्यदोषभिया कर्मनामधेयं स्वीकार्यमिति भावः। ततश्च तत्प्ररव्यन्यायो नाम गुण प्रापकशास्त्रान्तरसद्भावः। अग्निहोत्रं जुहोतीत्यत्र अग्निहोत्रशब्दः तत्प्रख्यन्यायेन कर्मनामधेयम्। आहिताग्निना सपत्नीकेन प्रतिदिनं सायं प्रातः क्रियमाणो दधिपयोयवागू तण्डुलान्यतमद्रव्यकः होमविशेष **अग्निहोत्रम्**। होत्रशब्दः हूयत इति होत्रमिति भावसाधनः - हुधातोः औणादिकस्त्रन्प्रत्ययान्तः। होत्रं होम इत्यर्थः। अथवा कर्मव्युत्पत्या दध्यादि होमसाधनद्रव्यवाचकः। ततश्च अग्नये होत्रम्-होम इति, अग्नये होत्रम्- अग्न्युद्देश्यकहोम-द्रव्यसाधनद्रव्यं यस्मिन्निति वा अग्निहोत्रशब्दः साधितो भवति। अग्निहोत्रहोमे हि "अग्निर्ज्योति-ज्योतिरग्निः स्वाहा इति सायं जुहोति इति विहितमन्त्रवर्णेन देवता प्राप्नोति। मन्त्रलिङ्गादीनां देवतासम्बन्धबोधकत्वात्, "तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः। देवतासंगतिस्तत्र दुर्बलं तूत्तरोत्तरम्॥" इति **तन्त्रवार्तिकोक्तेः** तत्र सौर्यं चरुं निर्वपेत् इत्यादौ सास्य देवता इति विहिततद्धितेन देवतासम्बन्धः। अनुमत्यै पुरोडाशमष्टाकपालमित्यादौ चतुर्थ्या देवतासम्बन्धः। त्यागोद्देश्यत्वविशिष्टप्रति-ग्रहीतृत्वरूपस्य तत्समनियताखण्डोपाधिरूपस्य वा संप्रदानत्वस्य वाचिकायाश्चतुर्थ्याः त्यागोद्देश्यत्वरूपे तत्समनियताखण्डोपाधिरूपे वा देवतात्वे लाक्षणिकतया देवतात्ववाचकतद्धितापेक्षया दौर्बल्यम्। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इत्यत्र मन्त्रलिङ्गेन देवतासम्बन्धः। अत्र देवतासम्बन्धबोधकवचनस्यैव मन्त्रलिङ्गेन कल्पनीयतया लाक्षणिकचतुर्थीघटितादपि प्रत्यक्षवचनात् दौर्बल्यम्। तदेवं मन्त्रलिङ्गप्राप्तदेवतासम्बन्धं निमित्तीकृत्य अग्नये होत्रमस्मिन्निति व्युत्पत्या **अग्निहोत्रशब्दः** कर्मनामधेयमिति सिद्धम्। एवं 'आधारमाघारयति', 'समिधो यजति' "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" ज्योतिष्टोमेन स्वर्गकामो यजेत" वाजपेयेन स्वाराज्यकामो यजेत" इत्यादौ आधार-समिध्-दर्शपूर्णमास-ज्योतिष्टोम-वाजपेयादिशब्दाः कर्मनामधेयानि तत्प्रख्यन्यायेन। तेषु आघारमाधारयतीत्यस्य विधित्सितगुणप्रापकमन्यशास्त्रं चतुर्गृहीतं वा एतदभूत्तस्याधारमा-धार्य इति वाक्यम्। ततश्च दर्शपूर्णमासयागाङ्गभूतं आज्येन आहवनीये तिर्यगन्वग्वा

क्रियमाणं आज्यक्षरणाख्यं आहुतिद्वयं - आधारपदार्थ इति तस्य कर्मनामधेयत्वम्। समिधो यजति इत्यस्य विधित्सितगुणप्रापकमन्यच्छास्त्रं समिधोऽग्ने आज्यस्य व्यन्तु इति। अत्र समिधो यजति इत्यादि ब्राह्मणवाक्ये समिदादिशब्दानां कर्मनामधेयत्वानङ्गीकारे **सम्यगिन्धे इति समित्** इत्येवरूपेण सम्यक्प्रज्वलितत्वरूपेण गुणेन विशिष्टा अग्निदेवता बोध्यते। एवं तनूनपातं यजति इत्यत्र तनूनपाच्छब्दस्य कर्मनामधेयत्वानङ्गीकारे **तनूं न पातयति किन्तु रक्षत्येवेत्येवं** शरीर-रक्षकत्वरूपगुणविशिष्टाग्निदेवता **तनूनपाच्छब्देन** बोध्यते। तथा च तत्तद्गुणविशिष्टांगिदेवताविधायकानि तानि वाक्यानीति वक्तव्यम्। परन्तु सामिधो अग्ने आज्यस्य वियन्तु। तनूनपादग्न आज्यस्य व्येतु इति मन्त्रवर्णादेव उक्ताः देवताः बोधिता भवन्ति। अतः समित् तनूनपात् इत्यादिशब्दानां कर्मनामधेयत्वम्। दर्शपूर्णमासाङ्गभूतेषु पञ्चसु प्रयाजेषु प्रथमः प्रयाजस्**समित्** इति कर्मनामधेयता। एवं **तनूनपादपि** कर्मनामधेयम्। एवं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति वाक्यस्य गुण-प्रापकमन्यच्छास्त्रं य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते इति विद्वच्छब्दघटितोत्पत्तिवाक्यम्। तेन वाक्यद्वयेन कालसम्बन्धस्य ज्ञाततया नेदं कालसम्बन्धबोधकं गुणवाक्यम्। परन्तु आहिताग्निना सपत्नीकेन पौर्णमास्यनन्तरप्रतिपदि अमावास्यानन्तरप्रतिपदि च अनुष्ठेयः पौर्णमास्यां प्रातरारभ्य श्वोभूते समापनीयः, अमावास्यायां प्रातराभ्य श्वोभूते समापनीयश्चेति **कर्मसमुदायद्वयं दर्शपूर्णमास-पदवाच्य**मिति कर्मनामधेयत्वम्। एवं ज्योतिष्टोमेन स्वर्गकामो यजेत इति वाक्यमपि यागविशेषनामधेयम्। ज्योतिराख्याः त्रिवृदादिस्तोमाः यस्मिन् यागे इति व्युत्पत्तेः। एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः इति वाक्येन ज्योतिष्टोमशब्दे ज्योतिश्शब्दवाच्याः त्रिवृत् पञ्चदश सप्तदश-एकविंशरूपाश्चत्वारः स्तोमा विधीयन्ते। तेषां स्वस्वसंनिधि-पठितैर्वाक्यैरेव मन्त्रार्थवादादिरूपैः प्राप्तत्वात् न पुनर्विधिर्भवितुं ईष्टे। अतस्तत्प्रख्यन्यायेन सर्वसोमयागप्रकृतिभूतः कश्चन यागविशेष **ज्योतिष्टोम** इति कर्मनामधेयम्। एवं वाजपेयेन स्वाराज्यकामो यजेत इत्यत्रापि वाजपेयाख्यकर्मनामधेयता। अत्र **वाज**शब्दोऽन्नवाची। तच्चान्नमत्र पेयं सुराद्रव्यम्। अथवा वाजस्यान्नस्य पेयं द्रवीभूतो रसः

यवागूरूपः। वाजः पेय यस्मिन् स वाजपेय इति बहुव्रीहिसमासः। अत्र पेयरूपं द्रव्यं-सुरा-यवागूः - सोमरसो वा। तस्य द्रव्यस्य प्रतिष्ठन्ति सोमग्रहैः इति वाक्येन प्राप्तत्वात्, सुराग्रहाणाञ्च वाजसृद्‌भ्यः सुरा-ग्रहान् हरन्ति इति वाक्यात् सोमस्य च तत्तद्विधायक-वाक्यैर्विधानेन प्राप्तत्वात् वाजपेयशब्दः तन्निमित्तीकृत्य कर्मनामधेयम्। वाजपेयाख्येन सोमयागेन स्वाराज्यरूपं फलं भावयेदिति वाक्यार्थः। ततश्च **वाजपेय**शब्दः विकृतिभूतसोमयागवाचक इति कर्मनामधेयम्। एवं वैश्वदेवादिशब्दोऽपि तत्प्रख्य-न्यायेन कर्मनामधेयः। **तद्व्यपदेशन्यायात् कर्मनामधेयम्।** तेन व्यपदेशः -उपमानम्-सादृश्यम्, नामधेयत्वानङ्गीकारे सादृश्यस्य अनुपपत्तिरिति न्यायात् नामधेयत्वस्वीकार इत्यर्थः। अथवा तच्छब्देन यस्मिन् गुणोपदेश इति प्रकृतो गुणो निर्दिश्यते। विशब्दश्च भिन्नार्थकः। ततश्च तस्माद् विधेयत्वाभिमताद् गुणात् व्यपदेशः भेदेन निर्देश इति न्यायात् नामधेयत्वस्वीकारः। अस्योदाहरणम्- श्येनेनाभिचरन् यजेत इति वाक्यम्। अभिपूर्वकस्य चर्‌धातोः वैरिमरणानुकूलो व्यापारोऽर्थः। शतृप्रत्ययो हेत्वर्थकः। हेतुश्चात्र फलरूपः। एवञ्च श्येनेन वैरिमरणानुकूलव्यापाररूपव्यभिचारफलं भावयेदित्यर्थो वक्तव्यः। श्येन-शब्दश्च प्रसिद्ध पक्षिविशेषवाचकः। तं गृहीत्वा अभिचरन् यजेत इत्ययमर्थे वक्तव्यः। प्रकृते सोमयागे नित्यप्राप्तं सोमद्रव्यं बाधित्वा तत्स्थाने पक्षिविशेषरूपं हविर्द्रव्यं गुणः काम्यो विधीयते। एवं गुणविधित्वे स्वीक्रियमाणे न वाक्यभेद इति भवति। तथापि श्येनशब्दः तद्व्यपदेशन्यायात् कर्मनामधेयवाचकः। यथा श्येनो निपत्यामिषमादत्ते एवमयं (यागः) द्विषन्तं भ्रातृव्यं पुत्रान् निपत्यादत्ते इति अर्थवादवाक्येनायं यागः स्तूयते। अत्र श्येनपक्षी उपमानम्। श्येनेनाभिचरन् यजेत इत्यत्र यद्विधेयं तत् उपमेयम्। श्येनपक्षी हि यं पक्षिणम्, यदामिषं वा आलक्ष्य पतति स न कदापि श्येनपातात् च्यवते। तथा च श्येनो यथा प्रसह्य नियतं च स्वाभिलषितं प्राणिनं गृह्णात्येव तथायं श्येनयागः इत्यर्थवादेन स्तूयते। परन्तु श्येनेनाभिचरन् यजेतेत्यत्र यागो न विधेयः किन्तु यागमुद्दिश्य हविर्द्रव्यतया श्येनः पक्षी गुणो विधेयः स्यात् तर्हि विधेयः श्येनपक्षी एव उपयेमयः स एव चोपमानमिति उपमानोपमेयभावो न भवति। सादृश्यस्य भिन्ननिष्ठत्वात् स्वस्मिन्नेवो-

पमानोपमेयासम्भवात्। नापि गगनं गगनाकारमित्यादाविव एकोपमानोपमेयकसादृश्य-मूलकेन अनन्वयेन अत्र निर्वाहः, आवृत्तिदूरान्वय-वाक्यभेदाद्यापत्तेरिति वाञ्छेश्वरीय-भाट्टदीपिकाव्याख्या**भाट्टचिन्तामणौ**। ततश्च श्येनपदं **कर्मनामधेयम्,** तच्च कर्म सोमयागविशेषरूपमिति स्वीक्रियते। एवमेव सन्दंशेनाभिचरन् यजेत, गवाभिचर्यमाणो यजेत इत्यादि वाक्येष्वपि तदव्यपदेशन्यायात् कर्मनामधेयता। तत्र प्रथमवाक्यस्य "यथा सन्दंशेन पुरादानमादत्ते" इति वाक्येन स्तुतिः क्रियते। **सन्दंश**शब्दश्च सन्दश्यते पार्श्वद्वये निपीड्य दुरादेयं तप्तायोगोलकादिकं परिगृह्यते अनेनेति व्युत्पत्या दुरादेयादानसाधनविशेषे प्रसिद्धः। यथा च एतादृशसाधनविशेषेण सन्दंशेन दुरादेयं वस्तु पुरुषः गृह्णाति, एवमनेनाऽपि सन्दंशाख्येन क्रतुना दुरादेयं शत्रुमादत्ते यजमान इत्यर्थः। ततश्च **सन्दंशसंज्ञकेन यागेन** शत्रुवधरूपं फलं भावयेदिति वाक्यार्थः। एवं "गवाभिचर्यमाणो यजेते" ति द्वितीयवाक्यस्य "यथा गावो गोपायन्ति" इति वाक्येन स्तुतिः श्रूयते। यथा वा गावः परकृताभिघातात् स्ववत्सान् पालयन्ति, एवमयमपि **गोसंज्ञकः क्रतुः** परकृतात् अभिचारात् यजमानं पालयति इत्यर्थः। ततश्च वैरिणा अभिचर्यमाणः वैदिकः गवा तत्संज्ञकेन यागेन स्वसंरक्षां सम्पादयेदिति वाक्यार्थः इति तयोः कर्मनामधेयता। **निषेध-वाक्यानि**— अनर्थफलकात् कर्मणः पुरुषस्य निवर्तकं वाक्यं **निषेधः**। निषेधवाक्यानि नरकादिहेतुभूतेभ्यः ब्रह्महत्यादिकर्मभ्यः पुरुषं निवर्तयन्ति। अन्यथा ब्रह्महत्यादिकं कर्म कुर्वतः पातित्योत्पादनेन यागादौ अनधिकारात् पुरुषार्थप्राप्तिर्न स्यात्। कदाचित् पूर्वं यागोऽनुष्ठितश्चेत् तदपूर्वात् प्राप्स्यमानं फलं मध्ये प्रतिबन्धकसद्भावात् झटिति न प्राप्नुयात्। एतावाता यागे तज्जन्ये फले वा यत् प्रतिबन्धकं कर्म तादृश प्रतिबन्धकापनयनद्वारा निषेधवाक्यानां पुरुषार्थसम्बन्धित्वं सिध्यति। विधिः किल स्वविधित्वसाफल्याय पुरुषं प्रवर्तयति। प्रयोजनाभावे केवलविधिवाक्येन पुरुषः न प्रवर्तेत। कथञ्चित् श्रद्धाजाड्येन प्रवृत्तोऽपि मन्दीभूतः भवेत्। अतश्च विधिः इष्टसाधनत्वमाक्षिपति। इष्टसाधनतया पुरुषः प्रवर्तते। ततश्च विधिवाक्यानां यथा प्रवर्तकत्वं सिध्यति एवं निषेधवाक्यानामपि निवर्तकत्वं सिध्यति-तथाहि-सर्वत्र निषेधस्थले नञर्थस्य इतरपदार्थवत् आख्यातार्थ-

प्रवृत्तिरूपार्थभावनायां अन्वयः। नञश्चायं स्वभावः यत् स्वसमभिव्याहृतपदार्थविरोध-बोधकत्वम्। यथा घटो नास्तीत्युक्ते अस्तिसमभिव्याहृतो नञ् घटसत्वविरोधि घटासत्वं बोधयति। एवं आख्यातार्थप्रवर्तनायां अन्वितो नञ् प्रवृत्यभावं बोधयति। प्रवृत्यभावश्च निवृत्तिरेव। एवं निषेधवाक्यं प्रवृत्यभावरूपां निवर्तनां प्रतिपादयत् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेः परानिष्ट-साधनत्वमक्षिपत् पुरुषं ततो निवर्तयतीति निषेधवाक्यस्य निवर्तकत्वं सिध्यति। ''ब्राह्मणो न हन्तव्यः, न कलञ्जं भक्षयेदित्यादौ'' हननभक्षणादिवर्जनकर्तव्यतावाक्यार्थपक्षे विधिविशेषबोधकत्वेन तयोः समानार्थकत्वमिति भवति। परन्तु **विधि निषेधयोः महान् भेदः** - फलम्, बुद्धिः, प्रमेयम्, अधिकारी, बोधकश्चेत्येतत् पञ्चकं विधौ भिन्नम्, निषेधे च भिन्नम्, इति तथोर्भेदः। यजेत स्वर्गकाम इति विधौ स्वर्गःफलम्। न कलञ्जं भक्षयेदित्यत्र निषेधे अनर्थनिवृत्तिः फलम्। विधिवाक्यादयं मां प्रवर्तयतीति बुद्धिः। निषेधवाक्यादयं मां निवर्तयतीति बुद्धिः। वाक्यजन्यशाब्दबोधे प्रमेयं प्रधान्येन विवक्षितम्। तच्च विधिवाक्ये विधिः। निषेधवाक्ये निषेधः। विधौ अधिकारी स्वर्गादिकामः। निषेधेऽधिकारी पापभीरुरनिष्टनिवृत्तिकामः। तथा बोधकश्शब्दो विधौ लिङादिप्रत्ययः। निषेधवाक्ये तु नञादिरिति। स्पष्टञ्चेदं विधानप्रतिषेधयोः ब्रह्महत्याश्वमेधयोरिव महदन्तरमित्यादि **न्यायसुधायाम्**। ये तु मण्डनमिश्रप्रभृतयः **विधिविवेकादौ** इष्टसाधनत्वमेव लिङर्थः, न प्रवर्तनेति वदन्ति तेषां मतेपि नञः प्रत्ययार्थेन अन्वय-स्सम्मत एव। यदा तु प्रत्ययार्थस्य यत्र नञर्थे अन्वये बाधकम्, तदा नञर्थस्य धात्वर्थेनैव अन्वयः। तच्च बाधकम् द्विविधम्-**उपक्रमः**, विकल्पप्रसक्तिश्चेति। प्रथमस्योदाहरणम्-नेक्षेतोद्यन्तमादित्यमित्यादि वाक्यम्। अत्र नञस्धात्वर्थेनान्वये पर्युदासवोधकता। ''पर्युदासस्स विज्ञेयः यत्र पूर्वपदेन नञ्''। इत्यभियुक्तवचनम्। **पूर्वपदशब्दः** मीमांसकैकपारिभाषिकः। उत्तरपदशब्दः आख्यातप्रत्ययं निर्दिशति। तद्भिन्नं सर्वं-धातुः, प्रातिपदिकं, समस्तं व्यस्तञ्च आख्यातातिरिक्तः प्रत्ययश्च **पूर्वपदशब्देन** गृह्यते। आख्यातार्थश्च भावना। ततश्च भावनेतरार्थसम्बद्धो नञर्थः पर्युदासः। भावनासम्बद्धो नञर्थः प्रतिषेधः। यथा न कलञ्जं भक्षयेदिति। अब्राह्मण-

अधर्मादिशब्दाः पर्युदासोदाहरणानि। अब्राह्मणमानयेत्यत्र ब्राह्मणापेक्षया आनयनक्रियापेक्षया अर्थभावनापेक्षया च शाब्दभावनाया न कलञ्जं भक्षयेदित्यत्रेव प्राधान्येऽपि वृत्तिबलात् नञर्थस्य ब्राह्मणेनैव सम्बन्ध इत्यतोऽब्राह्मणशब्दस्य ब्राह्मणेतररूपोऽर्थः। असमस्तनञ्स्थले तु यद्येवं पर्युदास इष्यते तर्हि तत्र नञर्थस्याख्यातार्थसम्बन्धे किञ्चित् प्रमाणमिष्यते। तच्च उपक्रमविरोधो विकल्प-प्रसक्तिश्चेति। उपक्रमविरोधे च नञ्घटितवाक्यस्य उपक्रमेण असम्बन्धात् प्रकृतहानिः, अप्रकृतकल्पना च स्यात्। विकल्पे च दोषाष्टकप्रयुक्तं गौरवम्। ईदृशगौरवापेक्षया तत्र नञर्थस्य प्रधानसम्बन्धं परित्यज्य अप्रधानेन सम्बन्धः स्वीक्रियते। यथा नेक्षेत उद्यन्तमादित्यमित्यत्र असमस्तनञ्स्थले उपक्रमविरोधात् पर्युदासाश्रयणम्। तथाहि-स्नातकस्य अनुष्ठेयपदार्थ निरूपणप्रसङ्गे "तस्य व्रत" मित्यादि सामान्यत एव व्रतशब्दो दृश्यते। तस्य च विशेषापेक्षायां तदग्रिमतनैः वाक्यैः विशेषस्समर्पणीयः। कर्तव्यस्य विशेषोऽपि कर्तव्य एव भवति। पूर्ववाक्यापेक्षितविशेषसमर्पणमुत्तरवाक्यैः कर्तव्यम्। यावदुभयोरेकवाक्यत्वाभावे पूर्ववाक्यं साकाङ्क्षमेव सत् अनर्थकं स्यात्। एकवाक्यतायाः कृते उत्तरवाक्यैः कर्तव्योऽर्थः प्रतिपादनीयः। कर्तव्यमित्यारभ्य न कर्तव्यमित्युक्ते एकवाक्यता न स्यात्। ततश्च "नेक्षेत" इति वाक्येन कर्तव्यरूपोऽर्थो यथा प्रतिपादितस्स्यात् तथा नञर्थस्यान्वयो वाच्यः। कर्तव्यार्थापेक्षया यदर्थान्तरम् उद्यदादित्येक्षणात् निवर्तनारूपं तदर्थकत्वं नेक्षेत "इति वाक्यस्य गृह्यते चेत् तस्य व्रतमिति पूर्ववाक्ये किं तत् कर्तव्यमित्युत्पन्नाया आकाङ्क्षाया अपूरणात् पूर्ववाक्यं अप्रमाणं स्यात्। तथा च स्नातकव्रतस्य कर्तव्यार्थत्वेनोपक्रमात् उपक्रमानुरोधेन अत्रत्यनञा धात्वर्थविरोधि-अनीक्षणसंकल्प एव प्रतिपाद्यते इति पर्युदास आश्रीयते। एवञ्च आदित्यविषयकानीक्षणसंकल्पेन भावयेत् इति वाक्यार्थः। तदिदं असमस्तस्थले उपक्रमविरोधात् नञः पर्युदासाश्रयणस्योदाहरणम्। असमस्तस्थले विकल्पप्रसक्त्या नञः पर्युदासाश्रयणस्योदाहरणन्तु "यजतिषु येयजामहं करोति नानुयाजेषु इति वाक्यम्। "सप्तदश प्रजापतिः यज्ञमन्वायत्तः" मन्त्रैकदेशवाक्यम्। अत्र आश्रावय इति चतुरक्षरम्, अस्तु श्रौषट् इति चतुरक्षरम्, यज इति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्,

दव्यक्षरो वषट् कार सप्तदशाक्षरोपेतत्वात् प्रजापत्तिसृष्टत्वाच्च सप्तदश प्रजापति रित्युच्यते। अत्र आश्रावय इत्यादिमन्त्रा विधीयन्ते। अयं पञ्चानां मन्त्राणां समुदाय: यज्ञमन्वायत्त: - सर्वयज्ञेषु अनुगतो भवति। प्रथमतोऽध्वर्यु: आग्रीध्रं प्रत्याश्रावयेति वदति। हे आग्रीध्र यक्ष्यमाणदेवतां प्रति तुभ्यमिदं दीयत इति आभिमुख्येन श्रावयेति तदर्थ:। तत आग्रीध्र:, अस्तु श्रौषट्'' इति वदति। एतन्मन्त्रभागेन अस्त्विन्तेन अध्वर्युक्तं अङ्गीकृत्य द्वितीयेन श्रौषडिति भागेन देवतायै हविर्दानं श्रावयति। हे देवा: युष्मद्विषयमिदं हर्विदानं शृणुतेति **श्रौषडित्यस्**यार्थ:। तत: यज इति अध्वर्यो: होतारं प्रत्युक्ति:। याज्यामन्त्रं पठेत्यर्थ:। ततो होता येयजामहे इति मन्त्रं पठित्वा याज्यामन्त्रं च उच्चार्य तदन्ते वषट् इति मन्त्रं पठति। येऽध्वर्युणा यज इति प्रेषिता:. ते वयं यजामहें याज्यामन्त्रं पठाम इति तदर्थ:। याज्यामन्त्रानन्तरं उच्चारितस्य **वषट्कारस्य हविर्दीयत** इत्यर्थ:। एवं सर्वत्र यज्ञे प्रक्रिया। तत्र होत्रा उच्चार्यमाणो यजामहे इति पञ्चाक्षरो मन्त्र:, सोऽनुयाजेषु, नानुयाजेषु येयजामहं करोतीत्यनेन वाक्येन पर्युदस्यते। येयजामह इति मन्त्रपठितस्य हकारान्त भागस्य अनुकरणं कृत्वा उच्चारणार्थेन अकारेण संयोज्य तस्य अकारान्तशब्दस्य द्वितीयैकवचनं **येयजामह**मिति। अत्र नानुयाजेषु येयजामहं करोति इति अनुयाजेषु येयजामहप्रतिषेध: क्रियते। प्रतिषेधस्य प्राप्तिपूर्वकता अभावस्य प्रतियोगिसापेक्षत्ववत् वक्तव्या। सा च यदि रागत: प्राप्ता तत्र निषेधश्च शास्त्रेण तर्हि प्रबलेन शास्त्रेण रागप्रापितस्य बाधस्सुलभ:। यत्र तु शास्त्रमेव प्रापकं यथा यजतिषु येयजामहं करोति'' इति, तत्र शास्त्रप्रापितस्य शास्त्रान्तरेण नानुयाजेषु'' प्रतिषेधेन बाधे विकल्पापत्ति:। उभयोश्शास्त्रत्वाविशेषात् अन्यतरेण अन्यतरस्य अत्यन्तबाधायोगात्। तत्र पाक्षिकी प्रवृत्ति: स्वीकार्या। ततश्च विकल्प:। विकल्पस्थले अष्टौ दोषा: स्वीकार्या भवन्ति। विधिनिषेधशास्त्रयो: पर्यायेण अनुष्ठानं दोषाष्टकस्वीकारे कारणम्। तत्र येन प्रथमं विधिशास्त्रं प्रमाणत्वेन स्वीकृतम्, तस्य निषेधशास्त्रप्रामाण्यस्वीकारकाले परित्याग:, अप्रतीतअप्रामाण्यकल्पनम्, प्रयोगान्तरे निषेधशास्त्रग्रहणे कृते पूर्वाभ्युपेत प्रमाण्यपरि-त्याग:, निषेधशास्त्रे परित्यक्तप्रमाण्यस्वीकार:, इति चत्वारो दोष:, एवं निषेधशास्त्रस्य

प्रथमग्रहणे विधिशास्त्रे चत्वारो दोशाः भवन्ति। ततश्च प्रमाणत्वस्य परित्यागः, अप्रमाणत्वस्य कल्पनम्, इति दोषद्वयम्, तथा परित्यक्तस्य प्रमाणत्वस्य प्रत्युज्जीवनम् प्रकल्पितस्य अप्रमाणत्वस्य हानिश्चेति दोषद्वयम्। मिलित्वा दोषचतुष्टयम्। तच्च विकल्पघटके वाक्यद्वये प्रत्येकमिति संकलनया अष्टौ दोषाः भवन्ति। विकल्पस्थले च अन्यतरस्य प्रवृत्तौ अन्यतरस्याप्रामाण्यापत्तिरिति पाक्षिकमप्रमाण्यमापद्येत। किञ्च विधिप्रतिषेधयोरुभयोरपि दृष्टफलेऽसम्भवति अदृष्टफलकल्पनायाः न्याय्यत्वात् यजतिषु येषजामहकरणेन, अनुयाजेषु येयंजामहाकरणेन बा न कस्यापि दृष्टफलस्याभावात् अदृष्टफलोत्पादकत्वं स्यात्। ततश्च पुरुषार्थत्वाविशेषात् अदृष्टद्वयकल्पना प्रसज्येत। तथा च पाक्षिकाप्रमाण्यभीत्या विकल्पप्रसक्त्या अदृष्टद्वयकल्पनाप्रसक्त्या च नानुयाजवाक्ये नञः पर्युदास एव स्वीक्रियते-अनुयाजव्यतिरिक्तेषु यजतिषु येयजामहः कार्य इति। तथा च नञः असति बाधके असमस्तस्थले प्रसज्यप्रतिषेधाश्रयणम्, समस्तस्थले तु पयर्दुदासाश्रयणमिति सिध्यति। दीक्षितो न ददाति न जुहोति इत्यादौ। विप्राय गां ददाति अग्निहोत्रं जुहोति इत्यादिना पुरुषार्थतया विहितानां होमदानादीनां दीक्षितो न ददाति न जुहोतीत्यादिना क्रत्वर्थतया आत्यन्तिकतया निषेधः - सोमयागे दीक्षितेन यजमानेन पुरुषार्थादानहोमादयो न कर्तव्या इति। अत्र प्रसज्यप्रतिषेधार्थकत्वं नञः। एवं नेक्षेत उद्यन्तमादित्यम् इति वाक्ये नञः पर्युदासार्थकत्वम्। तस्य व्रतमित्युपक्रम्य स्नातकस्य व्रतानुष्ठानवाक्यबलात् पर्युदासाश्रयणम्। तस्मात् धात्वर्थविरोधिःअनीक्षणसंकल्प एवात्र नञा बोध्यते। ''तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'' इति नञः विरोधार्थेऽपि प्रसिद्धेः। तथाच क्रत्वर्थपुरुषार्थानुबन्धित्वात् निषेधवाक्यानामपि धर्मबोधकतया प्रमाण्यं सिध्यति।

**अर्थवादः** -अर्थस्य-प्रयोजनस्य वादः -वादनम्=अर्थवादः। विध्यर्थप्रशंसापरं वचनम् अर्थवादः। अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति। निषिद्धार्थं शीघ्रं निवृत्तये निन्दति। सोऽयमर्थवादः लोकवेदसमानः। ओदनकामस्तण्डुलं पचेत, तृप्तिकामस्तण्डुलौदनं भुञ्जीत इत्यादौ। विध्यर्थस्य तण्डुलपाककरणस्य तण्डुलौदन-

भोजनरूपस्य वा स्तावकं तण्डुलपाकः -पूर्वं ऋषिभिःकृतः, ओदनममृतम् इत्यादि वाक्यम्। एवं कफज्वरपीडितो दुग्धं न पिबेत् इत्यादि निषेधस्य निन्दकं पशुभिः भक्षि-तेनापथ्यतृणादिना दुग्धं जन्यते तच्च विषरूपमित्यादिकं वाक्यम्। ततश्च विधिनिषेधभिन्नं प्राशस्त्य निन्दान्यतरपरं वाक्यमर्थवाद इति अर्थवादानां लक्षणं वक्तव्यम्। वैश्वानरं द्वा-दशकपालं निर्वपेत् पुत्रे जाते "इत्युपक्रम्य यस्मित् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति इत्युपसंह्रियते। तन्मध्ये यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति इति वाक्यंश्रूयते। स अष्टाकपालादिः पुत्रगतपूतत्वादिफले कारणं भवितुम् अयोग्यः, अपेक्षाया अभावात्, गुणानां कर्तृसमवेत फलजनकत्वमिति नियमात् तादृशफलाभावेन निष्फलत्वमेव तस्य। पृथकफलाय विधाने तु वाक्यभेदः। ततश्च अर्थवादत्वमेव तस्येति उदाहरणम्। एवं यजमानो यूपः, आदित्यो यूपः इत्यादिवाक्यं चक्षुर्गम्यत्व-ऊर्ध्वत्व-तेजस्वित्व साम्यात् यजमानादित्यशब्दाभ्यां यूपस्स्तूयत इत्यर्थवादः। बर्हिषि रजतं न देयमिति वाक्यंश्रूयते। देवासुरयुद्धे प्रवृत्ते सुरेभ्योपहृतमणि-मुक्तादिकं श्रेष्ठं वसु दैवै रक्षणाय अग्नौ निक्षिप्तम्। कदाचित् पराजयश्चेत् आपद्येत तदुप-युज्येतेति तेषामाशयः। लोभाविष्टश्च अग्निस्तद् गृहीत्वापलायत। ततः विजयिभिः देवैरग्निमन्विष्य हठात् तद्धनं गृहीतम्। ततः सोऽग्निररोदीत्। प्रसङ्गात् रूद्रशब्दस्य प्रवृत्तिनिमित्तं विधत्ते-यतो रोदनं कृतवान् ततो रुद्रस्य रुद्रत्वमिति। यदश्रु नेत्रात् बिन्दुरशीर्यत भूमावपतत् तद्रजतं अभवत्। तस्य अश्रुजत्वेन दक्षिणां प्रत्ययोग्यत्वात् तद्दाने संवत्सरादर्वाक् रोदननिमित्तं भवति। यथा विधिः पुरुषाणां प्रवृत्तये प्राशस्त्यमपेक्षते एवं निषेधोऽपि निवृत्तये निषेध्यार्थप्राशस्त्यमपेक्षते इति वाक्यमिदं निषेधार्थवादः।

**अर्थवादप्रामाण्यम्**-स्वाध्यायोऽध्येतव्य इति वाक्येन अध्ययनविधिना अर्थवादवाक्यसाधारण्येन वेदस्य स्वरूपः स्वीकृतः। एवं आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानामिति च स्वीकारात् अक्रियाप्रतिपादकानां भूतार्थपराणां काव्यालाप-समानां अर्थवादवाक्यानां वेदवाक्यत्वेन स्वीकारेऽपि क्रत्वर्थत्व-पुरुषार्थत्वरूप-प्रयोजनाभावात् प्रामाण्यं नास्तीति प्रश्नः यद्यपि भवति तथापि अर्थवादवाक्यानां

विधिवाक्यैकवाक्यत्वेन प्रामाण्यं स्वीकर्तव्यम्। तथाहि-विधिनिषेधवाक्यापेक्षितप्राशस्त्याप्राशस्त्यरूपप्रयोजनवदर्थे अर्थवादानां लक्षणामाश्रित्य संनिहितविधिनिषेधवाक्याभ्यामेकवाक्यतायाः स्वीकरणीयतया तेषां धर्माधर्मयोः प्रामाण्यमुपपद्यते। विधिनिषेधयोः प्राशस्त्याप्राशस्त्यापेक्षा तु एवम्-नञ्समभिव्याहाररहितलिङा प्रवर्तनायाः, नञ्समभिव्याहृतलिङा निवर्तनारूपायाः शाब्दभावनाया अभिधानात्, तस्याश्च भावनास्वाभाव्यात् अंशत्रयाकाङ्क्षायां प्रवर्तनायाः प्रवृत्तिरूपार्थभावनायाः, निवर्तनायां नञुपस्थाप्यतदभावस्य च भाव्यत्वेनान्वयः। लिङादिज्ञानम्, लिङादिशक्तिज्ञानम्, प्रवर्तनादिज्ञानमेव वा करणम्, स्वरूपसत्योः प्रवर्तनानिवर्तनयोः प्रवृत्तिनिवृत्यप्रयोजकत्वात्। करणत्वं च भावनाभाव्यनिष्पादकत्वम्। इह च भाव्ये प्रवृत्तिनिवृत्ती, तन्निष्पादकत्वञ्च लिङादिज्ञानस्य अक्षतम्। परन्तु उक्तकरणस्य शाब्दबोधे न भानम्, बोधकपदाभावात्। प्राशस्त्याप्राशस्त्ययोश्च इतिकर्तव्यतात्वेन अन्वयः। प्रवर्तनाज्ञानेन प्रवृत्तौ जननीयायां प्राशस्त्यज्ञानस्य, निवर्तनाज्ञानेन निवृत्तौ जननीयायां अप्राशस्त्यज्ञानस्य च सहकारित्वात्। अतः प्रवर्तनानिवर्तनारूपाभ्यां विधिनिषेधाभ्यां स्वसाध्यप्रवृत्तिनिवृत्तिसिद्धये उक्तरूपप्राशस्त्याप्राशस्त्ये आकाङ्क्षते एवेति। तत्र प्राशस्त्यस्य स्वज्ञानाधीनोत्कटरागजन्यत्वसम्बन्धेन अप्राशस्त्यस्य च स्वज्ञानाधीनोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसम्बन्धेन आख्यातार्थकृतौ अन्वयः। नरकसाधनताज्ञानसहितनरकद्वेषस्य कृतिरूपप्रवृत्तौ प्रतिबन्धकतया कृत्यभावस्य द्वेषप्रयोज्यत्वञ्च सिध्यति इति अर्थवादानां विध्येकवाक्यत्वं सिध्यति। तथा च अर्थवादानां इष्टसाधनयागविशेष्यकलक्षितप्राशस्त्यप्रकारकप्रमितिजनकत्वेन भावनाविशेष्यकप्राशस्त्यादिप्रमितिजनकत्वेन वा प्रकारांशे अनधिगतार्थगन्तृत्वम्, विशेष्यांशे धर्मप्रमाजनकत्वञ्च सिध्यति इति प्रामाण्यं वक्तव्यम्। यद्यपि विधेः प्रवर्तकान्यथानुपपत्यैव विधेयस्य प्राशस्त्यावगमः सम्भवति तथापि अर्थवादाम्नानबलात् अर्थवादैरेव प्राशस्त्यं ज्ञातव्यमिति नियमाङीकारात् न अर्थवादानां वैयर्थ्यम्। उक्तनियमस्य च दृष्टप्रयोजनासम्भवात् अदृष्टमेव प्रयोजनम्। तस्य च क्रतुजन्यापूर्वे उपयोगः, अवधातादि नियमजन्यापूर्ववत्। इत्थञ्च तादृशनियमादृष्ट प्रयोजकी-

भूतप्राशस्त्यस्यापि धर्मरूपतया अर्थवादानां धर्मप्रामाण्यमुपपन्नं भवति। एवं प्राशस्त्याप्राशस्त्यज्ञानयोस्साक्षाद्धर्माधर्मप्रवृत्तिनिवृत्युपयोगितया वा अर्थवादानां धर्माधर्मप्रामाण्यमुपपद्यते।

**अर्थवादभेदाः**-सोऽयमर्थवादः प्रधानतया विधिशेष-निषेधशेषभेदेन द्वेधा भिन्नोऽपि गुणअनुवाद भूतार्थवाद-निन्दा प्रशंसा परकृति पुराकल्पभेदात् अवान्तर भेदांश्च लभते।

१) **विधिशेषार्थवादो यथा**- वायव्यं श्वेतमालभेत भूतिकाम इति वाक्येन ऐश्वर्यकामिनो वायुदेवताकः पशुः विहितः। **आलम्भनं** बर्हिषा प्लक्षशाखया च पशोरूप-स्पर्शः। पशुश्च श्वेतवर्णः। श्वेतवर्णो हि वायोरतिशयेन प्रियो भवति। तादृशं वायुदेवताकं पशुमैश्वर्यकामः यजमान आलभेत संस्पृशेत्, पशोर्यागार्थमुपस्पर्शनं कुर्यादित्यर्थः। इदमुपस्पर्शनमेव-**उपाकरण**मित्युच्यते **जैमिनीयन्यायमाला**याम् (३/६/७) तदिदं उपस्पर्शनं यागार्थं विधीयते। यागस्य द्वे रूपे द्रव्यं देवता च। द्रण्यैक्ये देवताभेदे वा देवतैक्ये द्रव्यभेदे वा यागो भिद्यते। तयोरुभयोरैक्ये अन्यभेदे सत्यपि यागो न भिद्यते। तथा च प्रकृते वायव्यं श्वेतमालमेत इति स्पष्टतया दर्शनात् उपस्पर्शनं प्रकृतयागार्थमेव नान्यत्रोपयोगः। एवं श्वेतपश्वालम्भनं विधाय तदुत्तरं वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयति इति श्रुतिर्दृश्यते। शीघ्रकारिणी वायुदेवता। यजनकर्ता च वायोरतिप्रियेण श्वेतपशुसम्बन्धिहविर्द्रव्येण वायुदेवतामेव सेवते। ततः स वायुरेवैनं यजमानं भूतिं गमयति। अत्र शीघ्रकारित्वरूपपुरस्कारेण वायुदेवतायाः स्तुतिरवगम्यते। पूर्ववाक्ये वायुदेवतामुद्दिश्य पश्वालम्भनं विहितम्। उत्तरत्र वायुदेवतायाः स्तुतिःक्रियते। अनयोर्विधायकस्तावकवाक्ययोः अवश्यं कश्चन सम्बन्धो वक्तव्यः। अन्यथा

अध्ययनवाक्यविरोधात् पुरुषार्थत्वहानिर्वेदवाक्यानां आपद्येत। प्रमाणशिरोमणिभूताया: श्रुते: असम्बद्धाभिधानरूपो दोषश्चापद्येत। अतश्च विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्यु:'' इति सूत्रप्रामाण्यात् अनयोरेकवाक्यता वर्णनीया। ततश्च शीघ्रकार्यकारि-स्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता तत: प्रशस्तमिमं वायुदेवताकं पशुमैश्वर्यकाम आलभेतेति अर्थो वक्तव्य:। इति विधिशेषतया वाक्यमिदं अर्थवादो भवति।

२) निषेधार्थवादो यथा-बर्हिषि रजतं न देयमिति निषेधशास्त्रस्य सोरोदीत् यत् रुद्रस्य तत् रुद्रस्य रुद्रत्वम् इत्यादिवाक्यमर्थवाद:। क्रतौ ऋत्विग्भ्यो रजतं न देयमिति निषिद्धं रजतदक्षिणादानं निन्दति। वर्णितञ्चेदं पूर्वं निषेधवाक्यविचारावसरे। (p. १०१)

३) गुणवादार्थवादो यथा-य: प्रजाकाम: पशुकाम: स्यात् स प्राजापत्यमजं तूपरम् आलभेत इति विधिवाक्यम्। अस्य तूपरपशो (गुणस्य) स्तावकं वाक्यं स आत्मनो वपां उदक्खिदत् तमग्नौ प्रागृह्णात् इति। अजातशृङ्ग: अज: **तूपर**शब्देन कथ्यते। सृष्टेरादौ जगत् सिसृक्षु: प्रजापति: तदर्थं कञ्चन यागमनुतिष्ठासु: तदानीं तत्साधनभूतस्य द्रव्यस्य कस्यचिदप्यभावात् स्वीयामेव वपां निष्कास्य जुहाव। तत: शृङ्गरहित: पशुस्समभवत्। एतच्च तूपरपशुयागसामर्थ्यम्, यत्तस्मिन् अनुष्ठितमात्रे एव प्रजा: पशूंश्च स्रष्टुं समर्थोऽभवत्। तस्मात् प्रजापतिसम्पादकोऽयं तूपर इति तूपरगुणस्य वादोऽत्र वर्णित: एवं औदुम्बरो यूपो भवति इति वाक्यस्य ऊर्ग्वा उदुम्बर:, ऊर्क् पशव: ऊर्जैवाऽस्माऊर्जं पशूनाप्नोति इति वाक्यम्, यजमानो यूप: आदित्यो यूप: इत्यादि यूपस्य तेजस्वित्वोर्ध्वत्वादिकं गुणं वदतीति गुणवादार्थवादवाक्यानि भवन्ति।

४) प्रशंसार्थवाद: -अग्निर्वा अकामयत ''इत्यस्य अग्निदैवत्यो भाग: अग्निना कृतत्वात् प्रशस्त:। तस्मादिदानीमपि यजमानैरवश्यं कर्तव्य इति विधेयगतकर्मप्राशस्त्यद्वारा विध्येकवाक्यत्वं स्वीकृत्य प्रकृतयागस्यार्थवादतां लभते। एवं गर्गत्रिरात्रविधे: शेष: ''शोभतेऽस्य मुखं य एवं वेदेति'' वाक्यम्। तद्विषयं वेदनमपि मुखशोभा हेतु:, किमुत अनुष्ठानमिति स्तूयते। यथा कर्णाभरणादिना मुखं शोभमानं भवति एवं वेदितुरुत्साहेन

विकसितं वदनं शोभितमिव शिष्यैरुद्वीक्ष्यते इति विद्याप्रशंसापरमिदं वाक्यं प्रंशसार्थ-वादः।

५) अनुवादार्थवादो यथा-प्रमाणान्तरावगतार्थबोधकं वाक्यमनुवादः। ''अग्निर्हिमस्यभेषजम्''इति वाक्यमुदाहरणम्। हिमजन्यशैत्यापनोदनाय अग्निस्साधनमिति लोकतस्सिद्धमर्थमिदं वाक्यमनुवदति। वायुर्वै क्षेपिष्ठा देवतेत्यपि वाक्यमप्यस्योदाहरणं वक्तव्यम्।

६) भूतार्थवादो यथा-प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको वादः भूतार्थवादः ''इन्द्रो वृत्राय'' वज्रमुदयच्छत्, इन्द्रो वृत्रमहन् इत्यादिवाक्यमुदाहरणम्। अत्र वृत्रं प्रति इन्द्रवज्रोद्यमनाभावावगाहिप्रमाणान्तरस्यादर्शनात् न तद्बोधने प्रमाणान्तरेण विरोधः, नापि प्रमाणान्तरावगतार्थप्रतिपादकत्वम्, वृत्रं प्रति इन्द्रवज्रोद्यमनप्रतिपादक प्रमाणान्तरस्या-दर्शनादिति।

७) परकृतिप्रतिपादकोऽर्थवादो यथा-परेण महता पुरुषेण कर्म कृतमिति प्रतिपादकोऽर्थवादः परकृतिरित्युच्यते।''अग्निर्वा अकामयत''इति वाक्यमप्यस्योदाहरणं भवति। तच्चोपपादितं पुरस्तात्। माषानेव मह्यं पचत'' इति वाक्यमप्यस्योदाहरणम्। इति हस्माह वषट्कुर्वार्ष्णिर्माषानेव मह्यं पचतेति तस्मादारण्यमेवाश्नीयादिति विधेर्वाक्य-शेषः।

८) पुराकल्पार्थवादो यथा-परवक्तृकार्थादिप्रतिपादकोऽर्थवाद पुराकल्पार्थवादः। तमशपत्धिया धियात्वावध्यासुः', उलमुकैर्ह स्म पूर्वे समाजग्मुः तानसुरा रक्षांसि निर्जघ्नु रिति वाक्यानि अस्योदाहरणानि। द्वितीयं वाक्यं गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्निति विधेर्वाक्यशेषः। एकपुरूषकर्तृकमुपाख्यानं **परकृतिः**, बहुकर्तृकमुपाख्यानं **पुराकल्प** इति परकृतिपुरकल्पयोर्भेदो ज्ञेयः। क्वचित् सन्दिग्धार्थनिर्णायकत्वेनापि अर्थवादानामुपयोगो दृश्यते-यथा-अक्ताःशर्करा उपदधातीति विधौ अक्ता इति पदेन द्रवद्रव्यसामान्यं प्रतीयते। तच्च द्रव्यं किमिति सन्देहे तेजो वै धृतमित्यर्थवादात् धृतमिति निश्चीयते। तथाचार्थ-वादवाक्यस्य न केवलं विधिनिषेधप्रशंसनिन्दारूपमेव एकं प्रयोजनं किन्तु सम्भवति

चेदन्यपि प्रयोजनं भवति। एवमर्थवादानां अनन्तभेदा: बालप्रकाशात् ज्ञेया:।

**स्मृत्या-चारयोरपि धर्मे प्रामाण्यम्।** जैमिनिसूत्राणां प्रथमाध्याये तृतीयपादे स्मृत्याचारयोरपि प्रामाण्यं साधितम्। स्मर्यते वेदधर्म अनेनेति करणार्थकक्तिन्प्रत्ययान्तस्स्मृतिशब्द: स्वीक्रियते। तच्च वेदार्थानुभवजन्यं वेदार्थानुवादकं धर्मे च प्रमाणं याज्ञवल्क्य मनु वसिष्ठादिमुनिप्रणीतं वाक्यरूपम्। वेदोऽखिलो धर्ममूलम्, स्मृतिशीले च तद्विदाम् इति मनुस्मृति:। परन्तु स्मृतीनां प्रामाण्यन्तु वेदवत् न स्वातन्त्र्येण, किन्तु वेदमूलकत्वेनैव। विप्रकीर्णानां नानाशाखानां च वाक्यानां उपसंहारेण, अर्थवादानां परिशीलनेन, विध्यर्थवादविवेचनेन, न्यायसिद्धार्थनिर्धारणे धर्मस्वरूपनिर्णये सामर्थ्यरहितानां मन्दबुद्धीनामुपकाराय सर्वज्ञकल्पै: विदित निखिलवेदागमरहस्यै: वेदोक्तधर्मानुष्ठानशीलै: ऋषिभि: प्रणीतत्वात् वेदमूलकत्वेन स्मृतीनां प्रामाण्यं स्वीक्रियते। स्मृतिषु काश्चित् वेदमूला:, काश्चित् अनुमितवेदमूला:, काश्चित् अर्थवादमूला: अथापि वेदाविरोधे प्रामाण्यं स्वीक्रियते। एतेषां विस्तृतवर्णनं **तन्त्रवार्तिके** (१-३-१) वर्णितम्। वेदविरुद्धानां स्मृतीनान्तु न प्रामाण्यम्। अष्टकाश्राद्ध-औदुम्बरीसर्वाविष्टनादीनि प्रामाण्याप्रामाण्ययोरूदाहरणानि। विमता स्मृति: वेदमूला वैदिकमन्वादिप्रणीतस्मृतित्वात् उपनयनाध्ययनादिस्मृतिवत् इत्यनुमानं स्मृतीनां वेदमूलत्वे प्रमाणम्। एवं **आचाराणामपि प्रामाण्यम्**। विगतमत्सराणां अनहङ्कारिणां अलोलुपानां कामक्रोधादिदोषवर्जितानां सन्तुष्टानां आचारा एव **आचार** इति कथ्यते। ते किल श्रुतिप्रत्यक्षज्ञानवन्त: तद्वारा अनुमितश्रुति-अर्थवन्तश्च भूत्वा वैदिककर्मानुष्ठाननिष्ठा भवन्ति। तेषां वाक्यानां आचाराणाञ्च श्रुतिस्मृतिमूलत्वात् प्रमाणम्। यथा होलकोत्सवादि। फाल्गुनकृष्णप्रतिपदि क्रियमाण: परस्परजल-सेकरक्तधूलिप्रक्षेपरूप: इदानी होलीति व्यवह्रियमाण उत्सव:। परन्तु अवधेयमेतत्- श्रुतिस्मृत्योर्विरोधे श्रुतिप्रामाण्यं प्रबलम्। स्मृत्याचारयो र्विरोधे स्मृतिप्रामाण्यं प्रबलम्। सर्वापेक्षया श्रुते: प्रामाण्यमिति श्रुतिमूलकानां स्मृत्याचाराणां प्रामाण्यमिति मीमांसाशास्त्रसिद्धान्त: एवं अहिंसादीनां बौद्धाभिमताचारत्वेऽपि वेदमूलत्वाभावे तेषां अधर्मत्वमेव श्वचर्मनिर्मितदृतिनिक्षिप्तस्य गोक्षीरस्यापवित्रतावत् इति च।

# चतुर्थं कुसुमम्

**धर्मभेदकप्रमाणानि**-यागादिजन्यं स्वर्गादिजनकं फलैकनाश्यं कञ्चन गुणविशेषम-पूर्वमिति मीमांसकसिद्धान्तः। तच्चापूर्वं यागहोमाहिधात्वर्थानुष्ठानजन्यम्। तत्र तत्र विधिवाक्येषु धात्वंशः, प्रत्ययांशश्चेति भागद्वयम्। लिङ्लोट्तव्यप्रत्ययार्थः भावनेत्यु च्यते। सर्वत्र भावनाया एकत्वात् वेदबोधितधर्मकर्मणां अपि भेदो नास्तीति स्यात्। तद्वारणाय अधोनिर्दिष्टैः-शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराख्यैः प्रमाणैः कर्मभेदस्स्वीक्रियते।

१) **शब्दान्तरात् कर्मभेदः** -तत्र परस्परविजातीयार्थकधातुरूपत्वम्, अपर्याय-धातुरूपत्वम्, अपर्यायधातुनिष्पन्नानि एकप्रकरणगतानि आख्यातानि, विभिन्नार्थकत्वं वा शब्दान्तरत्वम्। यथा-एकस्मिन् ज्योतिष्टोमप्रकरणे पठितानामपि यजेत, जुहोति ददाति इत्यादीनां विभिन्नधात्वर्थवच्छिन्नानां आख्यातानां कर्मभेदात् भावनाभेदबोधकत्वम्। तत्र देवतोद्देश्यकद्रव्यत्यागो **यागः**, स च इन्द्रायेदं न मम'' इति स्वस्वत्वनिवृत्ति-पूर्वकदेवतासम्बन्धापादनबोधकशब्दोच्चारणपूर्वको मानसिकव्यापारः। स च यजति चोदनाचेदितः। स्वस्वत्वनिवृत्तिपूर्वकदेवतासम्बन्धापादनबोधक स्वाहाशब्दोच्चारण-पूर्वकव्यापारः **होमः**। स च जुहोति चोदनाचोदितः। एवं स्वस्वत्वनिवृत्तिपूर्वकः अन्यत्वस्वत्वापादनरूपश्च अन्यहस्तार्पणरूपव्यापारः **दानम्।** तच्च ददातिपद-चोदनाचोदितम्। तथा च एकज्योतिष्टोमप्रकरणपठितानामपि विभिन्नधात्वर्थावच्छिन्नानां आख्यातानां सोमेन यजेत दाक्षिणानि जुहोति हिरण्यमात्रेयाय ददाति इत्यादीनां कर्मभेदकत्वम्। ततश्च यागदानहोमरूपाणि कर्माणि परस्परं भिन्नानि। ततश्च भावनाभेदात् अपूर्वभेदः, अपूर्वभेदात् फलभेद इति व्यवस्था।

२) **अभ्यासात् कर्मभेदः** -विधेरविशेषेण पुनः श्रवणम्, अनन्यपरविधिपुनः श्रवणम्, विशेषपुनःश्रवणमिति वा अभ्यासलक्षणम्। समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति इति पञ्चानां वाक्यानां एकस्य कर्मविधायकत्वम्,

अन्येषां तस्मिन् गुणविधायकत्वमित्यत्र नियामकाभाव:। ततश्च सर्वेषां कर्मविधायकत्वे समानतया प्राप्ते विहितस्य कर्मण: पुनर्विधानं व्यर्थमित्यापद्येत। पुनर्विधानसामर्थ्यात् पूर्ववाक्यविहितकर्मापेक्षया उत्तरोत्तरविहितस्य कर्मणो भेदस्सिध्यति। तथा च समिधो यजतीत्यादिषु प्रयाजेषु समिदादिशब्दा: तत्प्रख्यशास्त्रात् विभिन्नकर्मनामधेयवाचका:, पूर्वं समिद्याग: पश्चात्तनूनपाद्याग इत्येवं कालविशेषणविषिष्टविभिन्नसमिद्यागादि विधायका: इति ज्ञायते। हे अग्ने समिध्यमानास्तव मूर्तय: आज्यस्य वियन्तु हूयमानमिदं आज्यं अश्नन्तु। तनूं शरीरं न पातयति न नाशयति किन्तु पालयतीति **तनूनपात्**। हे अग्ने द्वितीया तनूनपात् तव मूर्ति: आज्यं पिबतु। इड: **ईड्या:** स्तुत्यास्तव मूर्तय: आज्यं पिवन्तु। बृंहणात् बर्हि:। फलं बृंहयन्ती तव मूर्ति: आज्यं पिबतु। अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतं भविष्यति। एवं द्वितीयाज्यभागदेवं प्रति स्वाहा हुतमस्त्विति भविष्यति इति क्रमेणार्थ:। ततश्च कर्मभेदात् भावनाभेद:, भावनाभेदात् अपूर्वभेद इति भवति।

३) **संख्यया कर्मभेद:** –तिस्र आहुती र्जुहोति, सप्तदश प्राजापत्यान् पशूनालभेत इत्यादौ संख्यया कर्मभेद:। वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकाम इति सांग्रहणी ष्टिविधिवाक्यम्। मनसा परस्परमैकमत्येन सम्यक् स्वीकार: **संग्रहणम्**। तत् यस्यामिष्टौ अस्ति सा सांग्रहणी। अनयेष्ट्या यजमानस्य ग्रामप्राप्ति: यजमानकुले भवा: तद्ग्रामस्थाश्च प्रौढा बालाश्च सर्वे पुरुषा: सर्वास्स्त्रियश्च वशे भवन्ति। तत्र आमनस्यामस्य देवा इति तिस्र आहुतीर्जुहोतीति वाक्येन आमनमसीत्यादिमन्त्राणां विनियोगयुक्ता आमनहोमा: उपहोमा अभिहिता:। तत्र त्रित्वसंख्या आहुतिविशेषणत्वेन श्रुता। सा च संख्या स्वाश्रयस्य कर्मणो भेदं विना निवेष्टुमशक्येति भेदमापादयति। एवं सप्तदश प्राजापत्यान् पशून् आलभेत इत्यत्र संख्यया कर्मभेद:। द्रव्यदेवतयो: एकत्वे कर्मैक्यमाशङ्क्य संख्यान्वय-विरोधात् तद्विरोधशान्तये संख्यया कर्मभेद: स्वीकृत:। प्रजापति: देवता अस्येति प्राजापत्य:। प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या:। एवञ्च द्रव्यदेवता-सम्बन्धानां बहुत्वात् यावन्तस्सम्बन्धास्तवन्तो यागास्सन्ति। अत्र सप्तदशसंख्या विशेषिता

इति सप्तदश यागास्सम्पद्यन्ते। न तु बहुत्वोपेताः पशवः एकद्रव्यम्, द्रव्यैक्यात् देवतैक्याच्च यागस्य रूपमभिन्नमित्येकं कर्मेति स्वीकर्तव्यम्।

४) **संज्ञया कर्मभेदः** –अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः अनेन सहस्रदक्षिणेन यजेत इति वाक्ये ज्योतिरादिभिः संज्ञाभिः ज्योतिष्टोमात् भिन्नाः यागाः विधीयन्त इति संज्ञाभेदात् कर्मभेदो ज्ञायते। अत्र एतेन सहस्रदक्षिणेन यजेत इत्यस्य सकृत् श्रुतत्वेऽपि अथशब्दोच्चारणसामर्थ्यात् अथशब्दघटितेषु त्रिषु खण्डेषु सम्बन्धेन वाक्यत्रयसम्पादनम् अथैषज्योतिरेतेन सहस्रदक्षिणेन यजेत, अथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेत, अथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत, इति त्रिभिर्वाक्यैरूत्पन्नं कर्म परस्परं भिद्यते। यागस्यैकत्वे अथैषविश्वज्योतिः, अथैष सर्वज्योतिरिति खण्डद्वय-स्थाथशब्दयोः अथैषज्योतिरित्युक्तयागाधिकारविच्छेदकत्वानुपपत्तेःअथशब्दयो-र्व्यर्थत्वापत्तिः। अतः कर्मत्रयं ज्योतिरादिसंज्ञात्रयभिन्नं इति संज्ञया कर्मभेदः स्वीक्रियते।

५) **गुणात् कर्मभेदः** –यागस्य द्वे रूपे द्रव्यम्, देवता च। स्वरूपभेदात् कर्म-भेदः। तत्र विहिते कर्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुणवाक्यमित्युच्यते। तत्र द्वयोःकर्मणोः द्रव्यैक्येऽपि देवताभेदश्चेत् कर्मभेदः। एवं देवैतक्ये द्रव्यभेदश्चेत् कर्मभेद एव। द्रव्यदेवतयोर्द्वयोरपि भेदे तु सुतरां कर्मभेदः। द्वयोरप्यैक्ये कर्मैक्यमिति स्वीक्रियते। भेदश्च पूर्वस्मिन् कर्मणि असम्भवन्निवेशमूलक इति स्वीक्रियते। असम्भवश्च क्वचित अनेकगुणश्रवणात् विधौ वाक्यभेदापत्तिभीत्या क्वचित् प्रबलगुणश्रवणात्, क्वचित् एकप्रसरताभङ्गभीत्याचेति त्रेधा भवति। तेषु प्रथमस्योदाहरणम्–यदाग्नेयोऽष्टाकपालोऽ-मावास्यायाञ्च पौर्णमास्याञ्चाऽच्युतो भवति इति। अत्र वाक्यभेदापातात् कर्मभेदस्स्वीक्रियते। तत्र वाक्यभेदो नाम वाक्यस्य भेदः –वाक्यभेदः। भेदो नानात्वम्। तच्च द्विधा। वाक्यस्य खण्डेन आवृत्या च। तत्राद्ये वाक्ये यावन्ति पदानि सन्ति तेषां मध्ये कानिचित् पदानि संहत्य वाक्यार्थं बोधयन्ति। अन्यानि च पदानि संहत्य पार्थक्येन अपरं वाक्यार्थं बोधयन्ति। अत्र कस्यचित् पदस्य आवृत्तिर्भवतु मा वा भूत्। अयमेकः खण्डलक्षणो वाक्यभेदः। द्वितीयो वाक्यभेदश्च वाक्ये यावन्ति पदानि सन्दृश्यन्ते तानि सर्वाणि संहत्य

एकं वाक्यार्थं बोधयन्ति। पुनश्च तान्येव सर्वाणि पदानि तदन्तर्गतानि कानिचिद्वा पदानि आवृत्या अपरं वाक्यार्थं बोधयन्ति। अयन्तु गौरवलक्षणो वाक्यभेदः। पदसमूहस्य आवृत्या पुनरनुसन्धानं, तत्र पदानामर्थान्तरस्वीकारेण योजनान्तरेण वा पूर्ववैलक्षण्येन वाक्यार्थकरणमिति गौरवं स्पष्टमेव। तत्र ताभ्यामेतमग्नीषोमीयमष्टादशकपालं पूर्णमासे प्रायच्छदिति वाक्येन अग्नीषोमीयः पुरोडाशयागः विहितः। तदुत्तरं यदाग्नेयोऽष्टाकपालोऽ-मावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति आग्नेययाग उक्तः। अत्र अग्निदेवतायाः पुरोडाशस्य कपालानां तद्गतसंख्यायाः कालस्य चेत्यनेकेषां गुणानां प्राप्तकर्मोद्देशेन विधाने वाक्य-भेदः। अतः पूर्वत्रअनिविशमानं गुणानेकत्वं स्वविशिष्टकर्मान्तरविधायकं सत् पूर्वस्मात् कर्मणः स्वविशिष्टं कर्म भिनत्ति।

**प्रबलगुणविरोधात्** कर्मभेदस्य उदाहरणन्तु "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमिति" वाक्यम्। चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वणि श्रुतमिदम्। अत्र विश्वेदेवदेवता-आमिक्षाद्रव्यसम्बद्धः यागो विधीयते। द्वितीयेन वाजिनद्रव्यकं यागान्तरम्। अतितप्ते पयसि दधिप्रक्षेपे कृते तद् द्विधा भवति। तत्र धनीभूतं **द्रव्यमामिक्षा** इत्युच्यते। अन्यत् द्रवीभूतं तक्रसदृशं **वाजिन**मित्युच्यते। तत्र आभिक्षाद्रव्यभाजो ये विश्वेदेवास्तान् तान् वाजिभ्य इत्यनूद्य वाजिनद्रव्यरूपो गुणो विधीयते? उत अन्यत् कर्म? इति संशये प्राप्ते प्रबलगुणविरोधात् कर्मभेद इति निर्णीयते। पूर्वभागस्यामिक्षागुणावरुद्धत्वात्। उत्पत्तिवाक्ये यो गुणो विधीयते स **उत्पत्तिशिष्टः**। वाक्यान्तरेण यो गुणो विधीयते स **उत्पन्नशिष्टः**। उत्पत्तिशिष्टविरोधे न गुणान्तरं विधीयते उत्पत्तिशिष्टस्य प्राबल्यात्। यदि उभयोर्विरोधस्तत्र उत्पत्तिशिष्टस्य प्राबल्यात् तस्यैव प्राधान्यं स्यात् तर्हि उत्पन्नशिष्टस्या-वकाशाभावस्स्यात्। उत्पन्नशिष्टस्तु तदनन्तरं प्रमितोऽपि विलम्बितत्वात् दुर्बलत्वात् प्रवेशमलभमानो वाजिनद्रव्यस्य देवतान्तरत्वमापादयति। ततश्च द्रव्यदेवतालक्षणस्य रूपस्य भेदात् कर्मभेदस्स्वीक्रियते।

**एकप्रसरताभङ्गभयात्** कर्मभेद इत्यस्योदाहरणम्-वषट्कर्तुः प्रथमभक्ष इति वाक्यम्। एकस्यां वृत्तौ प्रसरः प्रवेशो ययोरर्थयोस्तावेकप्रसरौ। तयोर्भाव एकप्रसरता।

एकवृत्तिप्रविष्टतेति यावत्। तस्याः भङ्गः। तस्मात् भयात् इत्यर्थः। समासघटकपदानि संभूय विशिष्टमेकमर्थं एकया वृत्या प्रतिपादयन्ति इति तस्य तस्य एकस्यार्थस्य विवक्षावशात् उद्देश्यत्वं विधेयत्वं वा ग्राह्यं भवति। न तु तदेकदेशमात्रस्य कस्य चिदर्थस्य उद्देश्यत्वं, कस्यचिद् विधेयत्वं वा ग्रहीतुं शक्यते। अन्तर्भूतपदार्थानां पार्थक्येन उपस्थित्यभावात्, तथात्वे एकार्थीभावलक्षणसामर्थ्याभावात् समर्थः पदविधिरित्यनुशासन विरोधापत्तेः समासाप्रवृत्तेः। ततश्च इयमेव च शब्दानामेकप्रसरता यत्समस्यमानयोः पदयोर्विशिष्टार्थप्रतिपादकत्वम्। एवञ्च प्रकृते वषट्कर्तुः प्रथम भक्ष इत्यनेन वषट्कर्तुः प्राथम्यविशिष्टं भक्षणं पूर्वविहितभक्षणेभ्योऽन्यद्विधीयते। यद्यत्र प्रथमभक्षण इति वृत्यन्तर्गतभक्षणपदार्थमात्रमुद्दिश्य प्राथम्यं विधेयं स्यात् तर्हि तद्वाचकयोर्द्वयोः पदयोरकेस्यां वृत्तौ प्रवेश एव न स्यात्। वषट्कर्तुः प्रथमभक्ष इति वाक्ये तु समासः कृत एवेति तदनुरोधेन एकप्रसरताभङ्गभीत्या विशिष्टार्थस्यैवात्र शाब्दमर्यादया विधेयत्वं विवक्षितमिति वषट्कारे निमित्ते प्राथम्यविशिष्टं समाख्यादिभक्षणतो भिन्नं भक्षान्तरं विधीयते। **प्रकरणान्तरात् कर्मभेद** इत्यस्योदाहरणन्तु-उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति। मासं दर्शपूर्णमासाभ्यां यजन्ते इत्यादिः। प्रक्रिया, अपूर्वकर्मसंनिधानम्, अनुपादेयगुणविशिष्टा पूर्वकर्मानुपस्थितिर्वा **प्रकरणान्तरम्।** संवत्सरसाध्य कुण्डपाय्ययानाख्यसत्रविशेषसंनिधौ-उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वतीति वाक्यंश्रूयते। तत्र प्रसिद्धाग्निहोत्रदर्श-पूर्णमासादेरतिदूरस्थत्वेनात्रानुपस्थिततदुद्देशेन गुणविधानासम्भवात् वाक्यभेदापत्तेश्च अपूर्वमेव कर्म उपसदुत्तरकालिकत्वमासादिविशिष्टं कर्म विधीयते। एवं शब्दान्तरादीनि प्रकरणान्तरान्तानि कर्मभेदकप्रमाणानि उत्पत्तिविधिसहकारिभूतानि॥

**धर्माङ्गताबोधकप्रमाणानिः** - अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिरिति पूर्वं प्रतिपादितम्। तस्य विनियोगविधेः अङ्गप्रधानसम्बन्धबोधने सहकारिभूतानि प्रमाणानि धर्माङ्गतावोधकप्रमाणानीत्युच्यन्ते। तानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या-रूपाणि षट्। एतानि **विनियोजकप्रमाणानी**त्यपि कथ्यन्ते। तेषु प्रथमं **श्रुति**प्रमाणम्। तत्र यः शब्दः कस्यचिद् क्वचिद् विनियोगे कर्तव्ये प्रमाणान्तरं नापेक्षते स शब्दः श्रुतिरिति

कथ्यते। परन्तु सर्वस्य शब्दस्य अभिधाशक्तिसापेक्षत्वेन असम्भव इति स्यात्, अतः स्वोत्तरवर्तिलिङ्गादिप्रमाणपञ्चकमध्ये किमपि प्रमाणं यत् नापेक्षते स शब्दः श्रुतिरिति वक्तव्यम्। यद्यपि श्रुतिरितिशब्दः स्वतः प्रमाणभूतस्य समग्रस्य वेदस्य वाचक एव तथापि अत्र वेदबोधितकर्मसु अङ्गाङ्गित्वबोधनाय प्रवृत्तेषु प्रमाणान्तरेषु यदितरसापेक्षं न भवति तदपि वाक्यं श्रुतिरिति वेदवाक्यान्तर्गतं वाक्यम् यच्च श्रवणमात्रादेव अङ्गत्वं बोधयति सा **श्रुतिरिति** कथ्यते। तथा च द्वितीया-तृतीयादयो हि विभक्तयः स्वार्थबोधनेऽन्यत् किञ्चिदनपेक्षमाणाः कर्मत्वकरणत्वादिकं स्वार्थं झटिति अवबोधयन्ति। तत्र तृतीयया साक्षादेवाङ्गत्वमुच्यते। द्वितीयया कर्मत्वमवबोध्य तत्समभिव्याहृतस्याङ्गत्वमाक्षिप्यते। तथा च यदितरनिरपेक्षतया शेषत्वं बोधयति, अथवा अङ्गत्वघटकीभूतपरोद्देश्यत्व-कृतिकारकत्वान्यतरनिष्ठमुख्यविशेष्यताशालिनी शक्त्यधीना या उपस्थितिः तज्जनकः शब्दः **श्रुतिरिति** लक्षणं वक्तव्यम्। सा च श्रुतिः - **विधात्री, अभिधात्री विनियोक्त्रीचेति** त्रिविधा भवति। **विनियोगविधिः** त्रिविधं शब्दमपेक्षते-विधिबोधकश्शब्दः, विनियोग-बोधकश्शब्दः, विनियोगसम्बन्धिबोधकश्शब्दश्चेति। दध्ना जुहोतीत्यत्र शब्दचतुष्टयं-दधीतिप्रकृतिभागः, तदुत्तरस्तृतीयाप्रत्ययः, हुधातुः, तदुत्तराख्यातप्रत्ययश्चेति। तत्राख्यात-प्रत्ययो विधिबोधकश्शब्दः। तृतीयाप्रत्ययो विनियोगबोधकश्शब्दः। दधि-हु-शब्दो विनियोगसम्बन्धिबोधकौ शब्दौ। यस्याङ्गस्य यत्र प्रधाने विनियोगस्तौ द्वौ विनियोग प्रतियोग्यनुयोगिनौ विनियोगसंम्बन्धिनौ। दध्नो होमे विनियोगात् दधि विनियोगप्रतियोगि। होमो विनियोगानुयोगी। तत्र विधिबोधकश्शब्दो विधात्री श्रुतिः। विनियोगबोधकश्शब्दो विनियोक्त्री श्रुतिः। स्पष्टञ्चेदं (तन्त्रवार्तिके ३/१/१३)। साच विनियोक्त्री श्रुतिः विभक्ति-समानाभिधान-एकपदेति भेदात् त्रिविधा। तासु यावत्यो विभक्तयस्तद्रूपा श्रुतिः **विभक्तिरूपा विनियोक्त्री श्रुतिः**। अस्या उदाहरणम्-व्रीहिभिर्यजेत इति वाक्ये व्रीहिभिरिति श्रुतिः। दर्शपूर्णमासप्रकरणे आग्नेयवाक्येन प्राप्तस्य भागस्य अनुवादकं व्रीहिभिर्यजेत इत्यत्र यजति पदम्। तत्राख्यातोपात्तभावनायां प्रकृत्यर्थो यागः साध्यत्वेनान्वेति यागं भावयेदिति। ततश्चात्र यागस्य प्राधान्यत्वेन शेषित्वम्। व्रीहिपदोत्तरं श्रूयमाणा तृतीयाविभक्तिः

करणत्वं ब्रवीति। तच्च करणत्वं व्रीहिनिष्ठविधेयत्वपरिचायकम्। तत्सामानाधिकरण्येन अङ्गत्वं तिष्ठति। तथा च यागगतप्राधान्यनिरूपिताङ्गत्वं व्रीहिषु, व्रीहिगताङ्गत्व-निरूपिताङ्गित्वं यागे, इति व्रीहीणां यागाङ्गत्वं तृतीयाश्रुत्या बोध्यते। व्रीहीणां यागाङ्गत्वञ्च पुरोडाशप्रकृतितयेति तदेव प्रकृतिद्रव्यं व्रीहिभिर्यजेतेति वाक्येन विधीयते। एवं व्रीहीनवहन्ति, "ग्रहं सम्मार्ष्टि" इत्यादौ द्वितीयाविभक्तिश्रुतिः निरपेक्षैव व्रीह्यादीनां अवधातादि-जन्यफलशलित्वं बोधयन्ती अवधातादिशेषित्वं प्रतिपादयति। "मैत्रावरुणाय दण्डं प्रयच्छति" इत्यत्र सम्प्रदानचतुर्थीविभक्तिश्रुतिः, "सर्वेभ्यः कामेभ्यः दर्शपूर्णमासौ" इत्यत्र तादर्थ्यचतुर्थीश्रुतिः, "अरुणया पिङ्गाक्ष्या गवा सोमं क्रीणाति", इत्यत्र तृतीयाविभक्ति श्रुतिः, "यदाहवनीये जुहोति" इत्यत्र सप्तमीश्रुतिश्च उदाहरणानि।

**समानाभिधानरूपाया:** अथवा एकाभिधानरूपाया विनोयोक्त्रीश्रुत्या उदाहरणन्तु 'पशुना यजेत' इति वाक्यम्। तत्र अभिधीयत इत्यभिधानं शब्दः। समानञ्च तदभिधानञ्च समानाभिधानं तद्रूपेत्यर्थः। यत्र शेषशेषिणोरभिधानं शब्दः समानं भवति तत्र समानाभि धानश्रुतिरिति भावः। पशुना यजेत इत्यत्र तृतीयाविभक्तिश्रवणादेव तृतीयाप्रकृत्यर्थस्य पशोर्यागेन सम्बन्धः प्रतीयते। अतस्सा तृतीयाविभक्तिरूपा विनियोक्त्री श्रुतिः। तत्र च पशुरङ्गम्। यागः प्रधानम्। पशुना इत्यत्रैव च तृतीयैकवचनस्य ना इत्यस्य श्रवणमात्रेणैव तदर्थस्य पुंस्त्वस्य तदर्थेनैव करणेन सह सम्बन्धः प्रतीयते। अतो ना इति समानाभिधाना विनियोक्त्रीश्रुतिः। करणकारकस्य पुंस्त्वस्य च एकेनैव ना इति शब्देनाभिधानात्। तथा तत्तैव ना इत्येकवचनेन अभिहितस्य एकत्वस्य तदर्थेनैव करणेन सह सम्बन्धः श्रवणमात्रेणैव प्रतीयते। अतोऽपीयं समानाभिधानरूपा विनियोक्त्रीश्रुतिर्भवति। तत्र पुंस्त्वम् एकत्वञ्च अङ्गम्। करणकारकं प्रधानम्। इति।

**एकपदरूपाश्रुतिः**। यत्र एकमेव पदं शेषशेषिणो: बोधकं तत्र एकपदरूपाश्रुतिर्भवति। यथा-पशुना यजेत इत्यत्रैव यजेत इति पदश्रवणमात्रादेव तत्र आख्यातप्रत्ययाभिमतस्य एकत्वस्य तत्रत्यप्रकृत्यर्थयागेन सह सम्बन्धः प्रतीयते। अतो यजेत इतीयं एकपदरूपा विनियोक्त्री श्रुतिः। तत्र एकत्वमङ्गम्, यागः प्रधानम्। यागे एकत्वञ्च यागकर्तृगत

मारोपितम्। एकेनैव कर्त्राअयं याग:, न तु द्वाभ्याम्, त्र्यादिभिर्वा। यजेत इति एकवचनश्रवणेन अनेकेषां सहानधिकारसूचनात्। यजेत इत्यत्र यजतिपदात् प्रकृत्या धात्वर्थो याग:, प्रत्ययेन आख्यातेन निरुपपदस्य भावनापदस्य आर्थीभावनाबोधकत्वात् भावना च बोध्यते। एकत्वसंख्या च उपस्थिता भवति आख्यातोपस्थितयोस्संख्याभावनयो: अङ्गाङ्गिभाव:। संख्याअङ्गम्, भावना अङ्गी। तयो: प्रमाणं समानेन एकेनाभिधानेन त इति शब्देनोभयोरभिधीयमानत्वात् समानाभिधानश्रुति:। सैव संख्या एकपदश्रुत्या यागाङ्गं भूत्वा एकेनैव कर्त्रा अयं याग: कार्य:, न तु द्वाभ्यामिति बोधयति। उक्तञ्च **बालप्रकाशे**- तथा-पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते। समान प्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता।। तथा धात्वर्थकर्मत्वे पदश्रुत्योपपादिते। भावनाया विधिश्रुत्या पुरुषार्थस्य साध्यता। इति **तन्त्रवार्तिके** च। एवं यजेत स्वर्गकाम इत्यादौ एकपदश्रुत्या फलभावनायां करणत्वेन अन्वय:, एकत्वादिकञ्च बोध्यम्। अत्रेयं रूपरेखा

एतानि एकेन समानेन वा प्रत्ययेन निर्दिष्टानि सन्ति

अत्र पश्वङ्गमेकत्वम्, एककर्त्रकत्वञ्च एकपदश्रुत्या बोध्यते। अभिधात्र्यादिश्रुति-भेदाः **बालप्रकाशे** प्रकाशिताः। ते च अवान्तरभेदाः विस्तृता इति नेह प्रतन्यन्ते। **लिङ्ग प्रमाणम्**-सामर्थ्यं सर्व भावानामिति लिङ्गस्य लक्षणम्। समर्थस्य भावः सामर्थ्यम्। स च न केवलं शब्दे एव, किन्तु द्रव्यगुणादयः सर्व एव पदार्थाः यथासम्भवं लिङ्गप्रभावेन क्वचित् लिङ्गिनि विनियुक्ता भवन्ति। ततश्च न केवलं शब्दसामर्थ्यमेव लिङ्गम्। शब्दभिन्नस्यापि अङ्गत्वेन विनियोगस्यावश्यकत्वात्। यथा प्ररोचना अङ्गतया उपयुज्यते। अर्थवादवाक्यबोधितप्राशस्त्यज्ञानेन जायमाना प्ररोचना प्रेरणायाः पोषकत्वेन अङ्गं भवति। **प्ररोचना** च प्रीतिरूपो मनोवृत्तिविशेषः। एवं मन्त्रार्थज्ञानस्य कर्मानुष्ठाने उपयोगो भवतीति तत्र अर्थज्ञानस्य कर्मानुष्ठाने उपयोगो भवतीति तत्र अर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। ततश्च शब्दगतं अर्थगतञ्च सामर्थ्यं लिङ्गम्, योग्यतापरर्यायं सामर्थ्यं लिङ्गम्, अर्थप्रकाशनसामर्थ्यं लिङ्गम्, पदानामर्थप्रकाशनसामर्थ्यं लिङ्गम्, सर्वपदार्थगतसामर्थ्यं लिङ्गम्, सर्वभावगता शक्तिर्लिङ्गमिति वा लक्षणं वक्तव्यम्। अस्योदाहरणन्तु बर्हिर्देवसदनं दामि इत्यस्य लवनाङ्गत्वम्। तत्र **बर्हिः** दर्भमुष्टिः। एकत्र संधीभूतः मुष्टिपरिमिता अनेके दर्भा इति यावत्। **दर्भाश्च** कुशकाशतृणश्यामाककुथादयो दशविधाः। न त्वन्ये उलपवीरुधादयः। **सदनं** स्थानम्। दामीत्यत्र दाप् लवन इति धातुः। लवनं धेदनम्। पुरोडाशस्थानभूतं बर्हिः छिनद्मि इत्यर्थः। स च मन्त्रः लवनरुपमर्थं प्रकाशयितुं समर्थ इति तेनैव लिङ्गप्रमाणेन बर्हिर्देवसदनं दामीति बर्हिर्लुनाति इति विनियोजिकाश्रुतिः कल्प्यते। ततश्च दर्भमुष्टिच्छेदने त्वां दामि-लुनामि इत्यर्थः प्रतीयते। अतश्च बर्हिर्लवने लिङ्गेन अयं मन्त्रो विनियुज्यते। एवं उरु प्रथस्व इति मन्त्रः पुरोडाश प्रथने, देवताप्रकाशकाः अग्निर्मूर्धादयो ये मन्त्राः तेऽपि लिङ्गेनैव प्रमाणेन देवताप्रकाशने विनियुज्यन्ते, तदिदं लिङ्गं शब्दगतमर्थगतञ्चेति द्विविधम्। शब्दगतलिङ्गस्योदाहरणं बर्हिदेवसदनं दामीति पूर्वमुक्तम्। अर्थगतस्योदाहरणन्तु स्रुवेणावद्यति, स्वधितिनावद्यति, हस्तेनावद्यतीत्यादि वाक्यम्। सबिलपात्रविशेषः **स्रुव**शब्देनोच्यते। तस्य च योग्यतया द्रवद्रव्य-पदार्थधारणसामर्थ्यमवगम्यते। अत्रार्थगतसामर्थ्यमेव लिङ्गम्। तथाचात्र लिङ्ग प्रमाणेन

स्रुवस्य आज्यसांनाय्यादिद्रवद्रव्यावदानाङ्गत्वं सिध्यति। एवं स्वधितिना संहतं मांसादिकमवद्येत्, हस्तेन चरुपुरोडाशादिकमवद्येदिति विनियोगः क्रियते। पुनश्च सामान्यसम्बन्धबोधकप्रमाणान्तरनिपेक्षम्, सामान्यसम्बन्धवोधकप्रमाणान्तरापेक्षञ्चेति लिङ्गं द्विविधम्। सामान्यसम्बन्धो नाम सामान्येन अङ्गिना सह योऽङ्गस्य सम्बन्धः स उच्यते। तस्यैवाङ्गस्य योऽङ्गिविशेषेण सह सम्बन्धः स विशेषसम्बन्धः। यथा स्रुवेण अवद्यति तृतीयाश्रुत्यङ्गभूतस्य स्रुवस्य योऽङ्गिभूतेन यस्य कस्यापि हविषोऽवदानेन सह सम्बन्धो बोधितस्स तत्र सामान्यसम्बन्धः। तत्रैव सबिलपात्रविशेषस्य स्रुवस्य योग्यतां दृष्ट्वा लिङ्गप्रमाणेन यस्तस्य द्रवद्रव्यस्य हविर्विशेषस्य अवदानेन सह सम्बन्धो बोध्यते स विशेषसम्बन्धः। अत्र च लिङ्गप्रमाणेन जायमानो यो विशेषसम्बन्धः स सामान्य-सम्बन्धमपेक्षते। श्रुत्या बोधितस्य सामान्यसम्बन्धस्यानवगमे हि स्रुवस्य द्रवद् द्रव्यहविर्धारणयोग्यता विद्यमानापि किं कुर्यात्? सबिललौकिकपात्रान्तरवत्। यज्ञार्थं निमन्त्रितेषु विप्रेषु निमन्त्रणेन तेषां यज्ञसम्बन्धावगमे ततस्तेषु योग्यताबलात् कश्चित् ब्रह्मत्वेन कश्चिद होतृत्वेन कश्चिद् अध्वर्युत्वेन कश्चिद् उद्गातृत्वेन च व्रियते। तत्र अनिमन्त्रितस्य तु योग्यता विद्यमानापि अकिञ्चित्कारिण्येव। निमन्त्रणाभावेन अनुपस्थितस्य बहिनिष्ठस्य सामान्यतो यज्ञसम्बन्धानवगमात्। यथा अर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्, अर्थज्ञानं विना कर्मानुष्ठानासम्भवात्। एवं यं पदार्थं विना यस्य वस्तुनः कारणान्तरेणापि स्वरूपलाभः तादृशवस्त्वङ्गत्वं तस्य पदार्थस्य लिङ्गप्रमाणेन यद्यपि साधयितुं शक्यम् तथापि तत्किमर्थं साध्यते। अङ्गिभूतस्य वस्तुनोऽन्यथासम्भवात्। तेन पदार्थेन कारणान्तरेण वा वस्तुस्वरूपनिष्पत्तौ अविशेषात्। अतस्तत्र लिङ्गप्रमाणस्य सार्थक्याय इत्थं वक्तव्यं भवति यत् कारणान्तरतो लभ्यं यादृशं वस्तुस्वरूपं तदपेक्षया लिङ्गप्रमाणेन कल्पितात् अङ्गात् लभ्यमाने वस्तुस्वरूपे कश्चिद् विशेषोऽस्ति इति। स च विशेषः प्रमाणान्तर-साध्यः। तदेव सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं द्वितीयं लिङ्गं प्रमाणमुच्यते। यथा पूर्वोक्तोदाहरणे वर्हिर्देवसदनं दामीति मन्त्रस्य लवनाङ्गत्वं बोध्यते। निर्वापस्य हि विनापि मन्त्रं उपायान्तरेण स्मृत्वा कर्तुं शक्यत्वात् न मन्त्रो निर्वापस्वरूपार्थस्सम्भवति, किन्तु

अपूर्वसाधनीभूतनिर्वापप्रकाशनार्थ एव। तादृशनिर्वापप्रकाशनार्थत्वं च न सामर्थ्यात् केवलात् लभ्यते। सामर्थ्यस्य निर्वापप्रकाशनमात्रे सत्वात् ततश्चावश्यं प्रकरणादि सामान्यसम्बन्धबोधकप्रमाणं स्वीकर्तव्यम्, तथा च दर्शपूर्णमासप्रकरणेन तस्य मन्त्रस्य पाठादेवानेन मन्त्रेण दर्शपूर्णमासापूर्वसम्बन्धि किञ्चित् प्रकाश्यत इत्यवगम्यते। अन्यथा तत्प्रकरणपाठस्य वैध्यर्थ्यापत्तेः। किं तद्दर्शपूर्णमासापूर्वसम्बन्धि प्राकाश्यमित्याकाङ्क्षायां निर्वापप्रकाशनसामर्थ्यात् पुरोडाशनिर्वाप इत्यवगम्यते। निर्वापश्च पुरोडाशसंस्कारद्वारा अपूर्वसम्बन्धीति लिङ्गात् मन्त्रस्य निर्वापार्थत्वे सति न तस्यानर्थाक्यापत्तिः। ततश्च "अग्नये जुष्टं निर्वपामि इति मन्त्रस्य प्रकरणात् दर्शपूर्णमाससम्बन्धितया अवगतस्य निर्वापप्रकाशनसामर्थ्यरूपात् लिङ्गात् निर्वापाङ्गत्वमिति ज्ञायते।

**वाक्यप्रमाणम्**—समभिव्याहारो वाक्यमिति लक्षणम्। समभिव्याहारः सामीप्यम्। तच्च शब्दयोर्वाक्ययो र्वा उच्चारणक्रियाद्वारा संभवति। शेषशेषिणौ अङ्गाङ्गिनौ यथा व्रीहीन् प्रोक्षतीत्यत्र व्रीहीनिति द्वितीयाश्रुत्या व्रीहीणां साध्यत्वावगमेन तेषां अङ्गित्वम्, साधनस्य च प्रोक्षणस्य अङ्गत्वं ज्ञायते, प्रोक्षणादनन्तरमेव अपूर्वसाधनत्वधर्मविशिष्टा व्रीहय अङ्गभूता भवन्ति तथा यत्र यत्र साध्यत्वादिबोधिका द्वितीयादिश्रुतिर्नास्ति तत्र केवलं तेषां सहोच्चारणमात्रेण अङ्गाङ्गिभावोऽवगम्यते। ततश्च पदसंघातमात्रं वाक्यम्, साकाङ्क्षं पदद्वयं वाक्यम्, अङ्गत्वप्रतिपादकपदासममिव्याहृतपदसमूहः, पदान्तरसमभिव्याहारः, अङ्गत्वबोधकश्रुतिराहित्येन अङ्गाङ्गिभावयोग्यार्थबोधकपदयो स्सहोच्चारणम्, अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतर विषयकशक्यत्यनधीन-बोधप्रयोजकपदद्वयसमभिव्याहारः **वाक्यमिति** लक्षणानि भवन्ति। "यस्य पर्णमयी जुहू र्भवति न स पापं श्लोकं शृणोति" इति वाक्यमुदाहरणम्। अत्र **भाष्यम्**— अयं भूलोकः प्रथमः, द्वितीयोऽन्तरिक्षलोकः, तृतीयो द्युलोकः। इतिभूलोकादारभ्य तृतीये द्युलोके पूर्वं सोम आसीत्। गायत्री तं सोमं समाहरत्। तस्य आह्रियमाणस्य सोमस्य एकं पर्णं भूमौ पतित्वा पलाशवृक्षोऽभवत्। पर्णजन्यत्वात् तस्य वृक्षस्य **पर्णनाम** संपन्नम्। तादृशेन पलाशवृक्षेण जुहूं संपादयेत्। तथा सति तथा जुह्वा हूयमाना आहूतयः सर्वाः सोमसम्बन्धिन्यो

भवन्ति। देवाश्च ता आहुतीः प्रीत्या सेवन्ते। यदा च देवाः ब्रह्मतत्त्वविषये परस्परं संवादं रहसि कृतवन्तः तदानीं पर्णवृक्षाभिमानी देवः तद्वृक्षच्छायायामुपविष्टानां देवानां वचनमशृणोत्। ततश्च तस्य वृक्षस्य **सुश्रवा** इति नाम संपन्नम्। यस्मादयं वृक्षः सुश्रवाः तस्मात् जुह्वास्तन्मयत्वे यजमानः शोभनं स्तुतिरूपमेव वाक्यं सर्वदा शृणोति न तु पापं निन्दारूपं श्लोकं-शृणोतीति। एवञ्च पलाशवृक्षविकारः **जुहूः** ''पाणिमात्रपुष्करा त्वग्बिला हंसमुखप्रसेकाः'' इति लक्षितं यज्ञसम्बन्धिपात्रम्। अत्रोदृहृतवाक्ये पर्णपदस्य जुहूपदस्य च सामीप्यम्। तेन च पर्णवृक्षसम्बन्धिकाष्ठस्य जुह्वाकारप्राप्तिसामर्थ्यं बोध्यते। तादृश-सामर्थ्येन च पर्णकाष्ठेन जुहूं भावयेदिति द्वितीयाश्रुतिः कल्पते। तथा च पर्णतया जुह्वङ्गत्वं बोध्यते। एवं ''खादिरो यूपो भवति'' इति वाक्ये कर्मत्वादिबोधकं द्वितायादिकं न श्रूयते। तत्र **यूपो** नाम-छेदन प्रोक्षणादिजन्यदृष्टादृष्टरूपाः काष्ठे वर्तमानाः यूपशब्दाभिधेयाः। तावत्संस्कारविशिष्टं काष्ठं यूपशब्देन उच्यते। अत्र यूपखादिरत्वयोस्सहोच्चारणमात्रं विद्यते। तेन यूपसम्पादन-सामर्थ्यलिङ्गं, खादिरत्वेन यूपं भावयेदिति श्रुतिञ्च कल्पयित्वा विनियोगः क्रियते। एवं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि'' इत्यत्र समवेतार्थतया चरमभागस्य लिङ्गान्निर्वापे विनियोगप्रतीतौ तदेकवाक्यतापन्नस्य देवस्येत्यादेस्समस्तस्यैव विनियोगः प्रतीयते। एवं ''इषेत्वेति छिनत्ति'' अत्र छेदनाङ्गत्वेन इषेत्वेति मन्त्रो वाक्येन विधीयते। अग्नये त्वा जुष्टमित्यत्रैव अग्नये त्वा जुष्टमित्यादीनां पदानां निर्वपामीत्यनेनैकवाक्यतापन्नत्वात् निर्वापाङ्गत्वम्। एवं धेनुर्दक्षिणा उच्चैर्ऋचा क्रियते प्रयाजशेषेण हवींष्यभिघारयति इत्यत्र धेनुर्दक्षिणादिपद-द्वयसमभिव्याहारः। धेनुर्दक्षिणा इत्यत्र धेनुपदोत्तरप्रथमायाः करणत्वे लक्षणा। दक्षिणापदस्य च आनति-साधनद्रव्यवाचिनः कार्यभूताननतिनिष्ठकर्मत्वे लक्षणा। ततश्च धेन्वा आनतिं भावयेदिति वाक्यार्थः। एवमुच्चैरित्यत्र लुप्तविभक्त्यर्थे करणत्वे प्रातिपदिकस्य लक्षणा। एव प्रयाजशेषेण हवींव्यभिधारयति इत्यत्र प्रयाजशेषं हविष्षु प्रक्षिपेदित्यर्थात् तृतीयादेः कर्मत्वादिलाक्षणिकत्वं ज्ञायते। एवं ज्योतिष्टोमप्रकरणे ''प्रजापतिरकामयत प्रजाः सृजेयेति। स तपोऽतप्यत। तस्मात्तेपनात् त्रयो देवा अजायन्त अग्निर्वायुरादित्यः। ते

तपोऽतप्यन्त। तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त। अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्या-त्सामवेदः इत्युपक्रम्य उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना'' इति श्रुतेन वाक्येन विधीयमानमुच्चैस्त्वादिकं किम् ऋगादिमन्त्रकार्योद्देशेन विधीयते, उत ऋग्वेदादि-विहितकर्मोद्देशेन? इति संशयः। तदर्थमुपसंहारस्थऋगादिपदानुरोधेन उपक्रमस्थवेदपदं वेदैकदेशभूतमन्त्रलाक्षणिकम्? उत उपक्रमस्थवेदपदानुरोधेन उपसंहारस्थऋगादिपदं ऋग्वेदादिलाक्षणिकमिति विचारणीयम्। अत्र वेदत्वं मन्त्रब्राह्मणसमुदाया-त्मकग्रन्थविशेषपर्याप्तमखण्डोपाधिरूपम्। **ऋक्त्वञ्च** पादव्यस्थापन्नमन्त्रत्वम्। **सामत्वं** मन्त्रत्वसमानधिकरणगीतित्वम्। **यजुष्ट्वं** ऋक्सामभिन्नमन्त्रत्वम्। इत्थं च ऋगादिशब्दानां विध्युद्देशगतत्वेन प्राबल्यादुपक्रमस्थार्थवादगतवेदशब्दस्य तदनुरोधेन वेदैकदेशे लक्षणा। अन्यथा विधिस्तुत्योरेकविषयत्वानुपपत्तिप्रसंगात्। तथाच ऋचा ऋङ्मन्त्रेण यत् क्रियते उत्पाद्यते तदुच्चैरित्यर्थात् ऋगादिमन्त्रजन्यार्थप्रकाशनाद्युद्देशेन उच्चैस्त्वादिकं विधीयते। ततश्च "आनर्थ्यात् तदङ्गेषु" इति न्यायेन अर्थप्रकाशनादिजनकऋगादिमन्त्रेषु उच्चैस्त्वादिकं पर्यवस्यतीति प्राप्ते उपक्रमे वेदस्य स्तूयमानतया तत्रावश्यं उद्देश्यत्वं विधेयत्वं वा वाक्ये विवक्षितमिति प्रतीयते। तद्दशायां उपसंहारस्थऋगादिपद-ज्ञानरूपविरोधिनोऽसंजातत्वात्। ततश्च उपसंहारे उच्चैस्त्वस्य विधेयस्य लाभात् परिशेषात् वेदस्योद्देश्यसमर्पकऋगादिपदानां वेदतात्पर्यकत्वावश्यंभावात् तदनुरोधेन ऋगादि पदानां ऋग्वेदादौ लक्षणा। ततश्च ऋचा-ऋग्वेदेन यत् क्रियते विधीयते तदुच्चैरित्येवं ऋग्वेदविहितकर्मोद्देशेन उच्चैस्त्वादिविधाने उक्तन्यायेन तदङ्गभूतमन्त्रेष्ववतारः। एवं उपक्रमोपसंहारकवाक्यताबलेन निर्णयात् वाक्येन विनियोगोऽयम्। उक्तञ्चैतत् **तृतीयाध्यायतृतीय पादारम्भे।**

**प्रकरणप्रमाणम्**—द्वयोः कयोश्चित् पदार्थयोः परस्परस्य या आकाङ्क्षा सा प्रकरणशब्देनोच्यते। अन्यतराकाङ्क्षापेक्षया उभयाकाङ्क्षया जायमानो योगः द्रढीयान् भवति। अन्धस्य पङ्गोश्च जायमानो योगो यथा लोके द्रढीयान् चिरस्थायी च दृश्यते तथैव वेदे अङ्गाङ्गिनोराकाङ्क्षा द्रढीयसी वाक्यार्थानुकूला च भवति। ततश्च अङ्गाङ्गिनो

रुभयो: परस्परमाकाङ्क्षा प्रकरणमिति, एकभावनयोपात्तानां केन कथम् किमित्याकाङ्क्षाणां त्रयाणामंशानां परस्परं उपकार्योपकारित्वं यस्य तत् प्रकरणम्, इतिकर्तव्यताकाङ्क्षा प्रकरणमिति लक्षणानि। तत्र इतिकर्तव्यतात्वञ्च करणानुग्राहकत्वम्। सर्वत्र हि अशक्तस्य करणत्वायोगात् करणनिष्ठा शक्तिरस्तीति निर्विवादम्। सा च करणतावच्छेदिका करणतात्वरूपा वा। तथा च करणनुग्राहकत्वरूपव्यापाराकाङ्क्षा करणनिष्ठशक्तिजनकव्यापाराकाङ्क्षा प्रकरणमिति सिद्धम्। सन्निहितयो: फलवदफलयो: कर्मणो: परस्परमुपकार्योपकारकाकाङ्क्षा प्रकरणमिति फलितम्। दर्शपूर्णमासयो: प्रयाजादीनाञ्च परस्परं उपकार्योपकाराकाङ्क्षया अङ्गाङ्गित्वसिद्धिरुदाहरणम्। तथाहि-समिधो यजति। तनूनपातं यजति। इडो यजति। बर्हिर्यजति। स्वाहाकारं यजति। एते **पञ्च प्रयाजा:**। एतेषां मन्त्रास्तु - समिधो अग्न आज्यस्य वियन्तु। तनूनपात् अग्न आज्यस्य वेतु। इडो अग्न आज्यस्य वियन्तु। बर्हिरग्न आज्यस्य वेतु। स्वाहाग्निम्। स्वाहा सोमम्। स्वाहाग्निम्। स्वाहा प्रजापतिम्। स्वाहा अग्नीषोमौ। स्वाहेन्द्राग्नी। स्वाहेन्द्रम्। स्वाहा महेन्द्रम्। स्वाहा देवाँ आज्यपान्। स्वाहाग्निँ होत्राजजुषाणा:। अग्न आज्यस्य वियन्तु। इति। एते मन्त्रा: **सायणभाष्ये** द्वितीयाष्टके षष्ठप्रपाठके प्रथमानुवाके प्रसङ्गात् व्याख्याता:। **तैत्तरीयसंहितागता**नामेतेषां वाक्यानामयमर्थ: - समिधोऽग्ने आज्यस्य वियन्तु इति प्रथमम्। तनूनपाद अग्ने आज्यस्य वेत्वियादि द्वितीयम्। हे अग्ने समिध्यमानास्तव मूर्तय: आज्यस्य वियन्तु हूयमानमिदं आज्यं अश्नन्तु। तनूं शरीरं न पातयति न नाशयति किन्तु पालयति इति **तनूनपात्**। हे अग्ने द्वितीया तनूनपात् तव मूर्तिराज्यं पिबतु हे अग्ने इड ईड्या: स्तुत्यास्तव मूर्तय आज्यं पिबन्तु। बृंहणात् **बर्हि:**। हे अग्ने फलं बृहयन्ती तव मूर्तिराज्यं पिबतु। अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतमस्त्विति क्रमेण द्रष्टव्यम्। तथा च पूर्वोक्तै: समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति, इति पञ्चभिर्वाक्यैर्विहिता: पञ्च यागा प्रयाजा: कथ्यन्ते। समिदादिवाक्येषु समिदादिपदानि नामधेयानीति पूर्वमुक्तम्। अत्र सर्वत्र वाक्ये फलविशेषो न श्रूयते। ततश्च समिदाद्यागेन किम् भावयेदिति भवति उपकार्याकाङ्क्षा। एवं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इति वाक्येन स्वर्गार्थं दर्शपूर्णमासयागयोर्विधि:

श्रूयते। दर्शपूर्णमासशब्दौ हि काल विशेषवाचकौ। **मास इति** चन्द्रमस आख्या। पूर्णो-मासः यस्मिन् काले स पूर्णमासः। **दर्शः सूर्येन्दुसंगमः**। तस्मिन् काले विहितयोः दर्शपूर्णमासयोः उपकारकाङ्क्षा अस्ति। स्वर्गसंपादने मदुपकारकं किमिति। इयमेव कथम्भावाकाङ्क्षा इत्युच्यते। आभ्यां स्वर्ग सम्भावयेदित्युक्ते कथमित्याकाङ्क्षोदयात्। कथम्भावाकाङ्क्षा, इत्थम्भावाकाङ्क्षा इतिकर्तव्यताकाङ्क्षा उपकारकाङ्क्षा अनुग्रहाकाङ्क्षा इतीमे पर्यायाः। एवं च अङ्गवाक्ये उपकार्याकाङ्क्षायाः प्रधानवाक्ये उपकारकाङ्क्षायाः सत्वात् अस्त्युभयाकाङ्क्षा। अनयोः यः सम्बन्धः स प्रकरणप्रमाणेन जायते। ततश्च प्रयाजादिभिः दर्शपूर्णमासौ उपकुर्यादिति विनियोगः क्रियते।

तदिदं प्रकरणं महाप्रकरणम् अवान्तरप्रकरणञ्चेति द्विविधम्। तत्र प्रधानेतिकर्त-व्यताकाङ्क्षा **महाप्रकरणम्**। यस्यां भावनायां फलं मुख्यं भवति तत्साधनेतिकर्तव्यताङ्क्षा ययोर्द्वयोस्तत्र प्रकरणबलात् एकवाक्यता अङ्गाङ्गिभावश्च ज्ञायते। ततश्च मुख्य-भावनासम्बन्धि, फलभावनासम्बन्धि, वा प्रकरणं **महाप्रकरणमिति** तस्य लक्षणम्। अस्योदाहरणम्-समिधो यजतीत्यादि वाक्यम्। तेषाञ्च फलभावात् अस्ति उपकार्याकाङ्क्षा। क्रतोरप्यस्ति कथमित्युपकारकाङ्क्षा। एतेनोभयोः साकाङ्क्षत्वादेकवाक्यत्वम्। तथाहि-यागेन स्वर्गं कुर्यात् फलवाक्यार्थः तत्र न ज्ञायते यागेन हि केन प्रकारेण स्वर्गः कर्तव्य इति प्रकारकाङ्क्षा। ततश्चोपकार्याकाङ्क्षोपेतात् समिधो यजति इत्यादि वचनादेवं ज्ञायते। अयमस्य व्यापारो येन यागात् स्वर्गो भवतीति। सम्भवति च समिदादि क्रियाणां यागोपकारकत्वमदृष्टद्वारकम्। अवधातादिसन्निपत्योपकरकाणां दृष्टद्वारकत्वात्। ततश्च प्रकाराकाङ्क्षतावशात् फलाकाङ्क्षं प्रयाजादि प्रधानवाक्यस्य अङ्गतां प्राप्नोति।

**अवान्तरप्रकरणम्**। अङ्गेतिकर्तव्यताकाङ्क्षा अवान्तरप्रकरणम्। अङ्गविधायक-वाक्येषु आख्यातप्रतिपद्या या अङ्गभावना तत्सम्बन्धि प्रकरणम्, महाप्रकरणान्तराले यदङ्गभावनायाः प्रकरणम्, इति वा अवान्तर प्रकरणस्य लक्षणम्। उदाहरणन्तु-दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयमाणं अभिक्रामं जुहोतीति वाक्यं अवान्तरप्रकरणबलात् प्रयाजहोमाङ्गतां प्राप्नोति। तथाहि-पञ्च प्रयाजान् विधाय केचन विशेषाःश्रुताः। तत्र

अतिहायेडोपबर्हिः प्रतिसमानयते, जुह्वामौपभृतं प्रयाजशेषेण हर्वींगँष्यभिधारयति इति वचनद्वयमध्ये अभिक्रामं जुहोत्यभिजित्यै इति श्रूयते। अध्वर्युः प्रयाजानुष्ठानावसरे किञ्चिदभिक्रम्य अभिक्रम्य आहवनीयदेशं प्रति पदनिक्षेपणं कुर्वन् अदूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहोति इत्यर्थः। एवं प्रतिप्रयाजं उत्तरोत्तरं आहवनीय-समीपदेशगमनं यत् तदेत**दभिक्रमणम्**। तस्य पदनिक्षेपणरूपव्यापारस्याभिक्रमणस्य प्रयाजाङ्गत्वमवान्तरप्रकरणात्। समिधो यजति, तनूनजातं यजति इत्यादौ आख्याता-पात्तभावनायाः मुख्यभावनावत् किं केन कथमित्याकाङ्क्षाः जायन्ते। तत्र साध्याकाङ्क्षायां प्रधानयागोपकारः, साधनाकाङ्क्षायां धात्वर्थश्चान्वयं प्राप्नुतः समिद्यागेन तनूनपाद्यागेन प्रकृतयागोपकारं भावयेदिति। कथम्भावाकाङ्क्षायाम् अभिक्रामणादयोऽन्वियन्ति। अभिक्रमणादिभिरूपकृतैः प्रयाजैः प्रकृतयागोपकारं कुर्यादिति। अत्र यद्यपि दर्शपूर्णमासप्रकरणे निर्विशेषं सर्वाणि अङ्गानि समाम्नायन्ते-यथा प्रयाजादयः तथैव अभिक्रमणादि। परन्तु प्रयाजादीनां साक्षात् दर्शपूर्णमासाङ्गत्वम्, अभिक्रमणादीनान्तु न दर्शपूर्णमासाङ्गत्वम् किन्तु प्रयाजाङ्गत्वम्-अङ्गाङ्गत्वम् इति संशयः स्यात् तथापि सन्दंशबलात् प्रयाजाङ्गत्वमेव न दर्शाङ्गत्वं अभिक्रमणादीनामिति भवति अवान्तर-प्रकरणोदाहरणत्वम्। तत्र **सन्दंशो** नाम एकमङ्गमनूद्य विहितयोर्द्वयोः मध्ये विहितत्वं सन्दशत्वम्। ततश्च एकाङ्गानुवादेन विधीयमानयोः अङ्गयोर्मध्ये विहितत्वमिति तस्य लक्षणम्। एवञ्च अतिहायेडोपबर्हिः प्रतिसमानयते, जुह्वामौपभृतं जुहोति, इति वचनद्वयमध्ये, अभिक्रामं जुहोति, प्रयाजानिष्ट्वा हवींष्यमिघारयतीति हविरभिघारणंश्रुतम्। अतः प्रयाजाङ्गमध्यपतितत्वात् अभिक्रमणं प्रयाजाङ्गसन्दष्टत्वात् प्रयाजाङ्गमेव न तु प्रधानदर्श-पूर्णाङ्गमिति निश्चीयते। महाप्रकरणापेक्षया अवान्तरप्रकरणस्य बलीयस्त्वात्। ततश्च प्रयाजादयः महाप्रकरणबलात् दर्शपूर्णमासाङ्गानि, अभिक्रमणादि अवन्तरप्रकरणबलात् प्रयाजाङ्गमिति सिद्धम्।

**स्थानप्रमाणम्**-स्थानं क्रमश्चेति समानार्थकौ शब्दौ। तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षण इति ३/३/१२ तन्त्रवार्तिके दृश्यते। समानदेशपठितयोः अङ्गाङ्गिभाव

योग्ययो: द्वयो: पदार्थयो: समानदेशपठनादेव मिथोऽङ्गाङ्गिभावस्स्थानप्रमाणात् भवति। ततश्च संनिधि:, समानदेशत्वम्, इतिकर्तव्यतात्वेन सम्बन्धायोग्ययो: द्वयोस्संनिधि:, संनिधिविशेषत्वम, देशसामान्यम्, इति स्थानलक्षणानि दृश्यन्ते। पुरोडाशसम्बन्धि-अर्थप्रतिपादके पौरोडशिककाण्डे सांनाय्यपात्रसंनिधौ "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति पात्रसंशोधनमन्त्र: पठ्यते। स च संनिधिरूपस्थानप्रमाणेन कुम्भीशाखाप-वित्रादिसांन्नाय्यपात्रशोधने विनियुज्यते, न तु पुरोडाशादिपात्रसंशोधने। तत्र **सांन्नाय्यं** नाम दधिपयसी गृह्येते। तत्र देशसामान्यं नाम समानदेशत्वम्। तत्र द्वयो: पाठस्थानं संख्यया तुल्यं चेत् अनुवाकादिभेदेऽपि तयो: समानदेशत्वं भवति। किञ्च एकस्मिन् अनुवाकादौ द्वयो: पाठश्चेत् तयो: समानदेशत्वं भवति। तदिदं पाठदेशसामान्यमित्युच्यते। द्वयोरेकस्मिन् अनुवाकादौ पाठाभावेऽपि तथा संख्यया तुल्ये स्थाने पाठाभावेऽपि यदि तयोर्द्वयोरनुष्ठानं केनचिद्धेतुना एकस्मिन्नेव दिनादौ कर्तव्यतया प्राप्तश्चेत् तयोरपि समानदेशत्वं भवति। अत्र **देश**पदेन अनुष्ठानकालो गृह्यते। पाठदेशशब्देन उच्चारणकालो गृह्यते न तु भूम्यादि:। "सूचितञ्चेदं- "पाठानुष्ठानसादेश्याद् विनियोगस्य कारण" मिति तन्त्रवार्तिके (३/३/१२)। पाठदेशसामान्यञ्च यथासंख्यपाठ: संनिधिपाठश्चेति द्विविधम्। त्रितयमपीदं-उभयाकाङ्क्षा-अन्यतरकङ्क्षाचेति द्विविधम्।

उदाहरणानि-तेषु यथासंख्यपाठस्योदाहरणम्-मैत्रायणीयशाखायां काम्येष्टिकाण्डे ऐन्द्राग्नमेकादशकपालं निर्वपेत् इत्यादय इष्टय: क्रमेणोक्ता:। तत्रैव इन्द्राग्नी रोचना दिव: इत्यादय: याज्यामन्त्रा: -काम्येष्टि याज्यापुरोनुवाक्यामन्त्राश्चोक्ता:। तत्र प्रथमं मन्त्रयुग्मं

प्रथमेष्टौ, द्वितीयं मन्त्रयुग्मं द्वितीयेष्टाविति क्रमेण मन्त्राणां विनियोगः यथासंख्य-पाठस्थानस्योदाहरणम्। ततश्च ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् स्पर्धमानः इति विहितानामिष्टीनां उभावामिन्द्राग्नी, इन्द्राग्नी नवतिं पुर इत्यादीनि याज्यापुरोवाक्यायुगलानि प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति क्रमेण अङ्गतां यजन्ते। तत्र अग्नयेऽनुब्रूहि इत्यध्वर्युप्रैषसमनन्तरं होत्रा पठ्यमानो मन्त्र **पुरोनुवाक्या**, यज इति तत्प्रैषानन्तरं होत्रा पठ्यमानो मन्त्रः **याज्या** इति उच्यते, एवं दर्शपूर्णमासयोराध्वर्यवे काण्डे आग्नेय-उपांशुयाज-अग्नीषोमीययागाः क्रमेणाम्नाताः। याजमाने च काण्डे आग्नेयादिविषयास्तेनैव क्रमेण मन्त्रा आम्नाताः-अग्नेरहं देवयज्यया अन्नादो भूयासम्, दब्धिरस्य दब्धो भूयासममुं दभेयम्, अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्'' इति। तत्राद्यन्तयोरग्नेयाग्नीषोमीययोः कर्मणोराद्यन्तौ मन्त्रौ, मध्यमस्य चोपांशुयाजस्य कर्मणो मध्यमः दब्धिरस्यदब्धो भूयासममुं दभेयमिति मन्त्रोऽङ्गम्, तस्य च ब्राह्मणवाक्यमेवं आम्नायते-''एतयावै दब्ध्या देवा असुरानदभ्नुवन्। तथैव भ्रातृव्यं दभ्नोति'' इति। **दब्धिर्**नाम घातकायुधविशेषः। ततश्च यथाक्रमेण पठितेषु मन्त्रेषु मन्त्रद्वयस्य आग्नेयवैष्णवयागसम्बन्धे लिङ्गात् प्रतीतेऽपि नोक्तमन्त्रस्य विनियोजकान्तरमस्तीति यथासंख्यपाठादेव उपांशुयागे विनियोगसिद्धिः। कर्मणां मन्त्राणाञ्च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रस्समाम्नायते स तस्मिन्नवगते तत्क्रमेऽपि तिष्ठते तत्क्रमोपस्थितौ च स मन्त्र इति तस्य मन्त्रस्य कैमर्थ्याकाङ्क्षायां तत्कर्मार्थत्वं कल्प्यते यथासंख्यपाठादेवेति **न्यायमालायां** स्पष्टम्। संनिधिपाठस्योदाहरणन्तु सांनाय्य-पात्रशोधनविधौ समाम्नातस्य शुन्धध्वम्'' इत्यादिमन्त्रस्य तदङ्गत्वम्। जलपूरिते प्रोक्षणीपात्रे उदगग्राभ्यां पवित्राभ्यां उत्पवनं विधाय ततस्तेन जलेन शुद्धध्वमित्यादिमन्त्रेण त्रिःपात्र प्रोक्षणं **शुन्धनं** विधीयते। तच्च शुन्धनं शोधनीयेषु पात्रेषु वस्तुषु वा साधारणं भासते। तत्र सान्नाय्यपात्राणि कुम्भीशाखापवित्रादीनि अनन्तरेषु ''मातरिश्वनः'' तैत्तरीयसंहिता १-१-३) इत्यादिमन्त्रेषु अवभासन्त इति संनिधिना तत्पात्रप्रोक्षणे शुन्धध्वमिति मन्त्रो विनियुज्यते। आमनहोमानां सांग्रहणीष्टौ विनियोगश्च संनिधिपाठस्योदाहरणान्तरम्।

तैत्तरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके नवमेऽनुवाके सांग्रहणीष्टिः विहिता। मनसा परस्परम् ऐकमत्येन सम्यक् स्वीकारः **संग्रहणम्**। तत् यस्यामिष्टौ अस्ति सा **सांग्रहणी**। अनया इष्ट्या यजमानस्य कुले भवाः, तद्ग्रामस्थाश्च प्रौढाः वालाः सर्वे पुरुषाः सर्वाः स्त्रियश्च वशे वर्तन्त इति श्रूयते। तस्यानुवाकस्यारम्भे ध्रुवोऽसि इत्यादयः परिधिमन्त्राः आम्नाताः। तत्र आमनमसि इत्यादय उपहोममन्त्रास्त्रय आम्नाताः। ततो वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकाम इति सांग्रहणीष्टिवाक्यम्। ततो ध्रुवोऽसि ध्रुवोऽहं सजातीयेषु भूयासमिति परिधीन् परिदधाति इति प्राकृतं पारिधीपरिधानं अनूद्य तत्र चोदकप्राप्तान् गन्धर्वोऽसि इत्यादि मन्त्रान् प्रबाध्य तत्स्थाने ध्रुवोऽपि इत्यादयो मन्त्राः विनियुक्ताः। तत आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति इत्येवमामनमसीत्यादि मन्त्राणां विनियोग उक्तः। एते **चामनहोना** इत्युच्यन्ते। प्राकृतं किञ्चिदङ्गमनुद्दिश्य स्वातन्त्र्येणैव तद्विधानात्। एतेषाञ्चोपहोमानां अत्र प्राकृताङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विधानाभावेन न प्रकरणप्रमाणेन सांग्रहण्यां विनियोगः सम्भवति। तिस्र आहुतीर्जुहोती- त्येतदुत्तरं कस्य चित्प्राकृतङ्गानुवादेन विधीयमानस्य धर्मस्यादर्शनात्। किन्तु विकृति- संनिधिपाठेन पाठसादेश्यात् स्थानप्रमाणेन सांग्रहण्यां विनियोगः सम्भवत्येव। स्पष्टञ्चेदं**मर्थसंग्रहे**। एवं अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत् इत्यादिवाक्य- विहितासु कृत्तिकादिनक्षत्रदेवताकासु नक्षत्रेष्टिषु सोऽत्र जुहोति-अग्नये स्वाहा कृत्तिकाम्यः स्वाहा प्रजापतये स्वाहा रोहिण्यै स्वाहा इत्यादिवाक्यविहितानां उपहोमानां सनिधि- पाठादङ्गत्वम्। पशुधर्माणामग्नीषोमीयाङ्गत्वं अनुष्ठानसादेश्यस्योदाहरणम्। तथाहि उपाकरणादयः **पशुधर्माः**। पशोरुपस्पर्शन**मुपाकरणम्**। दर्भज्वालया अर्चिःप्रदक्षिणीकरणं **पर्यग्निकरणम्**। यूपे रज्वा बन्धनं **यूपनियोजनम्**। ज्योतिष्टोमप्रकरणे महादीक्षादिनात् चतुर्थे **औपवस्थ्य**संज्ञके दिवसेऽनुष्ठेयत्वेन यद्धर्मजातमुक्तम्, तत्रैते पशुधर्माःपठ्यन्ते। अतस्तस्मिन्नेव दिने तेऽनुष्ठेयाः भवन्ति। तथा दीक्षणीयोत्तरदिनेऽनुष्ठेयत्वेन यद्धर्म जातमुक्तं तत्र सोमं क्रीणातीति सोमक्रय उक्तः। तत्रैव पश्वालम्भनमुच्यते। तत्र सोमक्रयस्तस्मिन्नेव दिने क्रियते। परन्तु तत्रैव तत्संनिधावुक्तमपि पश्वालम्भनं तत्र न

क्रियते। किन्तु औपवसथ्यसंज्ञके चतुर्थदिने क्रियते। स एव द्विदैवत्यः पशुः औपवसथ्ये दिने आलब्धव्य इत्येवं तस्य विशिष्य कालविधानात्। अग्निः सोमश्चेति देवताद्वयमुद्दिश्य क्रियमाणः पशुः द्विदैवत्यो भवति। तथा च एकस्मिन्नेव चतुर्थे दिने पशूपाकरणादयः पशुधर्माः पशूपालम्भनञ्च अनुष्ठीयत इति अनुष्ठानतो देशसाम्यात् पशूपाकरणादीनां धर्माणां पश्वङ्गतया स्वीकारः।

**समाख्याप्रमाणम्**-सम्यगाख्यायते अनेनेति व्युत्पत्तिः। क्रियाकर्तृसम्बन्धार्थत्वात् समाख्यापि विनियोजिका भवति। ''यौगिकी या समाख्या सा सम्बन्धप्रतिपादिनी। सोऽपि बुद्धावुपस्थाप्य शेषसम्बन्धबोधकः'' इति **तन्त्रवार्तिकम्**। ततश्च यौगिकश्शब्दः समाख्या इति लक्षणम्। शब्दश्चतुर्धा-यौगिकः, रूढः, योगरूढः, यौगिकरूढश्चेति। यत्र अवयवार्थ एव ज्ञायते, अथवा स्वान्तर्निविष्टपदसमुदायार्थान्वयेन अर्थबोधकश्शब्दो वा **यौगिकः**। यथा आध्वर्यवम्, पाचक इत्यादि। योऽवयवशाक्तिनिरपेक्षया समुदायशक्त्यै-वार्थं बोधयति स **रूढः** यथा गवादिः। यस्तु अवयवशक्तिविषये समुदायशक्त्यापि प्रवर्तते स **योगरूढः**, यथा पङ्कजादिशब्दात् अवयवशक्त्या पङ्कजनिकर्तृत्वम्, समुदायशक्त्या पद्मत्वेन बोधः। यस्तु अवयवशक्तिसमुदायशक्तिभ्यां रूढार्थं यौगिकार्थञ्च स्वातन्त्र्येण बोधयति स **यौगिकरूढः**, यथा उद्भिदादिशब्दाः, सच ऊर्ध्वगमनकर्तृतरुगुल्मादिकम्, यागविशेषमपि बोधयति। एवञ्च याज्ञिकप्रसिद्धा यौगिकीसंज्ञा समाख्येति भवति। सा समाख्या **वैदिकी लौकिकी** चेति द्विविधा। अपौरुषेयी वेदे श्रुता वैदिकी। याज्ञिकैः परिकल्पिता लौकिकी। होतृचमसः हारियोजन इत्यादिः वैदिकीसमाख्यायाः उदाहरणम् अत्र होतृचमस इत्यनया वैदिक समाख्यया होतुश्चमसभक्षणाङ्गत्वं बोध्यते। अत्र चमसस्थसोमभक्षणे हविर्धाने चर्मन्नधिग्रावभिरभिषुत्याहवतीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति इति (**तैत्तत्रीयसंहिता**श्रुतिवाक्यं ६/२/११) प्रमाणम्। हारियोजनशब्दार्थस्तु हरिरसि हारियोजनः इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजन इति इति **अर्थसंग्रह-व्याख्या**यां कौमुद्याम्। लौकिकी समाख्या तु याज्ञिकैः परिकल्पिता- यथा आध्वर्यवम्, इत्यादि। आध्वर्यवं काण्डमित्यर्थः। अनया लौकिकसमाख्यया पुरोध्वर्युर्विराजति

इत्यादिना अध्वर्युकाण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशात् अध्वर्योः कर्तृत्वेनाङ्गत्वम्। एवं ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्यादिषु काम्येष्टि साधनाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशात् "उभावामिन्द्राग्नी" इत्यादीनां याज्यानुवाक्यात्वेन विनियोगः-अङ्गत्वेनान्वयः। एवं इदं श्रीसूक्तम्, इदं पुरुषसूक्तमिति याज्ञिकप्रसिध्या तत्तद्देवताप्रीत्यै तत्तत्सूक्तपाठे विनियोगश्च समाख्या प्रमाणेनैव। एवं हौत्रम्, औपगात्रम् होतुरिदं इत्यादि योगबलेन होत्रादिसमाख्या-तानां कर्मणां होत्राद्यनुष्ठीयमानत्वं प्रतीयते। तस्मादबोधकत्वबाधितत्वयोरप्रामाण्य-कारणयोरभावात् श्रुतिलिङ्गादिपञ्चकवत् समाख्यानेन प्रमाणेन धर्माः व्यवस्थाप्यन्ते।

एवं कर्मणामङ्गाङ्गिभावे श्रुत्यादिभिः प्रमाणैर्निश्चिते साङ्गप्रधानं कर्म अविलम्बेनैव कुर्यादिति बोधको विधिः **प्रयोगविधिरिति** पूर्वमुक्तम्। सर्वेषां कर्मणां अङ्गानां अवि-लम्बेन युगपद् वा एकेन बहुभिर्वा ऋत्विग्भिरनुष्ठीयमानं असम्भवदोषग्रस्तमिति तत्र पदार्थान्तरस्य अव्यवधानरूप अविलम्बः स्वीकर्तव्यः। यथा स्नात्वा भुञ्जीत इत्यादौ लोके स्नानानन्तरं भोजनस्य पौर्वापर्यं दृश्यते परन्तु स्नानोत्तरकालव्यवधानेनापि भोजनं भवति, न त्वव्यवधानेनैव। परन्तु स्नानात् प्राक् लोके भोजनाभावे एव तत्तात्पर्यम्। परन्तु यत्र वेदे शाब्दमर्यादया पौर्वापर्यं नोच्यते किन्तु शब्दतः प्रतीयमानेन साहित्येन पौवापर्यमाक्षिप्यते तत्राव्यवधानेनैव तत्तत्पौर्वापर्यं सम्पादनीयं भवति। नियतपौर्वापर्याभावे युगपदनेक कर्मणामुपस्थितौ एकेनैव युगपदनेककर्मणां कर्तव्यत्वासम्भवे च तत्र पूर्वं किं कर्तव्यम्, इति संशये च स्वकपोलकल्पनया पूर्वमिदमिदमेवेदानीं कर्तव्यमिति निश्चये प्रमाणाभावः, तत्तत्कर्मानुष्ठाने विलम्बश्च स्यात् ततश्च कर्मणि वैगुण्यमापद्येत। तन्नि-वारणाय क्रमः कश्चिदाश्रयणीयः। अत एव क्रमबोधको विधिः **प्रयोगविधि**रिति लक्षणमप्युच्यते। तत्र **क्रमो** नाम विततिविशेषः पौर्वापर्यरूपः, अव्यवहितत्वम्, आनन्त-र्यमिति लक्षणानि **प्रकाशादिषु** वर्णितानि। **विततिर्नाम** विस्तारः, स च अनुष्ठानवेलायां अनेकपदार्थवृत्तिः कश्चन गुणः। तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवम् अनेकपदार्थ-वृत्तिपौर्वापर्थरूपविततिरेव क्रमः। आनन्तर्यमव्यवहितत्वं वा क्रमत्वमिति

**अर्थप्रकाशि**कादौ। तच्चाव्यवहितत्वम् एक पदार्थध्वंसोत्पत्तिक्षणवर्तित्वमपरपदार्थस्य, आनन्तर्यञ्च अनन्तराकारानुगतप्रतीति-प्रमाणकमिति च **अर्थप्रकाशे**। ततश्च एकपदार्थनिष्ठापरपदार्थाव्यवहितोत्तरत्वम्, इति **क्रमलक्षणम्।** अयं च क्रमः विस्तारविशेष-रूपः सर्वाङ्गघटित समुदायनिष्ठः अङ्गवाक्यैकत्वापन्नप्रधानविधिरूपप्रयोगविधिना बोध्यते। पौर्वापर्यरूपस्तु पूर्वकालभवत्वअपरकालभवत्वरूपः तत्तदङ्गभूतकर्मज्ञनिष्ठः, तत्तदङ्गविधिना बोध्यते। तत्र **क्रमबोधकानि प्रमाणानि श्रुति-अर्थ-पाठ-स्थान मुख्य प्रवृत्ति**रूपाणि षट् भवन्ति। तत्र **श्रौतक्रमः** - क्रमपरं वचनम्, तद्विशिष्टपरं वा वचनम् श्रुतिः। वृत्या क्रमबोधकः क्लृप्तः शब्द इत्यर्थः। स च अथशब्दादिः। तत्र अथशब्दः शक्त्या आनन्तर्यवाचकः। क्त्वा प्रत्ययादीनां तु पूर्वकालादिवाचिनां अपेक्षानुरोधात् लक्षणया क्रमबोधकत्वम्। उदाहरणम्-द्वादशाहे सत्रात्मके अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति इतिश्रूयते। अत्र क्त्वाप्रत्ययेन लक्षणया बोध्यमानं ब्रह्मदीक्षायां गृहपतिदीक्षानन्तर्यं किमनूद्यते विधीयते वेति संशये श्रुत्यर्थविधिसम्भवे वाक्यार्थविधेरन्यायत्वात् दीक्षैव इह विधेया। ततश्च पाठप्राप्तः क्रमोऽनूद्यत इति प्राप्ते सत्रे ये यजमानास्त ऋत्विजः इति यजमानानामेव ऋत्विक्कार्ये विधानात् तेषां चोदनादेव दीक्षाप्राप्त्या न तस्या विधेयत्वसंभवः। ततश्च अन्यतः प्राप्तिविरहात् क्रमस्यैव विधेयत्वम्। स्पष्टञ्चेदं ५-१-१ भाष्ये अन्यत्र शास्त्रदीपिकादौ च। ततश्च गृहपतिदीक्षानन्तरं ब्रह्मदी-क्षेति क्त्वाप्रत्ययश्रुत्या निर्णीयते। एवं हृदयस्याग्रेऽवद्यति अथ जिह्वायाः अथ वक्षस इत्यत्र अथशब्दश्रुतिबलात् क्रमः बोध्यते। एवं वषट्कर्तुः प्रथमभक्ष इत्यपि क्रमस्योदाहरणम्। याज्यामन्त्रास्यान्ते वौषट् इति समुच्चार्यमाणश्शब्दो **वषट्कारः**। तस्य कर्ता होता। तस्य प्रथमं हविर्भक्षणमित्यर्थः। अत्र प्रथमभक्ष इति समस्तं पदम्। तत्र भक्षमुद्दिश्य प्राथम्यरूपक्रममात्रस्य विधाने तद्वाचकयोः द्वयोः पदार्थयोः एकस्यां वृत्तौ प्रवेशाभावात् एकार्थीभावलक्षणसामर्थ्यभावात् समासो न स्यात्। अतः वाक्यान्तरेण विहितमपि भक्षणं प्राथम्यविशिष्टं विधीयत इति क्रमविशिष्टपदार्थपरम्। वेदं कृत्वा वेदिं करेतीत्यपि श्रौतक्रमोदाहरणम्। **वेदः** दर्भमुष्टिविशेषः। आहवनीय गार्हपत्ययोर्मध्ये चतुरङ्गुलं निखातं

भूतलं हविर्निधानस्थानविशेषरूपं **वेदिरि**त्युच्यते। अत्र वेदं वेदिञ्चेति पदार्थद्वयमनूद्य न वेदकरणं च विधीयते परन्तु केवलं तयोः क्रमः कृत्वा इत्यत्र क्त्वाप्रत्ययश्रुत्या पौर्वापर्यरूपः बोध्यते॥

**अर्थक्रमः** – अर्थो नाम प्रयोजनम्, तच्च व्युत्क्रमे अनुपपद्यमानं सत् क्रमे प्रमाणम्। ततश्च अर्थः – प्रयोजनं तदनुरोधेन यः क्रमः, प्रयोजनवशेन निर्णयः स आर्थक्रम इत्युच्यते। अत्र क्रमबोधकश्रुतशब्दाभावेऽपि अर्थानुरोधात् स कल्प्यते। अग्निहोत्रं जुहोति, यवागूं पचति "इत्यत्र यवागूपाठस्य पाठक्रमेण पश्चात् करणे पाकसंस्कृतायाः यवाग्वाः होमरूपप्रयोजनानिर्वाहः। होमो हि यवाग्वा अग्निहोत्रं जुहोति" इत्यनेन यवागूत्पादकपाकं प्रति प्रयोजनत्वेनावगम्यते। अतोऽत्र प्रयोजनवशेन क्रमनिर्णयः।

**पाठक्रमः** – पदार्थबोधकवाक्यानां यः क्रमस्स पाठक्रमः। स च ब्राह्मणवाक्यगतो वा मन्त्रवाक्यगतो वा भवति। कर्मानुष्ठानकाले समुच्चार्यमाणा मन्त्राः। ते च कर्माङ्गभूत-देवतादिपदार्थाभिधायकाः सन्तो देवतादिपदार्थान् स्मारयन्ति। एतद्देवतादिपदार्थस्मरणमेव मन्त्रोच्चारणस्य फलम्। एतच्च दृष्टं फलमिति न तस्यादृष्टं फलं किञ्चित्। सम्भवति दृष्टे फले अदृष्टफलकल्पनाया अन्याय्यत्वात्। अपूर्वरूपमदृष्टं फलन्तु मन्त्रोच्चारणपूर्वक-देवतादिपदार्थस्मरणस्य। मन्त्रोच्चारणपूर्वकपदार्थस्मरणस्य नियमविधिना बोधितत्वात्। येन क्रमेण मन्त्राः पठ्यन्ते तेनैव क्रमेण तेऽनुष्ठानकाले उच्चार्यन्ते। तेनैव क्रमेण पदार्थाः स्मृता भवन्ति। ततस्तेनैव क्रमेण तत्तत्पदार्थाङ्गकानि कर्माण्यनुष्ठीयन्ते। अयं **मन्त्रपाठ-क्रमः।** ब्राह्मणवाक्यानि तु न अनुष्ठानकाले उच्चार्यन्ते। किन्तु केवलमेवमेवं कर्माणि कर्तव्यानीत्येवं कर्माणि बोधयन्ति। येन क्रमेण ब्राह्मणवाक्यानि पठ्यन्ते तेनैव क्रमेण तद्विहितानि कर्माणि स्मर्यन्ते। तेनैव क्रमेण कर्माण्यनुष्ठीयन्ते। **अयं ब्राह्मणपाठक्रमः**। ततश्च विधायकवाक्यस्थः, मन्त्रवाक्यस्थो वा यः क्रमः पदार्थेष्वाश्रीयते स पाठक्रम इति भवति। तयोः आग्नेयाग्नीषोमीययोः तत्तद्याज्यानुवाकक्रमात् यः क्रम आश्रीयते स मन्त्र पाठस्योदहरणम् – तैत्तरीयसंहितायां २/५/२ ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् इति अग्नीषोमीययाग उक्तः। अनन्तरं २/६/३ यदाग्नेयोऽष्टाकपालोऽमावास्यायां

च पौर्णमास्याञ्चाच्युतो भवति इत्याग्नेययाग उक्तः। एतादृश पाठक्रमानुसारेण आग्नेययागात् पूर्वमग्नीषोमीययागोऽनुष्ठेयो भवति। परन्तु मन्त्रकाण्डे ३/५/७ अग्निमूर्धा इत्येवमाग्नेया मन्त्रा एव पूर्वं पठिताः। ततोऽग्नीषोमासवेदसा इत्येवमग्नीषोमीया मन्त्राः पठिताः। तत्रानुष्ठानकाले समुच्चार्यमाणैर्मन्त्रैर्यत् स्वप्रतिपाद्यदेवतादिपदार्थस्मरणद्वारा तादृश-पदार्थाङ्गककर्मस्मरणं तत् अनुष्ठानकालेऽनुच्चार्यमाणैर्दूरत एवास्थाय कर्मविधाय-कैर्ब्राह्मणवाक्यैर्यत् कर्मस्मरणं तदपेक्षया अन्तरङ्गमिति तदन्तरङ्गस्मरणं येन क्रमेण जायेत तेनैव क्रमेणानुष्ठानं भवति। ततश्चैतत् मन्त्रपाठक्रमस्योदाहरणम्। प्रयाजानानु-ष्ठानक्रमः ब्राह्मणपाठक्रमस्योदाहरणम् - समिधो यजति, तनूनपातं यजति इत्यादीनि वाक्यानि कर्मविधायकत्वेन ब्राह्मणलक्षणाक्रान्तत्वात् ब्राह्मणत्वेन गृहीतानि। अनुष्ठानस्य पदार्थस्मृत्यधीनत्वात् तत्स्मृतेश्च कर्मविधायकब्राह्मणवाक्याधीनत्वात् यथाब्राह्मण-वाक्यं समिधादियागानामनुष्ठानक्रम आश्रीयते। क्वचित्तु **न्यायप्रकाशादौ** समन्त्रक-कर्मणां मन्त्रपाठक्रमात् क्रमः, अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादिति विशेषोऽपि वर्णितः। **स्थानक्रमः** स्थानं नामोपस्थितिः। तेन च उपस्थितिविशेषेण योऽनुष्ठानक्रमः स स्थानक्रम इत्युच्यते। क्लृप्तक्रमपदार्थोपस्थितिः एकसम्बन्धिज्ञानमुद्रया परसम्बन्धिनः पदार्थस्य स्मारिका सती क्रमनियामिका भवति। एवञ्च प्रकृतौ नानादेशानां पदार्थानां विकृतौ चोदकवचनादेकस्मिन् देशेऽनुष्ठाने कर्तव्ये यस्य देशे तेऽनुष्ठीयन्ते तस्य प्रथमम-नुष्ठानम्। इतरयोस्तु पश्चात् इत्ययं क्रम स्थानक्रमः। तत्र प्रकृत्यवगतस्थानाबाधेन आगन्तुभिः क्रमाश्रयणं युक्तिसहम्। यथा साद्यस्क्रे सवनीयस्थाने पशुषु सह आलभ्यमानेषु तस्य आश्विनग्रहानन्तर्य न बाध्यते। तथाहि - सद्यः क्रीयते सोमोऽस्मिन्निति **साद्यस्क्रो** नाम साङ्ग एकदिनसाध्यः सोमयागविशेषः। अग्निष्टोमसंस्थाकज्योतिष्टोमः **प्रकृतिः**। तत्र औपवसथ्यमहरारभ्य क्रमेणानुष्ठेयानां अग्नीषोमीय-सवनीय-अनुबन्ध्यानां पशूनां त्रयाणां आलभ्भनं प्रोक्तम्। तत्र औपवसथ्येऽह्नि-प्रथमदिने अग्नीषोमीयः, **सुत्याकाले**सोमर-सामिषकाले सवनीयपशुः, **आनुबन्ध्यस्तु** अवभृतदिने इति आलम्भनं विहितम्। एतेषां साद्यस्क्राख्ये सोमयागे सह पशून् आलभेत इत्येकदा अनुष्ठानलक्षणं साहित्यं बोधितम्,

तदपि सवनीयस्य स्थाने विहितम्। तत्र प्राकृतक्रमं परित्यज्य सवनीयस्य स्थाने साहित्य विधानात् आदौ सवनीयपशो**रुपाकरणं** - देवतार्थत्वेन स्वीकरणं - स्पर्शो वा, ततोऽग्नीषोमीयस्य, ततोऽनुबन्ध्याया इति स्थानात् क्रमः।

**मुख्यक्रमः** - मुख्यत्वञ्च प्रधानत्वम्। यं क्रममवलम्व्य तदङ्गानामपि क्रमो यत्र भवति स मुख्यक्रमः। सः प्रयोगवचनावगताङ्गप्रधानसाहित्याबाधार्थमाश्रीयते। ततश्च प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रम इति भवति। मुख्ययागक्रमेण आग्नेयपुरोडाशस्य प्रयाजशेषाभिधारणम् ततः पयसोऽभिधारणमुदाहरणम्। तथाहि - दर्शपूर्णमासप्रकरणे प्रयाजानिष्ट्वा हवींष्यभिधारयति इतिश्रूयते। प्रयाजान् इष्ट्वा तच्छेषेण आज्येन वेद्यामासादितानां हविषामभिधारणम् अनेन विधीयते। **अभिधारणं** नाम आज्येन प्रोक्षणम्। अग्रे उपयोक्ष्यमाणानां यागीयहविषां पूर्वशेषेण अभिघारणे यज्ञः संततो भवति, अविच्छिन्नश्च भवति। आग्नेययागः ऐन्द्रयागश्च अनुष्ठेयौ। तत्राग्नेयः पूर्व, पश्चादैन्द्रः। याज्यानुवाक्यापाठक्रमात्। अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयम्। अपांसि रेतांसि जिन्वति "इत्याग्नेयी पुरोनुवाक्या। अत्र पूर्वार्धे अग्निशब्दसत्वात्। पुरस्ताल्लक्ष्मा **पुरोऽनुवाक्या** भवति। मन्त्रप्रतिपाद्यायाः देवताया नामधेयं **लक्ष्मे**त्युच्यते। तच्च लक्ष्म यस्याम् ऋचि पूर्वार्धे विद्यते सा **पुरोनुवाक्या**। यस्यामृचि उत्तरार्धे देवतानाम दृश्यते सा उपरिष्टाल्लक्ष्मा उच्यते । तदनन्तरं तत्रानुवाके प्राजापत्य-अग्नीषोमीय-ऐन्द्राग्न **याज्यानुवाक्याः** पठित्वा तदन्तरं ऐन्द्रयागीय-ऐन्द्रसानसिंरयिम्, सजित्वानं सदाहम्। वर्षिष्ठ भूतये भर" इति पुरोऽनुवाक्या, प्रसाहिषे पुरुहूतशत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभार दक्षिणेनावसूनि। पतिः सिन्धूनामसि रेवतीनाम् इति याज्या पठिता अनेन पुरोऽनुवाक्यापाठक्रमेण आग्नेययागः पूर्वः, पश्चादैन्द्र इत्यतस्तस्मान्पूर्वं तदीयहविषः प्रयाजशेषेण क्रियमाणभिधारणमिति आग्नेयहविषः पूर्वं, पश्चादैन्द्रहविषेऽभिधारणमिति आग्नेययागः पूर्वं ऐन्द्रो यागः पश्चादिति सिध्यति। तथाच सांनाय्यधर्माणां शाखाच्छेदादीनां पूर्वम्, आग्नेयघर्माणां निर्वापादीनां च अनन्तरं प्रवृत्तावपि मुख्ययोराग्नेसानांय्ययागयोर्मध्ये आग्नेय-यागस्य पूर्वमनुष्ठानात् मुख्ययागक्रमेण आदौ आग्नेयपुरोडाशस्य प्रयाजशेषाभिधारणम्, ततः

पयसोऽभिधारणमिति मुख्यक्रमादभिधारणक्रमः। एवं सरस्वतीसारस्वद्यागयोः क्रमे तदङ्गानामपि तथैव क्रमः। तथाहि - सारस्वतौ भवतः एतद्वै दिव्यं मिथुनं यत् सरस्वती च सरस्वांश्च'' इति विहिते स्त्रीपुंसदैवत्ये यागद्वये स्त्रीदैवत्यस्य प्रथममनुष्ठानम्, ततः पुंदैवत्यस्य, याज्यानुवाक्यापाठक्रमात्। तत्र चोदकप्राप्तौ निर्वापौ प्रधानक्रमेणैव कार्यौ, उत्तरभाविनः प्रधानस्य पूर्वं निर्वापे प्रधानेन अङ्गस्य अधिकव्यवधानापत्तेः। अतः प्रधानप्रत्यासत्यनुग्रहाय स्त्रीदैवत्ययागाङ्गभूतो निर्वापः प्रथमं कार्यः, ततः पुंदैवत्य-यागाङ्गभूतो निर्वापः इत्ययं मुख्यक्रमोदाहरणम्।

**प्रवृत्तिक्रमः** - सहानुष्ठीयमानेषु अनेकेषु प्रधानेषु संस्कारार्थं द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः। तथाहि—यौगपद्येनानुष्ठीयमानेषु प्रधानेषु युगपदनुष्ठेयतया प्राप्तानां यौगपद्यासम्भवात् आवृत्या अनुष्ठाने कर्तव्ये सति तत्र प्रथमाङ्गानुष्ठानसमये यदृच्छया येन क्रमेण प्रवृत्तिर्जाता सः प्रवृत्तिक्रमः। द्वितयतृतीयाद्यङ्गानुष्ठानं तेनैव क्रमेण कर्तव्यमित्यनेन प्रवृत्तिक्रमेण निर्णीयते। यत्रानेकप्रधानानां युगपदनुष्ठानं विधीयते युगपत् कर्तुं शक्यते च तत्र क्रमापेक्षैव नास्ति। एवं प्रधानाङ्गानामपि। येषां च प्रधानाङ्गानां युगपदनुष्ठानं विधीयते परन्तु युगपत् कर्तुं च न शक्यते तत्र क्रमः क इत्यपेक्षायां क्रमनियामकश्रुत्यादिप्रमाणान्यतमस्य कस्याप्यप्राप्त्या यदृच्छैव तादृशस्थले क्रमनियामिका भवति। यदृच्छयैव प्रवृत्या यत्र क्रमो भवति तत्र चाङ्गभूतानां कर्मणां अनेकत्वे प्रथमाङ्गानुष्ठानसमये यादृच्छिकप्रवृत्या यत्र यः क्रमस्सम्पन्नः स एव तत्र द्वितीयतृतीयाद्यङ्गानुष्ठानसमये ग्राह्यो न तु यदृच्छया पूर्वविपरीतः कश्चिदन्य इत्यनेन प्रवृत्तिक्रमेण नियम्यते तथा च सह प्रयुज्यमानेषु सन्निपातिनां आवृत्याऽनुष्ठाने कर्तव्ये प्रथमक्रम एव द्वितीयादिष्वपि प्रयोगवचनावगताङ्गसाहित्याबाधाय यत्र आश्रीयते तत्र प्रवृत्तिक्रम इति वक्तव्यम्। यथा प्राजापत्येषु उपाकरणक्रम एव नियोजनादिष्वपि प्रयोगवचनाद् भवति। तथा हि-वाजपेये सप्तदश प्राजापत्यान् पशून् आलभेत'' इति सप्तदश पशवो विहिताः। ते च सर्वे प्रजापतिरूपैकदेवताका इति सर्वेषां पुरोनुवाक्या ऋक् एकैव तन्त्रेणोच्चार्यते। याज्यापि तथैव। त्यागश्चैकदैव कर्तुं शक्यः। अङ्गभूतानि कर्माणि

तु पशूपाकरण-नियोजन-अञ्जन-पर्यग्निकरण-संज्ञपनादीनि। प्रजायतेर्जायमाना:'' इत्यादि मन्त्रेण बर्हिभ्यां प्लक्षशाखया च पशोरुपस्पर्शनं **उपाकरणम्**, यूपे पशोर्बन्धनं **नियोजनम्**। एतानि उपाकरणादीनि युगपत् सर्वेषु पशुषु कर्तुं न शक्यन्ते। अतस्तत्र क्रमोऽपेक्ष्यते। प्राजापत्या हि वैश्वदेवीं कृत्वा प्राज्यापत्यैश्चरन्ति इति तृतीयानिर्देशात् सेतिकर्तव्यताका: एककालत्वेन विहिता:। तच्च वाचनिकम्। प्रयोगविधिना यत् उपाकरणनियोजनयो: साहित्यमवगम्यते तच्च आतिदेशिकम्। आतिदेशिकापेक्षया वाचनिकस्य प्राबल्यम्। ततश्च प्रथमं सप्तदशसु उपाकरणमेव संपादनीयम्। तत्र अनेकप्रधानकैकप्रयोगस्थले तत्सन्निपातिनामङ्गानां प्रतिप्रधानं गुणावृत्तिरिति नियमात् आवृत्या अनुष्ठानं प्राप्तम्। तत्र च प्रकारद्वयम्-काण्डानुसमय: पदार्थानुसमयश्चेति। एकस्मिन् प्रधाने सन्निपत्योपकारकाङ्गकाण्डं समग्रमनुष्ठाय अपरस्मिन् प्रधाने तदनुष्ठानमिति **काण्डानुसमय:**। काण्ड: पदार्थवर्ग:, तेनानुसमय: - अनुष्ठानमित्यर्थ:। एवमेकं पदार्थं सर्वेष्वपि प्रधानेषु अनुष्ठाय, तत: पदार्थान्तरस्य पूर्वक्रमेणानुष्ठानं **पदार्थानुसमय:**। तत्र प्रधानानामङ्गानां च प्रत्यासत्तिलाभाय प्रायेण **पदार्थानुसमय** एव आश्रीयते। यत्र तु पदार्थानुसमये कृते प्रधानविरोध: तत्र तावन्मात्राणामङ्गानां काण्डानुसमय:। यथा-अश्वप्रतिग्रहेष्टौ ''यावतोऽ-श्वान् प्रति गृह्णीयात् तावतो वारुणान् चतुष्कपलान् निर्वपेत्'' इत्यनेन यावत्-तावत्-शब्दाभ्यां दानसमसंख्याकेष्टिविधानात् तावतीनामिष्टीनां एकप्रयोगसाध्यत्वेन तावत्सु पुरोडाशेषु एकदा श्रप्यमाणेषु यदि पदार्थानुसमयेन सर्वेषां पुरोडाशानां अधिश्रयणं कृत्वा उद्वासनं क्रियेत ततस्ते दह्येरन्। अतस्तत्र अधिश्रयणाद्युद्वासनान्तं एकत्र कृत्वा अपरत्र तत्कर्तव्यमिति काण्डानुसमय:। परन्तु अत्र न काण्डानुसमय:। प्रयोगविधिना यत् उपाकरणनियोजनयो: साहित्यमवगम्यते तत् न वाचनिकम् किन्तु आतिदेशिकम्। ततश्च वाचनिकस्य आतिदेशिकापेक्षया प्राबल्यात् प्रथमं सप्तदशपशूपकरणमेव पदार्थानुसमयमाश्रित्य संपादनीयम्। ततस्त्वेषां सर्वेषां नियोजनम्। उपाकरणाख्य आद्यपदार्थ: यत: कुतश्चिदारभ्य यत्र क्वचन समापनीय:। नियोजनादिकन्तु येन क्रमेण उपाकरणं प्रवृत्तम्, तेनैव क्रमेण कर्तव्यम्। प्रकृतौ अग्नीषोमीय पशोरेकत्वेन

उपाकरणमादौ कृत्वा द्वितीयक्षण एव नियोजनम्, तृतीयक्षणे प्रोक्षणम्, व्यवधान-प्रयोजकाभावात् कर्तव्यम्। अत्र तु सप्तदशपशूनां सहानुष्ठेनयत्ववचनात् प्रथमतो यत्र क्वचित् पशौ कृतमुपाकरणम्, स्वाश्रयकर्तव्यनियोजनाय षोडशभिःक्षणैः व्यवधानं सहेत, न त्वधिकम्, तत्रोपाकरणक्रमेण नियोजनं प्रथमपशौ अकृत्वा पश्वन्तरे नियोजनं कृत्वा अनन्तरं प्रथमपशौ नियोजनकरणे षोडशक्षणाधिकक्षणव्यवधानं शास्त्राननुमतमापद्येत। तन्निरासायोपाकरणं येन क्रमेण प्रवृत्तं तेनैव नियोजनादिकं कार्यमिति प्रवृत्तिक्रमः। तथाच सहप्रयुज्यमानेषु प्रदानेषु संनिपातिनामङ्गानां आवृत्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमात् यः क्रमः साहित्यसंपादनाय आश्रीयते स प्रवृत्तिक्रमः॥

# पञ्चमं कुसुमम्

वेदे च द्विविधानि वाक्यानि दृश्यन्ते-उपदेशात्मकानि अतिदेशात्मकानि च। इदमित्थं कर्तव्यमित्यादीनि **उपदेशात्मकानि**। तद्वदिदं कर्तव्यमित्यादीनि **अतिदेशात्मिकानि**। तथा च यस्मिन् वेदभागे सकलाङ्गविशिष्टं प्रधानं समाम्नायते तत्रैव तावत् अङ्गविशिष्टं मया एतत् कर्तव्यमिति बुद्धिरुत्पद्यते, स वेदभाग उपदेशात्मको भवति। यत्र तु न सकलाङ्गस्योपदेशः तत्राकाङ्क्षावशात् अन्यतस्सिद्धाङ्गानि उपजीव्यानि, तत्र तद्वदिदं कर्तव्यमिति प्रतीतिर्जायते, ततस्साक्षात्पठितो वा अध्याहृतो वा तत्प्रतिपादकशब्दस्स्वीक्रियते, स च अतिदेशात्मकं वाक्यं भवति। यथा-दर्शपूर्णमासयोः ज्योतिष्टोमे च प्रयाजादयः दीक्षणीयादयश्च धर्माः श्रूयन्ते। ते न केवलं यज्यर्थाः येन सर्वत्र यजेरेकत्वात् परिप्लवेरन्। अपितु प्रधानभूतापूर्वप्रयुक्ताः। अपूर्वभावना च सर्वत्र भिद्यते। अतस्तत्तत्प्रकरणव्यवस्थिताः सन्तोऽन्यत्र अतिदेशेनैव गच्छन्ति। स चातिदेशः मीमांसाशास्त्रीयमलौकिकप्रमाणम्। इदं च मीमांसासूत्रभाष्ययोस्सप्तमाध्याये वर्णितम्। परत्र विहिताः धर्माः तमतीत्य अन्यत्र तेषां देशो येन भवति **सोऽतिदेश** इति भाष्योक्तं लक्षणम्। यत्र कर्मस्वरूपमात्रनिरूपणं कृतम्, तत्र विकृतौ प्राकृतधर्मप्रवेशसमर्थनाय कर्मणः पूर्णत्वसिद्धये इतरधर्मस्य इतरस्मिन् प्रयोगाय वा अन्यत्र श्रुतानां अङ्गानां अन्यत्र प्रापणं येन प्रमाणेन स अतिदेशः। एवं अन्यधर्मत्वेनावगतानां तत्सम्बन्धादरेण अन्यत्र प्रदेशे प्रापणं येन व्यवहारेण भवति सोऽतिदेशः, अथवा यः पदार्थः यादृशोपकारकद्वारा यदङ्गत्वेनावधारितः तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारद्वारैव अन्याङ्गताबोधकत्वं **अतिदेशत्वमिति** वक्तव्यम्। प्रतिपादितञ्चैतत् पूर्वाचार्योक्तमिति **न्यायरत्नमाला**याम्- ''अन्यत्रैव प्रणीतायाः कृत्स्नायाः कार्यसन्ततेः। अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते।। ''प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु। धर्मोपदेशो येन स्यात् सोऽतिदेश इति स्मृतः।।'' इति। सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावात् धर्माकाङ्क्षा अतिदेशप्रमाणेनैव पूरिता भवति। ततश्च प्रयाजादिपदार्थानां सौर्याद्यङ्गताबोधकत्वं सिध्यति।

एतदतिदेशप्रामाण्यबोधकमेव वाक्यं "प्रकृतिवत् विकृतिः कर्तव्येति" श्रूयते मीमांसा-तन्त्रे। यत्र समग्राङ्गोपदेशः सा **प्रकृतिः** -यथा दर्शपूर्णमासादिः। यत्र न समग्राङ्गोपदेशो सा **विकृतिः**। यथा सौर्यादिः। सौर्यं चरूं निर्वपेद् ब्रह्मवर्चसकाम इत्येवं सौर्ययागो विधीयते। स च दर्शपूर्णमासान्तर्गताग्नेययागस्य विकृतिभूतः, औषधद्रव्यत्वेन, एकदैवत्यत्वेन च साजात्यात्। यथा गवये दृष्टे तत्सादृश्यादनेन सदृशी मदीया गौरित्येवं गोरुपस्थितिर्भवति तथा सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इति सौर्ययागबोधके विधिवाक्ये दृष्टे तत्सादृश्यात् आग्नेययागबोधकं वाक्यमुपस्थितं भवति। आग्नेययागे अग्निरेकैव देवता, सौर्येऽपि सूर्य एकैव देवता। तथोभयत्र पुरोडाशरूपमोषधिद्रव्यं सममिति तयोः सादृश्यम्, एवमाग्नेय-यागबोधके वाक्ये समुपस्थिते सति सद्यस्तदर्थो बुद्धिमारोहति। ततश्च सौर्यंचरुं इति वाक्यान्तर्गतार्थीभावना ब्रह्मवर्चसकाम इत्युक्तत्वात् साध्यांशे निराकाङ्क्षैव। तथा करणां-शेऽपि निराकाङ्क्षा चरुं निर्वपेदित्युक्त्या चरुनिर्वापेन यागस्याक्षेपात्। कथं ब्रह्मवर्चसं भावयेदि-त्येवं कथंभावकाङ्क्षायां फलपूर्वोत्पादनोपयोग्युपकारसंपादनमन्तरेण तद् दुर्लभमित्युपकारसंपादनार्थं आग्नेययागेतिकर्त्तव्यता अतिदिश्यते-सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवत् उपकृत्येतिं इत्यतिदेशः। अतिदेशोऽयं **प्रत्यक्षवचनातिदेशः नामातिदेशः चोदना-लिङ्गनुमितवचनातिदेशश्**चेति त्रिविधः। तेषु प्रथमस्योदारणम्-समानमित-रच्छ्येनेनेति प्रत्यक्षवचनेन इषौ श्येनीयविशेषधर्मातिदेशः।**इषुश्येननामानौ** द्वावाभिचारिकौ एकाहौ ज्योतिष्टोमविकारौ यागौ। तयोरूभयोर्ज्योतिष्टोमधर्माः चोदकेन प्राप्ताः। तत्र इषौ समानमितरत् श्येनेन इति वचनं श्रुतम्। अत्र इतरशब्दो हि पूर्वोक्तातिरिक्ततत्सदृश-संनिहितवाची। दृष्टं च लोकेऽपि चैत्रमैत्रयोः कम्बलकौशेये देये, इतरत् विष्णुमित्राय इत्यत्र पूर्वोक्तसदृश-संनिहितवस्त्रादिरेव इतरब्देन प्रतीयते। इत्थं च संनिहितानां प्राकृतानां पूर्वोक्तैरप्राकृतै-स्सप्ताहादिभिः सादृश्यासम्भवात् श्येनवैशेषिकधर्मणामप्राकृतत्वेन सादृश्यसम्भवेऽपि असंनिहिततया सादृश्यसंनिहितत्वयोरन्यतरस्य त्यागे अवश्यकर्तव्ये वचनार्थवत्वाय संनिहितत्याग एव युक्तः। तथा च श्येनाङ्गसदृशं यदप्राकृतत्वेन सप्ताहा-दिसदृशं तदिषौ कार्य मिति वाक्यार्थः। ततश्च लोहितोष्णीयाः ऋत्विजः प्रचरन्तीत्यादिकं

श्येनाङ्गं जातमतिदिश्यते वचनेनेति अतिदेशविधिरयम्। एवं चातुर्मास्येषु वैश्वदेवाख्ये प्रथमे पर्वणि आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्, इत्याग्नेयादीन् अष्टौ यागान् विधाय वरुणप्रधासाख्ये तदनन्तरपर्वणि तानेवाद्यान् पञ्च विधाय अनन्तरं श्रुतम्-एतद् ब्राह्मणान्येव पञ्च हवींषि, यद् ब्राह्मणानीतराणि'' इति। अत्र ब्राह्मणवदेव ब्राह्मणविहिताः पदार्था उच्यन्ते। तथा च इतराणि वैश्वदेविकान्याद्यानि पञ्च हवींषि यादृशविधायकब्राह्मणवन्ति ब्राह्मणविहिताङ्गकलापवन्ति वा तादृशब्राह्मण वन्ति वारुणप्रधासिकान्यपि आद्यानि पञ्च हवींषि इति वाक्यस्यार्थः। ततश्च वार्त्रघ्नानि वा एतानि हवींषि इत्याद्यर्थवादस्याङ्गविधीनाञ्च नव प्रयाजा इत्यादीनाञ्च वाचनिकोऽ-तिदेशस्स्वीक्रियते। **नामातिदेशस्यो**दाहरणन्तु-कवतीषु रथन्तरं गायतीत्यादि वाक्यम्। कवतीषु रथन्तरं गायतीत्यादौ रथन्तरादिशब्दाः ऋग्वाचिनः, गीतिविशेषवाचिनो वेति संशये गीतिविशिष्टायाम् ऋच्येव रथंतरादिशब्दानां प्रयोगात् तद्वाचित्वमेवावश्यकम्। ततश्च ऋचि ऋगन्तरातिदेशासम्भवात् कवतीशब्देन कवतीकार्यमर्थप्रकाशनं लक्षयित्वा तदुद्देशेन रथंतरशब्दवाच्याया अभिवत्या विधानमिति प्राप्ते गीतिविशेषे एव रथन्तरादिपद-शक्तिः, न तु गीतिविशिष्टायाम् ऋचि, गौरवात्। गोत्वादिवाचकगवादिपदात् व्यक्तेरेव लाभसंभवात्। ततश्च कवतीषु रथंतरं गायतीत्यस्य अयमर्थः -अभिवत्यामुत्पन्नो गीतिविशेषः कवतीषु कार्यः इति। अभित्वा शूरनोनुम इत्यादिका ऋक् **अभिवतीति** कयानश्चित्र आभुवदित्यादिकाः कशब्दयुक्ताः **कवत्य** इति चोच्यन्ते। ततश्च कवतीषु रथन्तरं गायतीत्यादौ अभित्वाशूर नोनुम इत्यस्याम् ऋचि या गीतिः तस्याः कवतीष्वतिदेशः नामातिदेशस्योदाहरणम्। एवं मासमग्निहोत्रं जुहोति इति कुण्डपायिनामयने श्रूयते-मासमग्निहोत्रं जुहोति इति। सोऽयमग्निहोत्रशब्दो नैयमिकस्यैव अग्निहोत्रस्य वाचक-शब्दः, अत्र तु गौणः। नैयमिके अग्नये होत्रमित्येवं प्रवृत्तिनिमित्तसम्भवात्। मासाग्निहोत्रस्य तु अग्निदेवताकत्वावगमात्। तस्मान्नित्याग्निहोत्रसादृश्यविधित्सया अत्र शब्दः प्रयुज्यते। एवंञ्च नित्याग्निहोत्रधर्मातिदेशोऽयं मासमग्निहोत्रं जुहोतीति। **चोदनालिङ्गानु-**

**मितातिदेशस्यो**दहरणन्तु-सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम'' इति। तत्र हि निर्वापः एकदेवताकत्वम्, औषधद्रव्यकत्वञ्चेति लिङ्गात्, तादृशस्य आग्नेययागेऽप्यस्तीति आग्नेययागतसादृश्यात् सौर्ये तद्धर्मातिदेशः सौर्ये वैदिकेत्थम्भावातिदेशः न प्रत्यक्ष वचनात्। तस्यानुपलब्धेः। नापि नामधेयेन तद्भेदात्। किन्तु चोदनालिङ्गानुमितवचनात् आग्नेयवत् सौर्यं कुर्यादिति ''कल्पितवाक्येनेति पूर्वं प्रतिपादितम्।'' एतत्सर्वं मीमांसासूत्राणां सप्तमाध्याययोः अतिदेशप्रकारान्तरवर्णनपूर्वकं विस्तृतम्। अतिदेशभेदाश्च बालप्रकाश-दिषु ग्रन्थेषु प्रकारान्तरेणापि वर्णिताः।

एतेषां वर्णनं मीमांसासूत्राणां अष्टमाध्याये अतिदेशविशेषवर्णनावसरे एवं इन्द्रियकामाधिकरणे द्वितीयाध्याये च विद्यते। एवं **मीमांसाबालप्रकाशे** दृश्यते।।

**ऊह प्रमाणम्**-वेदे अतिदेशप्रमाणेन अतिदिष्टेषु अङ्गत्वबोधकेषु वाक्येषु न सर्वाः

विभक्तय: नापि सर्वाणि लिङ्गानि निर्दिष्टानि। किञ्च व्रीहिनवहन्ति इत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वात् विवक्षितम्। ततश्च अवहननादि व्रीहिषु साध्यम्, ततश्च अवहननेन व्रीहिषु संस्कारोत्पत्तेः अपूर्वसाधनता सिध्यति। परन्तु नैवारश्चरुर्भवति इत्यत्र नीवाराणां प्रयोगे अवहननादिर्भवति वा न वेति संन्देह:। यदा व्रीहिष्वेव नियतोऽवधात: व्रीहि निवृत्तौ निवर्तते तदा नीवारादिषु तस्याप्रसक्तत्वात्। एवं अग्नये जुष्टं निर्वपामि इत्यस्य मन्त्रस्य सौर्यादिविकृतिषु सूर्याय जुष्टं निर्वपामीति वक्तव्यम्। प्रकृतिवत् विकृतिषु अतिदेशे कृतेऽपि तद्बोधकवाक्यानामश्रवणे अङ्ग संस्कारासम्भव:, ततश्चापूर्वानुत्पत्तिरिति स्यात्। अतश्च ऊहाख्यस्य प्रमाणस्य अलौकिकप्रमाणत्वेन स्वीकृतिर्मीमांसकानाम्। यद्यपि संशयनिर्णयान्तरालभावी भवितव्यतात्मक: प्रत्यय: तर्कापराभिध: ऊह: न्यायशास्त्रे न प्रमाणान्तरम् परन्तु प्रमाणानुग्राहकस्तर्क इति सिद्धान्त: तथापि मीमांसादर्शने अनुमानम्, अध्याहार:, कल्पनमित्याद्यर्थेषु ऊहशब्दप्रयोग: तस्यालौकिकं प्रामाण्यञ्च स्वीकृतम्। यथा ऊह: इति **जैमिनिसूत्रम्** प्रथमाध्यायद्वितीयपादे। तत्र शाबरभाष्यम् न माता वर्धते न पिता इत्युक्ते अन्ये वर्धन्ते इति गम्यते इति। एवं पार्वणे सौम्यास इति बहुवचनसमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्तताकल्पनम-प्यूह:। यथा अग्नये जुष्टं निर्वपामि इत्यस्य सौर्येचरौ सूर्याय जुष्टं निर्वपामि इत्येवं पदान्तरप्रक्षेप ऊहप्रमाणेन स्वीक्रियते। सचोह: द्वारान्तरप्रयुक्तान्यथाभावात्मको भवति। **जैमिनीयन्यायमालायां** नवमाध्यायप्रथमपादे-"प्राकृतस्थानपतितपदार्थान्तरकार्यत:। ऊह: प्रयोगो विकृते ऊह्यमानतयोदित:॥" इत्युक्तम्। एवं **मीमांसानुक्रमणिकायां** मण्डनश्च वर्णयति। द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊह इति **शास्त्रदीपिकायाम्।** अन्यथावगतानां पदार्थानां अन्यथाभावविषयस्तर्क: ऊह:, प्राकृतद्वारसम्बन्धिनां विकृतौ तदन्यद्वारसम्बन्धितया अनुष्ठानम् ऊह:, अतिदिष्टपदार्थस्य कार्यवशात् रूपान्तरकरणमूह इति, प्राकृतस्य पदार्थस्य विकृतौ कार्यमुखेनागतस्य तत्रत्यकार्यवशेनान्यथाभाव ऊह इति, प्रकृतौ यस्य यत्सम्बन्धित्वं श्रुतम् विकृतौ तस्य तदन्यसम्बन्धित्वं ऊह इति, द्वारान्तरसम्बन्धनिमित्तको मन्त्रादेरन्यथाभाव ऊह इति, येन सम्बन्धेन यद्धर्मावच्छिन्नत्वं

यस्य प्रकृतौ श्रुतम्, विकृतौ तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नवृत्तित्वमूह इति लक्षणानि **मीमांसानुक्रमाणिका, भाट्टदीपिका भाट्टसार न्यायरत्नमालादिषु** ग्रन्थेषु दृश्यन्ते। व्रीहिसम्बन्धितया अवगतानां अवहननप्रोक्षणादीनां नीवारादिपदार्थसम्बन्धित्वप्रतिपादनम्, आग्नेये प्रकृतौ अग्नये जुष्टं निर्वपामीति श्रुतस्य निर्वापस्य विकृतौ सौर्ययागे सूर्याय जुष्टं निर्वपामीति ऊहनम्, एवं प्रकृतौ स्मारकतासम्बन्धेन स्मार्यतासम्बन्धेन वा अग्निसम्बन्धितया श्रुतस्य ''देवस्यत्वासवितुः प्रसवे अश्विनोर्बाहुभ्यां'' इत्यादिमन्त्रस्य विकृतौ सौर्ये स्मारकतया स्मार्यतया वा सूर्यसम्बन्धित्वम् इत्याद्युदाहरणम्। सोऽयमूहः **मन्त्रसामसंस्कार**भेदेन त्रिविधः। दैक्षो नाम अग्नीषोमीयपशुविध्यन्तः यागः, दीक्षितेन अनुष्ठेयेषु पशुषु प्रथमभावित्वात्। तत्र दैक्षपशौ पाशप्रमोचने अनुमन्त्रणमन्त्रद्वयमुक्तम्-अदितिः पाशं प्रमुमोक्त्वेतम्'' इत्येकवचनान्तमेकम्। अदितिः पाशान् प्रमुमोक्त्वेतानिति बहुवचनान्तमपरम्। तत्र बहुवचनान्तस्य किं दैक्षे एव विकल्पेन निवेशः? उत बहुपाशिकायामुत्कर्ष इति संशये दैक्षे पाशबहुत्वविरहात् पूषानुमन्त्रणमन्त्रवत् उत्कर्ष एवेति प्राप्ते पाशप्रातिपादिकार्थस्य विभक्त्यर्थकर्मत्वस्य प्रमोचनभावनायाश्च प्रधानभूतायाः दैक्षेऽपि सम्भवेन गुणभूतबहुवचनमात्रानुरोधेन उत्कर्षकल्पनाया असम्भवात् बहुवचनस्य शक्यबहुत्वाश्रयावयवकत्वसम्भवेन एकत्वलाक्षणिकत्वमाश्रित्य दैक्षे एव विकल्पेन निवेशः। इत्थञ्च बहुवचनान्तमन्त्रस्य द्विपाशिकायां विकृतौ द्विवचनान्ततया स्वीकार ऊह प्रमाणेन कार्यः। एवं अग्नये जुष्टं निर्वपामि इति व्रीहीणां मेधः सुमनस्यमान इति च मन्त्रौ सौर्यादिषु नीवारादिषु च सूर्याय जुष्टं निर्वपामि नीवाराणां मेधस्सुमनस्यमान ऊह्येते इत्यपि **मन्त्रोहस्योदाहरणम्। सामोहस्योदाहरणन्तु**-कयानश्चित्रआभुवत् इत्यादयः कशब्दघटिता ऋचः **कवत्यः**। कवतीषु रथन्तरं गायति, यद्योन्यां तदुत्तरयोर्गायति इत्यादि सामातिदेशे, स किं यत्र स्थाने योनौ एकारद्यक्षरसंस्कारिका आ-इ भावादिरूपा गीतिः श्रुता, तत्र स्थाने उत्तरागतवर्णान्तरे सा ऊहितव्या, उत, तत्र वा अन्यत्र वा उत्तरागत एकार एव सा ऊहितव्या न तु वर्णान्तरे इति संशये यत्र स्थाने योनौ आ-इ भावः श्रुतः तत्रैव स्थाने अतिदेशवशेन तादृशगीतेः कर्तव्यतावगमत् उत्तरागते तादृशस्थानपठितवर्णान्तरेऽपि

सा कर्तव्या इति प्राप्ते ऊहप्रमाणबलेन तत्रैवं सिद्धान्त: क्रियते। वर्णान्तरे अकारादौ आ-इ भावकरणे तस्य तदक्षराभिव्यञ्जकत्वासम्भवेन आरादुपकारतापत्ति:, आ-इ-भावे अवर्णेवर्णात्मकस्य संध्यक्षरस्य एकारस्य विश्लेषरूपसंस्कारार्थ:। न हि एकारो नाम वर्णान्तरम्, तत्र मानाभावात्। किन्तु अवर्णेवर्णात्मक:, स्मृतिसहकृतप्रत्यक्षेण तथैवा-वगते:। ततश्च तद्विश्लेषकस्य आ+इ भावस्य तत्स्थानपठिताक्षरान्तरविश्लेषकत्वासम्भवात् यत्रैव उत्तरादौ एकार: तत्रैव आ-इ भाव: कार्य इति। एवं गिराशब्दस्य स्थाने इराशब्दयुक्तगेयसामस्वीकारोऽपि ऊहप्रमाणेनैव भवति। तथाहि ज्योतिष्टोमे श्रूयते-यज्ञायज्ञीयेन स्तुवीत इति। यज्ञायज्ञ इत्यनेन शब्देन युक्तायाम् ऋचि उत्पन्नं साम यज्ञायज्ञीयम्। तस्याम् ऋचि गिराशब्द: पठ्यते-यज्ञायज्ञा वो अग्नये गिरागिराच दक्षसे इति। तत्र सामगा: योनिगानमधीयाना: सहैव गकारेण गायन्ति-गभीरा, गिरा इति। ब्राह्मणे तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते-ऐरं कृत्वोद्गेयमिति। गिराशब्दे गकारलोपादिराशब्दो भवति। इराया: सम्बन्धि गानमैरम्। तादृशं कृत्वा प्रयोगकाले उद्गानं कर्तव्यम् इत्यर्थ:। तत्र योनिगान-ब्राह्मणयो: समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोगे प्राप्ते तत्रैवं सिद्धान्त: कृत:। न गिरा गिरेति ब्रूयात्, यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत् इति गकारसहितगाने बाधमुक्त्वा गकाररहितमिरापदं गेयत्वेन विधीयते। तत्र गिरापदस्थाने इरापदोपदेशात् गिरापदे निवृत्ते यस्तद्गतो गीत्यंश: स गेयमपेक्षते। इरापदमपि सामसाध्यस्तुतौ सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते। ततश्च तयोर्नष्टाश्वदग्धरथसम्बन्धेन योगो भवति। तत्पदादेरिकारस्य गानार्थमाकारो यकार: इकारश्चेति त्रयो वर्णा: प्रयुज्यन्ते। तत: आयीरा यीरा इत्येव गातव्यमिति साम ऊहयते। **संस्कारोहस्तु**-नीवाराणां व्रीहिस्थाने निवेशात् तत्र अपूर्वोत्पत्त्यर्थं तदीयावधातप्रोक्षणादिसंस्काराणां प्रवृत्ते: स्वीकार इति पूर्वमुक्तमुदाहरणम्। परिधौ यूपधर्मानुसरणमप्युदाहरणमिति मीमांसानुक्रणिकायाम्। अन्ये च ऊहभेदा अवान्तरभेदाश्च **मीमांसाबालप्रकाशे** विस्तृता:। शावरभाष्य-शास्त्रदीपिकाजैमिनीयन्यायमालासु न्यायरत्ने च प्राधान्येन स्वीकृता: भेदास्तु-

मन्त्रोह-सामोहयोः पृथङ्निर्देशः गोबलीवर्दन्यायेनेति न्यायरत्नमालायाः टिप्पण्यां दृश्यते।

**बाधप्रमाणम्**-प्रकृतिवत् विकृतिः कर्तव्येति सामान्यतोऽतिदेशनियमे सत्यपि तथा स्वीकारे यस्याङ्गस्य विकृतौ प्रयोजनं तादृशस्याङ्गस्य विकृतौ अनुष्ठानं न भवति। प्रकृतौ सप्रयोजनानां विकृतौ चाप्रयोजनानां विकृतान्वयो न सम्भवति। ततश्च प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतावनुष्ठीयन्ते-असति तस्मिन् प्रयोजने विकृतौ तानि न चोदितानि भवन्ति-अतो नानुष्ठेयानि। ततश्च प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेश अतिदिष्टपदार्थस्य रूपान्तरकरणाख्य ऊहश्च त्यज्यते। अयञ्च त्यागः बाधप्रमाणसाध्यः। यथा-सर्वत्र दर्भैः परिस्तरणे बर्हिः स्तृणातीति वाक्येन प्राप्ते आभिचारकर्मणि शरमयं बर्हिः भवतीति वाक्यात् दर्भैःपरिस्तरणं बाध्यते। एवं प्राजापत्येष्टौ दधि मधु धृतमापो धानास्तण्डुलाः, तत्संसृष्टं प्राजापत्यमिति श्रूयते। एतेषां तण्डुलानां व्रीहिभिर्यजेत यवैर्वा इति विहितो यः प्रकृतिद्रव्योपादाननियमोऽस्ति, न तत्र तस्य प्राप्तिरस्ति। अयमपि बाधप्रमाणसाध्यः।

**बाधलक्षणम्**-अतिदिष्टानां अङ्गानां विकृतौ अननुष्ठानम्, सामान्यतोऽतिदेशेन प्राप्तो धर्मः यत्र येन विशेषेण बाध्यते, साधारणस्य शास्त्रस्य विशेषविषयादिना सङ्कोचः क्लृप्तरूपस्य बाध इति लक्षणानि न्यायरत्नमालादिषु विद्यन्ते। ततश्च प्रकृतितो अतिदेशतः सम्भवप्राप्तिकानां अङ्गानां केन चित् कारणेन विकृतौ अननुष्ठानम्, प्रकृतिसम्बन्धिनः पदार्थस्य विकृत्यङ्गत्वग्राहकप्रमाणविषयत्वाभावो वा बाध इति वक्तव्यम्। **बाध-भेदाः**-अर्थलोप-प्रत्याम्नान-प्रतिषेधभेदेन बाधस्त्रिविधः। तेषु अवधातस्य दृष्टप्रयोजन-द्वारेणोपकारकत्वं प्रकृतावालोच्य विकृतिषु कृष्णलेषु तथा भावासम्भवात् पूर्व संजातस्य सामान्यज्ञानस्य बाधः स्वीक्रियते। तथाहि विकृतिरूपाणां काम्येष्टिनां काण्डे "प्राजापत्यं धृते चरुं निर्वपेत् शतकृष्णलमायुष्काम" इति पठितम्। **कृष्णल**शब्दःसुवर्णशकलवाची।

प्रकृतौ व्रीहिनवहन्ति इति पुरोडाशहेतूनां व्रीहीणामवधातो विहितः। सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशात् प्राप्तः। व्रीह्यादाविव वैतुष्यरूपप्रयोजनस्य कृष्णलेषु लोपात् तदनतिदेशे अवधातस्याप्यनतिदेशात् बाधः। धृतेश्रपयति प्रत्यक्षोक्त्या पाकस्स्वीक्रियते, अवधाते तु सोक्तिर्नस्वीक्रियते इति **अर्थलोपाद् बाधः**। प्रत्याम्नानस्य उदाहरणन्तु- सोमाय रौद्रं चरुं निर्वपेत् इति विहिते इष्टिविशेषे शरमयं बर्हिरिति श्रुतम्। तत्र बर्हिः पदलक्षिते बर्हिःकार्ये शराणां विधानात् प्रत्यक्षश्रुतेरेव चोदकप्राप्तबर्हिबाधः। इदं **प्रत्याम्नान ( वचन ) कृतो बाध** इत्यस्य उदाहरणम्। ततश्च वेदिपरिस्तरणादिकार्ये प्राकृतवचनेन कुशैः प्राप्ते शरमयं वर्हिर्भवति इति विहितैश्शरैः कुशानां बाधः। **शरा** नाम तृण-विशेषाः। एवं खलेवाली यूपो भवतीत्यादौ सिद्धायां खलेवाल्यां यूपमाच्छेत्स्यता होत-व्यमिति छेदनार्थायाः आहुतेर्लोपोऽपि बाधंस्य **प्रत्याम्नानाख्यस्यो**दाहरणम्। तथाहि- सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकाम इति विहिते साद्यस्क्रनामके कस्मिंश्चित् यागे सह पशूनालभेत इति श्रुतेः साद्यस्क्राःपशवः सन्ति। तेषु पशुषु वेद्युत्तरवेदियूपाः शास्त्रीयसंस्कारनिरपेक्षा एव गृह्यन्ते। साद्यस्क्रेषु उर्वरा भूमिः खलेवालीयूप इति आश्वलायनीय वचनात्। खले वलीवर्दबन्धनाय निखाता मेढिः **खलेवालीत्यु**च्यते। तेषाञ्च पशूनामग्रीषोमीयपशुविकृतित्वात् तदीययूपकार्याः पशुनियोजनादयः खलेवाल्यां क्रियन्ते। तथा प्रकृतौ यूपम् आप्तुं गमिष्यतः पुरुषस्य "यूपमच्छैष्यता होतव्य" मिति प्रत्याम्नानेन( वचनेन) आहुतिर्विहिता। यूपमच्छैष्यत इति वाक्यस्यायमर्थः-अयूपं खादिरादिकाष्ठविशेषं शास्त्रीयच्छेदनादिसंस्कारैः यूपीकर्तुं काष्ठस्य शास्त्रीय छेदनयोग्यतायै होमः कर्तव्य इति। खलेवाल्याः शास्त्रीयछेदनं नास्ति। पूर्वमेव छिन्नस्य काष्ठस्य कृषीवलैः खले निखातत्वात्। ततश्च साद्यस्क्रेषु उर्वरा भूमिः, खलेवालियूप इति वचनात् छेदनद्वारलोपाहुतिर्न कर्तव्येति वचनात् आहुति-बाधः। सामान्यरूपस्य चोदकस्य विषयविशेषात् सङ्कोचेन अन्यत्र संचारः **प्रातिषेधिकवाधस्यो**दाहरणम्-यथा नार्षेयं वृणीते इति। तथाहि-दर्शपूर्णमासविकृतौ महापितृयज्ञे अतिदेशप्राप्तस्य होतृवरणस्य न होतारं वृणीते इति निषेधः श्रूयते। तथा यज्ञेषु येयजामहं करोति नानुयाजेषु येयजामहं

करोति इत्यनारभ्य श्रूयते। प्रसङ्गात् **येयजामह** पदार्थो व्याख्यायते। तैत्तरीय संहितायां आश्रावयेति चतुरक्षरम्, अस्तु श्रौषट् इति चतुरक्षरम्, यज इति द्व्यक्षरम्, येयजामहे पञ्चाक्षरम्, द्व्यक्षरो वषट् कार एषवै सप्तदश: प्रजापतिर्यज्ञमन्वायत्त इति श्रूयते। अयमेवार्थ:''चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स नो विष्णु: प्रसीदतु॥'' इति स्मृतिसौकर्याय श्लोकरूपेणोच्यते। अस्मिन्ननुवाके आश्रावयेत्यादिमन्त्रा: विधीयन्ते। अयं पञ्चानां समुदाय: सप्तदशाक्षरोपेतत्वात् प्रजापतिसृष्ट-त्वाच्च सप्तदश: प्रजापतिरित्यभिधीयते। सचायं मन्त्रसमुदाय: सप्त यज्ञमन्वायत्त: सर्वयज्ञेष्वनुगत:। एतद् जानन् यजमान: संपूर्णेन यज्ञेन प्रतिष्ठितो भवति। वैकल्याभावात् अयं यज्ञात् न भ्रष्टो भवति। प्रथमतोऽध्वर्यु:आग्नीध्रं प्रति आश्रावयेति वदति हे आग्नीध्र यक्ष्यमाणदेवतां प्रति तुभ्यमिदं दीयत इत्याभिमुख्येन श्रवयेति तदर्थ:। तत: आग्नीध्रो श्रौषड् इति वदति। एतन्मन्त्राद्यभागेन अस्तु-इत्यन्तेन अध्वर्युक्तगङ्गीकृत्य द्वितीयेन श्रौषडिति भागेन देवतायै हविर्दानं श्रावयति-हे देवा:युष्मद्विषयं इदं हविर्दानं शृणुतेति **श्रौषडित्यस्यार्थ:**। ततो यज इति अध्वर्यु: होतारं प्रति वदति। याज्यमन्त्रं पठ इति तदर्थ:। ततो येयजामहे इति मन्त्रं पठित्वा याज्यामन्त्रं च उच्चार्य तदन्ते वषडिति मन्त्रं पठति। येऽध्वर्युणा यजेति प्रेषितास्ते वयं यजामहे-याज्यामन्त्रं पठाम इति तदर्थ:। याज्यामन्त्रानन्तरमुच्चारितस्य **वषट्कारस्य हविर्दीयत इत्यर्थ:**। एवं सर्वत्र यज्ञे प्रक्रिया। येयजामहे इति मन्त्रघटितस्य हकारान्तभागस्य अनुकरणं कृत्वा उच्चारणार्थेन अकारेण संयोज्य तस्याकारान्तशब्दस्य द्वितीयैकचनं येयजामहमिति। तथा च यज्ञेषु येयजामहं करोति, नानुयाजेषु येयजामहं करोति इति पूर्वोक्ते किं महापितृयज्ञे होतृवरणतन्निषेधयो: अनूयाजेषु येयजामह तन्निषेधयोश्च विकल्प:? उत महापितृयज्ञे होतृवरणस्य अनूयाजेषु येयजामहस्य च नित्यं वर्जनमेवेति संशय:। तदर्थं किमयं प्रतिषेध: पर्युदासो वेति चिन्तनीयम्। तत्र प्रतिषेधत्वमेव युक्तम्, पर्युदासत्वे लक्षणाप्रसङ्गात्। **प्रतिषेधत्वञ्च** आख्यातार्थप्रतियोगिकाभावबोधकवाक्यत्वम्। **पर्युदासत्वञ्च** आख्यातार्थव्यतिरिक्त प्रतियोगिकान्योन्याभावबोधकवाक्यत्वम। न होतारं वृणीते इत्यत्र होतृवरणभावनया सह नञर्थस्याभावस्य प्रतियोगितया अन्वये प्रतिषेधो

भवति। तत्र न लक्षणा, नञर्थस्य प्रधानभूतभावनान्वयसंपत्तिश्च। न होतारं इत्यस्य होतृवरणव्यतिरिक्तं कुर्यादिति अर्थमङ्गीकृत्य पर्युदासत्वस्वीकारे तु नञः अन्योन्याभाववत् लाक्षणिकत्वं गुणभूतधात्वर्थान्वयश्च। एवं नानूयाजेषु येयजामहं करोतीत्यर्थमङ्गीकृत्य पर्युदासत्वस्वीकारेऽपि पूर्वोक्तदोषापत्तिः। तस्मादुभयत्रापि प्रतिषेधस्यैवावश्यकतया प्रतिषेधस्य च प्राप्तिसापेक्षतया, प्राप्तेश्च प्रकृते शास्त्रीयतया शास्त्रप्राप्तस्यात्यन्तबाधायोगात् अगत्या ग्रहणाग्रहणवत् विकल्पः। स्वीक्रियते हि नातिरात्रे षोडशिनं गृह्णाति। अतिरात्रे षोडशिनं गृह्णाति इति शास्त्रीयबलात् षोडशिग्रहणाग्रहणयोः अतिरात्रे विकल्पः। तत्र षोडशिग्राहणे फलभूयस्त्वं तदभावे तु फलभूयस्त्वाभावेऽपि इतराङ्गैरेव क्रतूपकारसिध्या फलसिद्धिः। इत्थञ्च प्रकृत महापितृयज्ञे होतृवरणस्य अनूयाजेषु येयजामहस्य च करणे फलमूयस्त्वम्। अकरणे तु इतराङ्गैरेव क्रतूपकारसिध्या फलसिद्धिरिति प्राप्तम्। परन्तु **विकल्पस्य अष्टदोषदुष्टत्वात्** तदपेक्षया लक्षणाश्रयणस्य युक्तता। **दोषाष्टकञ्च** विधिनिषेधशास्त्रार्थयोः व्रीहियवशास्त्रार्थयोर्वा पर्यायेणानुष्ठाने भवति। तद्येन प्रथमं विधिशास्त्रं व्रीहिशास्त्रं वा गृहीतम्, तस्य निषेधशास्त्रे यवशास्त्रे वा प्राप्तप्रामाण्य-परित्यागः। अप्रतीताप्रामाण्यकल्पनमिति दोषद्वयम्। अनन्तरं तेनैव प्रयोगान्तरे निषेधशास्त्रस्य यवशास्त्रस्य वा ग्रहणे कृते तत्र पूर्वस्वीकृतप्रामाण्यपरित्यागः परित्यक्तप्रामाण्यस्वीकार इति निषेधशास्त्रे यवशास्त्रे वा चत्वारो दोषाः। एवं निषेधशास्त्रस्य प्रथमग्रहणे पूर्वोक्तप्रकारेण विधिशास्त्रे व्रीहिशास्त्रे वा चत्वारो दोषाश्च प्रादुःष्युः। ततश्च अष्टदोषदुष्टविकल्पापेक्षया लक्षणाश्रयणस्य युक्ततया च पर्युदासत्वमेव न्याय्यम्। एवञ्च न होतारं वृणीते इत्यत्र नञ्धातुभ्यां होतृवरणव्यतिरिक्तं लक्षयित्वा तस्य आख्यातार्थान्वयः स्वीकार्यः। नञः अन्योन्या-भाववद्बोधनेऽपि अन्योन्याभावे धात्वर्थस्य प्रतियोगिता-सम्बन्धेन प्रकारत्वानुपपत्तेः, धात्वर्थस्याख्यातार्थातिरिक्तप्रकारतया अन्वयस्याव्युत्पन्न-त्वात्। नानूयाजेषु इत्यत्रापि नञनूयाजपदाभ्यां अनूयाजव्यतिरिक्तं लक्षणीयम्। सप्तम्यर्थान्वयानुरोधात्। इत्यञ्च प्रकृतिवत् कुर्यादिति यत् तत् होतृवरणव्यतिरिक्तं कुर्यात्, एवं यज्ञेषु येयजामहं करोतीति यत् तत् अनूयाजव्यतिरिक्तेषु येयजामहं

कुर्यादित्येवं वाक्यैकवाक्यतया एकभावनायामपरभावनाया: अभेदसम्बन्धेन प्रकार-त्वम्, आख्यातद्वयसत्वे तथैवावश्यकत्वात्, यथा पुरोडाशं चतुर्धा करोति आग्नेयं चतुर्धा करोति इति वाक्ययोरेकवाक्यत्वं तद्वत्। परन्तु तत्र तन्मात्रसंकोचार्थतया उपसंहार-रूपत्वम्, प्रकृते तु तदन्यसंकोचार्थतया पर्युदासरूपत्वम्। अतो महापितृयज्ञे होतृवरणस्य अनूयाजेषु येयजामहस्य च नित्यं वर्णनम्। तदयं वाक्यार्थ: -पित्र्यायां आर्षेयवरण-व्यतिरिक्तं प्रकृतिवत् कुर्यात्, अनूयाजव्यतिरिक्तेषु यजतिषु येयजामहं कुर्यात्, इति तदयं **प्रतिषेधात् बाधस्य उदाहरणं** भवति। प्रतिपादितश्चायं न्यायरत्नमालायाम्, जैमिनिसूत्रभाष्ययो: दशमाध्यायस्याष्टमे पादे च।

आगमरूपविचारिणि अधिकरणसहस्रशिक्षितविपक्षे ।
स्वामिनि जैमिनियोगिनि उपरज्यति हृदयमस्मदीयमिदम् ॥
आदौ धर्मे प्रमाणम् विविधाविधिभिदाशेषताञ्च प्रयुक्तिम्
पौर्वापर्याधिकारौ तदनु बहुविधञ्चातिदेशं तथोहम् ।
बाधं तन्त्रं प्रसङ्गं नयम् अनयशतै: सम्यगालोचयद्भ्यो
भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥

# षष्ठं कुसुमम्

वर्णितानि मीमांसादर्शनाभिमतानि लौकिकान्यलौकिकानि च प्रमाणानि। **प्रमेय विचार** इदानीं प्रस्तूयते। यद्यपि वेदार्थ-धर्म-कर्मणां विचाराय प्रवृत्ते मीमांसादर्शने सूत्रभाष्यवार्तिकादिषु उद्ग्रन्थेषु वा प्रमेयविचारे विशिष्टं ऐदम्पर्यं न दृष्टिगोचरं भवति परन्तु प्रमाणविचारस्य प्रमेयफलकत्वात् सूत्रभाष्यादिषु प्रमाणविचारस्य च विद्यमानत्वात् अर्वाक्तनेषु **प्रकरणपञ्चिका मानमेयोदय भाट्टचिन्तामणि तन्त्ररहस्या**दिषु प्रमेयविचार: प्रस्तुतो विद्यते। तत्रापि विशिष्योद्ग्रन्थेभ्य: प्रमाणादि प्रमेयप्रतिपादनाय न दृश्यते। परन्तु तन्त्रान्तरोक्तान् प्रमेयान् स्वसिद्धान्तानुरूपान् प्रमेयांश्च विशदयन्ति। तान् ग्रन्थानाधारीकृत्यैव प्रमेयविचार इदानीं प्रस्तूयते। तत्र प्रमेयं नाम योऽर्थ: तत्त्वत: प्रमीयते तत् प्रमेयमिति सर्वसाधारणं लक्षणम्, ''प्रमेयं यत् परिच्छेद्यमिति'' तन्त्रवार्तिके दर्शनात् परिच्छेद्यत्वं प्रमेयत्वमिति, यद्विषयकं मिथ्याज्ञानं संसारमातनोति, यद्विषयकञ्च ज्ञानं तन्निवर्तयति तत् प्रमेयमिति च लक्षणं सर्वदर्शनसाधारणं स्वीकर्तव्यम्।

**प्रमेयविभागः** - भाट्टमते द्रब्यगुणकर्मजाति-अभावश्चेति पञ्च प्रमेयाणीति **मानमेयोदये**, द्रव्य गुणकर्मजाति-अभाव-शक्तिश्चेति षट् प्रमेयाणीति पूर्वतन्त्र-सिद्धान्त**रत्नावल्याम्**, द्रव्यगुण-कर्मसामान्य-समवाय-शक्त्य-भावा: सप्त प्रमेयाणीति **भाट्टचिन्तामण्याम्**, प्राभाकरमते द्रव्यगुणकर्मजातिसमवायसंख्यासादृश्यशक्तय: इति अष्टौ प्रमेयाणीति **तन्त्ररहस्ये**, द्रव्यगुणकर्मसामान्यसमवायशक्तिसंख्यासादृश्यक्रमाश्चेति नव प्रमेयाणीति प्रकरणपञ्चिकाव्याख्या**न्यायसिध्द्यां** दृश्यते। **द्रव्यलक्षणन्तु**- परिमाणगुणाधारो द्रव्यम्, तच्च परिमाणं अणुत्वमहत्वादि इति **मानमेयोदये**। स्वात्मनि कार्यारम्भकत्वं द्रव्यत्वमिति प्रकरणपञ्चिकाव्याख्या**न्यायसिध्यां** दृश्यते।

**द्रव्यविभागः** - पृथिव्यप्तेजोवाय्वाकाशकालदिक्चित्त-चेतनाख्यानि नव द्रव्याणीति प्राभाकरा:। पृथिव्यप्तेजो वायु-आकाश काल दिगात्ममनांसि अन्धकारश्शब्दश्चेति एकादश द्रव्याणीति भाट्टा:। तत्र वैशेषिकदर्शनवत् मीमांसादर्शनेऽपि गन्धवत्वं **पृथिव्या**

**लक्षण**मिति स्वीकृतम्। सा च पृथिवी पर्वतवृक्षादिरूपा शरीरेन्द्रियरूपा च। सा च पृथिवी गन्धरसरूपस्पर्शपरिमाणगुरुत्वनैमित्तिकद्रवत्वसंस्कारसंयोगविभाग-परत्वअपरत्ववती।

एवंविधाया: पृथिव्या: कार्यं शरीरेन्द्रियसंज्ञकम्। प्राणापानादिचेष्टाश्रयं भोगसाधनेन्द्रियाश्रयं शरीरम्। तच्च शरीरं जरायुजअण्डजस्वेदजउद्भिज्जभेदात् चतुर्विधम्। मनुष्य मृगादीनां शरीरं जरायुजम्। पक्षिसरीसृपादीनां शरीरं अण्डजम्। मशक मत्कुणादीनां शरीरं स्वेदजम्। वृक्षगुल्मादीनां शरीरं उद्भिज्जमित्युच्यते। गन्धग्राहकं घ्राणमिन्द्रियम् विषयो मृत्पाषाणादिरिति भाट्टमते। **प्रभाकरमते** तु संयोगाश्रयत्वं विभागाश्रयत्वं परिमाणाश्रयत्वं वा द्रव्यत्वमिति **द्रव्यलक्षणम्**। पाकजस्पर्शाश्रयत्वं पाकजरूपाश्रयत्वं पाकजरसाश्रयत्वं गन्धाश्रयत्वं वा **पृथिव्या लक्षणम्**। तेषां पृथिव्या असाधारणधर्मत्वात्। पृथिव्या रूपरसगन्धस्पर्शपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्वसंस्काराख्या: त्रयोदश गुणा:। पाकजरूपरसा: पृथिवीसम्पर्कात् जलादावुपलभ्यन्ते। तदपाये तदनुपलम्भात्। परन्तु गन्ध: पृथिव्या एवासाधारणो गुण:। पाकज-अनुष्णाशीतस्पर्शोऽपि पृथिव्या एव। रूपरसौ तु न नियतौ। सा च पृधिवी परमाणुलक्षणा नित्या कार्यलक्षणा तु अनित्या। कार्यन्तु शरीरेन्द्रिय विषयभेदात् त्रिविधम्। भोगायतनं मनस: त्वगिन्द्रियस्य च आयतनं शरीरम्। शरीरं योनिजमयोनिजञ्चेति द्विविधम्। योनिर्नाम शुक्रशोणितसंनिपात:। तज्जं योनिजम्। तदपि जरायुजं अण्डजञ्चेति द्विविधम्। जरायुजं मनुष्यमृगादिशरीरम्। अण्डजं पक्षिसरीसृपादिशरीरम्, उद्भिज्जं शरीरं तु नास्ति। अयोनिजत्वादिषु अन्तर्भावत्। क्षुद्रजन्तूनां शरीरं यातनाशरीरं अयोनिजम्। गन्धव्यञ्जकं धाणं पृथिवीन्द्रियम्। प्रतीयमानतया भोगसाधनं मृत्पाषाणस्थावरलक्षण: विषय:।

**जललक्षणम्**-स्वाभाविकद्रवत्वाधिकरणं जलमिति जललक्षणम्। तच्च नद नदीसागरकरकादिरूपम, रसनेन्द्रियरूपञ्चेति भाट्टा:। स्नेहाश्रयत्वम्, अपाकजरसवत्वम्, सांसिद्धिकद्रवत्वं वा जललक्षणम्। रूप रसस्पर्शपरिमाणपृथक्त्व संयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारा: त्रयोदश गुणा: जलस्य। शौक्ल्यमाधुर्यशैत्यअस्पर्श स्वाभाविकद्रवत्वानि अपाकजानि जले विद्यन्ते। कार्यरूपाणां पृथिव्यप्तेजोवायूनां

शरीरेन्द्रियविषयभेदेन त्रैविध्यं तार्किकदर्शनसिद्धम, परन्तु प्राभाकरदर्शने पृथिव्या वायोश्चैव त्रैविध्यम्, अप्तेजसोः द्वैविध्यमेव। ततश्च जलं परमाणुकार्यभेदेन द्विविधम्। कार्यञ्च इन्द्रियं विषयमिति। तत्र जलेन्द्रियं रसनम्। विषयं तु समुद्रहिमकरकादिभिन्नम्। दृढसंयोगात् करकायां काठिन्यं दृश्यते। अन्यसम्पर्कादेव जले गन्धोपलम्भः। गुरुत्वस्नेहौ जलस्य स्वाभाविकौतेजस्त्वसामान्यवत् स्वाभाविकोष्णस्पर्शाश्रयत्वं वा **तेजसो-लक्षणम्**। तच्च सूर्यचन्द्रानलनक्षत्रसुवर्णादिरूपं नयनेन्द्रियरूपञ्च। तस्य रूपस्पर्शौ उद्भूतअनुदभूतअभिभूतभेदेन त्रिविधौ भवतः। तत्रत्रायःपिण्डादिगतं उद्भूतरूपस्पर्शव-त्तेजः। नयनेन्द्रियगतं अनुद्भूतरूपस्पर्शवत्तेजः। सुवर्णे अभिभूतरूपस्पर्शवत्तेजः। बलवद्भिः पार्थिवरूपादिभिरभिभवः। तयोः रूपस्पर्शयोरेकैकस्यानुद्भवे द्विविधं तेजो भवति। प्रदीपप्रभामण्डलगतं तेजः उद्भूतरूपं अनुदभूतस्पर्शम्। तप्ते जले उद्भूतस्पर्शं अनुदभूतरूपं तेजः। पार्थिवरूपादिभिरभिभवो त्रिविधो भवति। सुवर्णे रूपस्पर्शयोरभि-भवः। चन्द्रिकायां उष्णस्पर्शाभिभवः। सद्यः प्रक्षिप्तजले तप्तायसपिण्डादौ रूपाभि-भवः। इति भाट्टाः। प्राभाकरास्तु उष्णस्पर्शवत् भास्वररूपवत् वा तेजसो लक्षणमिति वदन्ति। पररूपप्रकाशकं भास्वरमित्युच्यते। रूपस्पर्शपरिमाणपृथक्त्वंसंयोगविभागपरत्वा-परत्वद्रवत्वसंस्कारा दश गुणाः। रूपस्पर्शपरिमाणसंयोगवियोगविभागपरत्वापर-त्वलघुवेगवत्वान्नवगुणं तेज इति प्रकरणपञ्चिकाव्याख्या न्यायसिद्धिः। अणु कार्यभेदात् द्विविधं तेजः। कार्यमिन्द्रियरूपं चक्षुः। विषयस्तु भौमदिव्यौदर्याकरजभेदात् चतुर्विधः। ऊर्ध्वज्वलनस्वभावं काष्ठेन्धनप्रभवं भौमम्। अबिन्धनं चन्द्रसूर्यादि दिव्यम्। अशीतपीताद्याहारपरिणत्यर्थं औदर्यम्। सुवर्णादि आकरजम्। तेजसः भास्वरं शौक्ल्यं च रूपम्। पाकहेतुकं द्रवत्वम्। स्पर्शस्तु औष्ण्यमेव। चन्द्रचामीकरादौ अन्यसंसर्गात् अनुपलम्भः। पृथिवीसंसर्गात् गुरुत्वोपलब्धिः। सुवर्ण तैजसं असति प्रतिबन्धके अत्य-न्तानलसंयोगेऽपि अनुच्छिद्यमानजन्यद्रवत्वात् इत्यनुमानं सुवर्णं पार्थिवं पीतिमगुरुत्वा-श्रयत्वात् पटवत्, सुवर्णं न तैजसं नैमित्तिकद्रवत्वाधिकरणत्वात् घृतवदिति अनुमानेन सत्प्रतिपक्षितत्वम्। सुवर्ण यदि तैजसं स्यात् तर्हि द्रवत्वाधिकरणं न स्यात् आलोकवदिति

तर्कपराहतिः। सुवर्णं द्रवत्वाधिकरणत्वात् जलवत् अतैजसमिति अतैजसत्वे सिद्धे रुपवत्वान्न वाय्वादि, नैमित्तिकद्रवत्वानाश्रयत्वात् पीतिमाधारत्वाच्च न जलमिति च सिद्धे परिशेषात् **सुवर्णं पार्थिवमे**वेति मीमांसादर्शनाशय इति **सर्वदर्शनकौमुदीकारः**।

**वायुलक्षणन्तु**-अरूपवत्वे सति स्पर्शत्वं वार्योर्लक्षणम्। स च मन्दवातनिश्श्वासवातादिरूपः त्वगिन्द्रियरूपश्च। शीतादिषु स्पर्शविशेषेषु उपलभ्यमानेषु शीतो वायुः उष्णो वायुः अनुष्णाशीतो वायुरिति वायुद्रव्यस्यैकस्य प्रत्यभिज्ञायनमानत्वात् वायुः त्वगिन्द्रियप्रत्यक्षविषय एवेति भाट्टाः। अपाकजानुष्णाशीतस्पर्शवत्वम्, स्पर्शान्तरा भिव्यञ्जकस्पर्शवत्वं वा वायोलक्षणमिनि प्राभाकराः। स्पर्शपरिमाणपृथक्त्वसंयोग विभागपरत्वापरत्वलघुत्वसंस्काराः वायोर्गुणाः। शीतोष्णादिविरुद्धधर्मविशिष्टस्य वायोः उपलम्भात् तस्य नानात्वं प्रत्यक्षम्, सम्मूर्छनात् अनुमेयमपि। **सम्मूर्छनं** नाम समानजवयोः वाय्वोः विरुद्धदिक्क्रिययोस्सन्निपातः। वायोरूर्ध्वगमनात् स अनुमीयते। तदपि तृणादीनाम् ऊर्ध्वगमनात् अनुमीयते। प्रतिहन्यमानात् वायोः प्रतिहन्ता वायुः अन्यः तत्प्रतिहन्तृत्वात् देवदत्ताद्यज्ञत्तवत्। तृणाद्यूर्ध्वगमनं स्पर्शवद्द्रव्यवेगवद्द्रव्यसंयोगजन्यम्, अनूर्ध्वगमनस्य प्रयत्नाद्यसम्भवे सति ऊर्ध्वगमनवत्वात् ज्वलन प्रवर्तिततूलाद्यूर्ध्वगमनवदिति अनुमान-कारः। अणुकार्यभेदात् वायुः द्विविधः। इन्द्रिय विषय प्राणभेदात् कार्य-वायुस्त्रिविधः। स्पर्शोपलब्धिहेतुत्वक् इन्द्रियम्। शब्दकम्पनहेतुः मेघादिप्रेरणसमर्थः तिर्यग्गमनस्वभावो वायुर्विषयः। प्राणोऽन्तश्शरीरे रसमलधातूनां प्रेरणादिहेतुकः। मुखनासिकाभ्यां निष्क्रम-प्रवेशनात् प्राण इति संज्ञां लभते। स एकोऽपि कार्यभेदात् पञ्चधा भवति। प्राग्गमनवान् नासाग्रवर्ती प्राणः, हृदयमध्यगतो वा। अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्ती, व्यानो नाम विष्वग्गमनवान् अखिलशरीरवर्ती उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवान् उत्क्रमणवायुः। समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः। केचित् नागकूर्मकृकलदेवदत्त धनञ्जयाख्याः पञ्चान्ये वायवः सन्तीति वदन्ति। तेषु उद्गिरणकारी-वायुर्नागः, उन्मीलनकारी कूर्मः,

क्षुत्कर: कृकल:, जृम्भणकारी देवदत्त:, पोषकारी वायुर्धनञ्जय इति च। एतेषां प्राणादिष्वन्तर्भावात् प्राणादय: पञ्चैव वायुरिति केचित्।

**आकाशलक्षणन्तु**-यद्यपि भाट्टग्रन्थेषु आकाशस्य प्रत्यक्षत्वे यावान् विचारो दृश्यते तावान् आकाशलक्षणविचारे न दृश्यते परन्तु संयोगाजन्यजन्यविशेषगुण-समानाधिकरणविशेषाधिकरणं आकाश इति विशिष्टावकाशाश्रयो वा आकाशमिति तस्य लक्षणं वक्तव्यम्। आकाशे खगश्चरति, आकाशेऽन्धकार: नीलं नभ इत्याद्यनुभवात्, अधिष्ठानप्रत्यक्षत्वमन्तरेण आकाशे नीलं नभ इति भ्रान्तेरयोगात् नयनोन्मीलनानन्तरमेव आकाशस्य आबालवृद्धं प्रत्यक्षतया अध्यवसीयमानत्वात् शब्दस्य द्रव्यत्वात् आकाशस्यापि द्रव्यत्वेन शब्दगुणकत्वाभावाच्च आकाश: चाक्षुषप्रत्यक्षविषय एवेति भाट्टा:। स च एक: नित्योऽपि उपाधिभेदात् घटाकाशादिभेदं लभत इत्यपि भाट्टा:। प्राभाकरास्तु शब्दस्य गुणत्ववादिन:। तेषां मते शब्दगुणकमाकाशम् इति लक्षणम्। अचाक्षुषं व्योम द्रव्यत्वे सति अरूपित्वात् आत्मवदिति अनुमानेनाकाशस्य अप्रत्यक्षत्वं प्राभाकरास्साधयन्ति। तस्य परिमाणपृथकत्वसंयोग विभागशब्दा: पञ्च गुणा इति च प्राभाकरा:।

**काललक्षणम्**-चिरादि व्यवहारासाधारणकारणद्रव्यं, परापरव्यतिकरानुमेय:, सर्वाधार इति वा काललक्षणमिति भाट्टा:। एकस्मिन्नेव देशे एकस्य भावाभाव-व्यवहारस्थापक: काल इति लक्षणमपि केचन वदन्ति इति **तार्किकरक्षा**। प्रात:कालोऽयं सायंकालोऽयमित्यादि प्रत्ययानां सूर्योदादिदर्शनानुगृहीतत्वात् नयनजन्यत्वात् काल-स्यापि प्रत्यक्षत्वं भाट्टा: स्वीकुर्वन्ति, नित्य: स्पर्शरहित: सर्वगत: सर्वसंयोगपरममहत्व-वान् च काल इति, विभुरेकोऽपि सन् उपाधिभेदात् कलाकाष्ठादिसंज्ञाभेदान् लभते इति भाट्टा:। प्राभाकरास्तु चिरादिर्विशिष्ट प्रत्ययलिङ्ग: काल इति लक्षणं वदन्ति। कालो न प्रत्यक्ष: अरूपित्वात् मनोवदिति अनुमानेन कालस्य अप्रत्यक्षत्वं अनुमेयत्वञ्च साधयन्ति, कालश्च नित्य: निरवयव:, स्पर्शशून्य: सर्वगत: परममहत्ववान् चेति स्वीकुर्वन्ति। अगत्वा सर्वमूर्तिमद्भि: युगपत्संयुज्यमानत्वं **सर्वगतत्वम्**, सर्वसंयोगिसमानदेशत्वं **परममहत्वमिति** च तेषामाशय:।

**दिग्लक्षणम्**-आदित्यसंयोगोत्पाद्यपरत्वापरत्वसमवायिकारणाधारत्वे सति परत्वापरत्वानाधारत्वम्, अनियतपरत्वापरत्वासमवेततराश्रयत्वे सति सर्वगतत्वम्, पूर्वापरादिव्यवहारहेतुत्वं वा दिशो लक्षणमिति भाट्टाः। तेषां मते पूर्वापरादिप्रत्ययानां नेत्र मात्राधीनत्वात् कालविषयत्वाच्च दिशोऽपि प्रत्यक्षत्वं स्वीकृतम्, सा चैका नित्या च। उपाधिवशात् पूर्वापरादिभेदम्, कर्णशष्कुल्यवच्छेदाच्च श्रोत्रमिति संज्ञां लभते। प्रातः पूर्वस्यां दिशि देवदत्तो दृष्ट इति प्रतीतिवशात् दिशः विशेषणविधया, प्रत्यक्षमिति भाट्टाः। प्राभाकरास्तु इतःप्रागिति विशिष्टप्रत्ययलिङ्गा दिगिति लक्षणं वदन्तः इतः प्रागिति अवच्छेदहेतुर्दिगिति विशदयन्ति। रुपाभावात् स्पर्शाभावाच्च दिश अनुमेया एव न प्रत्यक्षम्, विशेषगुणरहितनित्यद्रव्यत्वात् मनोवत् दिगप्रत्यक्षा परन्तु अनुमेयैव। परिमाणसंयोग-विभागपृथक्त्वानि दिशो गुणा इति च प्राभाकराः।

**आत्मलक्षणम्** कर्मफलभोक्ता देहेन्द्रियज्ञानसुखेभ्यो भिन्नः प्रतिशरीरं भिन्नः विभुः नित्यः भोगस्वर्गापवर्गभाक् मानसप्रत्यक्षगम्यः चैतन्याश्रयः स्वप्रकाशश्चात्मेति भाट्टाः। कर्तृत्वादीनां प्रकृतिधर्मत्वस्वीकारे कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्येनानुभवात् यः कर्ता स एव भोक्ता इत्यवश्यं वक्तव्यम्। अन्यथा अन्यकृतेनान्यस्य भोग उच्यमाने अनुभवोच्छेदप्रसंङ्गोऽव्यवस्था च स्यात्, तथा अकृताभ्यागमादिदोषोऽपि दुर्वारः, अतः नासङ्ग उदासीन चिन्मात्रारूप आत्मा किन्तु तद्विलक्षणः। तथाहि अहं मामन्यं च न जानामि इत्यनुभवात् आत्मा अंशद्वयोपेतः। तत्रैकश्चिदंशः, द्वितीयोऽचिदंशः, चिदंशेन तस्य द्रष्टृत्वम्, सोऽहमिति प्रत्यभिज्ञाविषयत्वञ्च। अचिदंशे ज्ञानसुखादिरूपपरिणामित्वम्, मामहं जानामि इति ज्ञेयत्वञ्चेति **चिदचिद्रूप आत्मेति** भाट्टानामाशयः, ततश्च भाट्टमते आत्मनः ज्ञानकर्तृत्वम्, ज्ञानविषयत्वमुभयमभिमतं भवति। प्राभाकराणां मते तु- देहेन्द्रियप्राणादीनामात्मत्वाङ्गीकारे तेषामनित्यतया कृतहान्यकृताभ्यागमदोषप्रसङ्गः। मनसो नित्यत्वेऽपि तस्य परमाणुस्वरूपत्वेन देहव्यापिसुखाद्यनुपलब्धेः प्रसङ्गात् नात्मत्वम्। तदर्थं देहसमपरिमाणत्वेऽङ्गीक्रियमाणेऽनित्यतया पूर्वोक्तदोषापत्तिः। ज्ञानमात्रस्य तु गुणत्वेन गुण्याश्रितत्वनियमात् अहं जानामीत्यनुभवाच्च नात्मत्वम्। किन्तु तेभ्यो भिन्न एव

आत्मा। स च ज्ञानाश्रयः स्वतोजडः सुखदुःखादिमत्वेन तद्धेतुविहितनिषिद्धक्रिया-कर्तृत्वस्यापरिहार्यत्वात् कर्ता च। अकृताभ्यागमादिदोषापत्तेर्नित्यः प्रतिशरीरं भिन्नः, स एवाहं प्रत्ययगोचरः, ज्ञानेच्छाप्रयत्नादयस्तु तस्य गुणाः। ततश्चायमात्मा इहलोक-परलोकगमनाय विभुः। कर्तृत्वभोक्तृत्वसिध्यर्थं तस्य नित्यत्वम्, चेतनत्वञ्चैषितव्यम्। सुखदुःखादिव्यवस्थासिद्धये बुद्धमुक्तादिव्यवस्थासिद्धये च स प्रतिशरीरं भिद्यते। तस्मात्तस्य नानात्वम्। सोऽयमात्मा अनुभवरूपेषु स्मृतिरूपेषु सर्वेष्वपि ज्ञानेषु आश्रयत्वेन कर्तृत्वेन भासते, न तु कर्मतया। अतो न ज्ञानरूपः, नापि विषयरूपः, किन्तु उभयविलक्षणो भवति। स एव प्रमाता-आश्रयः कर्ता क्षेत्रज्ञः जीवात्मेति शब्दैः व्यवह्रियते। तथा च बुध्याद्याश्रत्वं भोक्तृत्वम् मितौ कर्तृत्वम्, वा आत्मनो लक्षणम्। परिमाण पृथक्त्व संयोग विभाग बुद्धि सुख दुःखेच्छाद्वेष प्रयत्न धर्माधर्म संस्काराः त्रयोदश आत्मनो गुणा इति प्राभाकराः। स्पष्टञ्चेदं प्रकरणपञ्चिकाया**स्तत्त्वालोके**।

**मनसो लक्षणम्**-सुखाद्यापरोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमिन्द्रियं विभुपरिमाणम-स्पन्दञ्च मन इति भाट्टाः। मनसः परिमाणविषये प्रायशो मीमांसकेषु मतद्वयं वर्तते-विभु अणुपरिमाणञ्चेति भाट्टमतानुयायिभिरङ्गीकृतम्। तत्रानुमानं प्रमाणयन्ति-मनो विभु स्पर्शानर्हद्रव्यत्वात् अनारभ्यारम्भकद्रव्यत्वात् ज्ञानासमवायिकारणसंयोगाधारत्वात् आत्मवत्। एतदुपपादनाय विभुद्वयसंयोगोऽङ्गीक्रियते। स च नित्य इति च। अतएव अष्टावधानवतां अवधानादौ अन्येषां दीर्घशष्कुलीभक्षणादौ च युगपद् सर्वेन्द्रियैर्ज्ञानोत्पत्ति रुपपद्यते। ततश्चाकाशादिवन्मनो विभु, पृथिव्याद्यन्यतमप्रकृतिकं, तेभ्योऽन्यद्वा मनः सुखाद्यपरोक्षसाधनतया मनसस्सिद्धिः। मनश्चान्तरेषु आत्मगुणेषु स्वतन्त्रं प्रवर्तते। न बाह्येषु। तेषु तु चक्षुरादीन्द्रियद्वारा प्रवर्तते। अत एवास्य अन्तरिन्द्रियव्यवहारः। वर्णितञ्चेदं **मानमेयोदये न्यायसिद्धान्ततत्त्वामृते आनन्दज्ञानीयतर्कसङ्ग्रहे च**। गागाभट्टीये **भाट्टचिन्तामणौ** तु अणु मन इति दृश्यते। सुखीति प्रत्यक्षमिन्द्रियजन्यम् प्रत्यक्षत्वादित्यनुमानमपि वर्णितम्। भाट्टमतानुयायी मण्डनाचार्योऽपि "मनोभूतपरिस्पन्द आत्मन स्तत्प्रयत्नजः" इति भावनाविवेके वदन् मनसोऽणुत्वमभिप्रैति। अणुनः मनस

एवेन्द्रियभाव इति वदन्ती न्यायकणिकापि मनसोऽणुत्वादिनी। ततश्च प्राचीनामीमांसकाः मनसोऽणुत्ववादिनः, नवीनास्तु भाट्टभतानुयायिनः सकलशरीरव्यापि मनोरथाभिमानिक सुखदुःखादिदर्शनात् व्यापकं मन इति वदन्ति। प्राभाकरास्तु युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति न्यायसूत्रम्, आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गमिति वैशेषिकसूत्रञ्चानुसरन्तः विभुनात्मनाधिकृतेषु चक्षुरादीन्द्रियेषु नानार्थसम्बद्धेष्वपि यत्संयोग-क्रमवशात् ज्ञानोत्पत्तिक्रमः प्रक्रमते तन्मनः। एवञ्चाणुनः प्रतिशरीरं एकस्य मनसस्सिद्धिरिति वदन्ति। प्राभाकरैर्विभुद्वयसंयोगो नाङ्गीक्रियते। विभुत्वसाधक हेतवः धर्मिग्राहकप्रमाणबाधिता भवन्तीति तेषामाशयः। तथा च द्रव्यानारम्भकत्वे सति अणुद्रव्यं मनः, सुखादेरपरोक्ष्यस्य साधनं इन्द्रियं मनः, अक्षजन्मनां ज्ञानानां अयौगपद्यं तत्र लिङ्गमिति, आश्रयानन्तत्वात् अनन्तम्, एकस्मिन्नेव एकमेव, तत्तदवयवेषु सञ्चरणात् तत्तदवयव-वेदनादिव्यवहारः, परिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगाश्चेति सप्त मनसो गुणा इति च वर्णयन्ति। स्पष्टञ्चेदम्-**प्रकरणपञ्चिकायाः प्रमाणपारायणे तत्त्वालोके च। तमोविचारः** - तमस अतिरिक्तद्रव्यत्वं भाट्टमीमांसकानामभिमतम्। तेषामियं युक्तिः गुणक्रियाश्रयत्वं द्रव्यत्वमिति यदि द्रव्यलक्षणं स्वीक्रियते तर्हि नीलं तमश्चलतीत्यनुभवात् तमसि चलनात्मकक्रियाबत्वात् नीलरूपवत्वाच्च तमस द्रव्यान्त-रत्वमिति। दूरान्तिक-स्थानभेदेषु जन्यत्वात् कालकृत् दिक्कृत् विभागवत्। अत एव संयोगविभागयोः समवायिकारणतावत्। तमोव्याप्तस्थानपरिमाणेन परिमाणवच्च। क्रियावत्वात् नाकाशेऽन्तर्भावः। रूपवत्वात् न वायुर्न मनो वा। नीलरूपवत्वात् नापि जलतेजसी। गन्धरहितत्वात् नापि पृथिवी। ततश्च नवद्रव्येभ्यो बहिर्भूतमतिरिक्तं तमः। आलोकस्यान्यत्र चाक्षुषप्रत्यक्षे सहकारित्वेऽपि तमसः प्रत्यक्षे न आलोकसहकारस्या-वश्यकता वस्तुस्वाभाव्यात्, यथाच तेजःप्रत्यक्षे तेजोऽन्तरस्य सहकारित्वाभावस्तद्वत्। आलोकाभावरूपत्वं तमसो न वक्तुमर्हम्। अभावस्सर्वोऽपि सप्रतियोगिकः - घटाभावः पटाभाव इति। तमः यदि अभावरूपं स्यात् तर्हि आलोकाभाव इति प्रतीत्या सर्वत्रापि तमसः प्रतीतिर्वक्तव्या। न तथा प्रतीतिरनुभवसिद्धा। उत्पत्तिविनाशानुभवात् तमो न

नित्यम्, आरम्भकाभावात् नाप्यनित्यम्। ततश्च द्रव्यान्तरं तमः नीलात्मकत्वात् नीलोत्पलनैल्यवदिति भाट्टानामाशयः। पृथिवीगुणस्तम इति भाट्टेष्वेव केचित् **मानकिरणावली**कारा वदन्ति। ततश्च तमः अतिरिक्तमिति भाट्टसम्प्रदायः। तमस्तु नास्त्येव आलोकाभावरूपत्वादिति प्राभाकराः। अन्धानामिव केवलं नीलाभिमानः। अपवारितालोकं भूभागादिकमेव तम इति तेषां विश्वासः। तमसो निष्पत्तिश्च न युक्ता। रूपवत्वेनैव हि तमो द्रव्यं स्यात्, तच्च यदि अनेक-द्रव्यारब्धं चेत् चाक्षुषं स्यात्, न च तानि तमस आरम्भकाणि द्रव्याणि सन्ति। यदि सन्ति तर्हि दिवाप्यारभेरन्। अतश्च अन्धानामिव नीलिमामिमानः नभस एवेति वदन्ति।

**शब्दविचारः** - शब्दत्वजातिमान् श्रोत्रेन्द्रियमात्रग्राह्यः शब्दः द्रव्यम्। स च सर्वगतो नित्यश्चेति भाट्टाः। पटवत् साक्षादिन्द्रियसम्बन्धेन गृह्यमाणत्वात् शब्दः द्रव्यमिति तेषामाशयः। इन्द्रियसम्बन्धश्च संयोगरूपः। शब्दो द्रव्यं सत्वे सत्यनाश्रयत्वात् कालवत् इत्यनुमानमपि ते प्रतिपादयन्ति। सत्सदिति शब्दप्रयोगप्रत्यययोरविशेषेण विद्यमानत्वात् अश्रुतचरेऽपि शब्दे श्रूयमाणे झटिति शब्दोऽयं शब्दोऽयमिति अनुगताकार बुद्धिदर्शनात् अन्वयव्यतिरेकाभ्यां श्रोत्रग्राह्यत्वग्रहणात् पूर्वमेव झटिति शब्दोऽयमिति प्रतीतिदर्शनाच्च शब्दत्वस्य जातित्वसिद्धिः। नित्यश्शब्दः सत्वे सत्यकारणत्वात् व्योमवदित्यनुमानेन शब्दस्य नित्यत्वं सिध्यति। शब्दो विभुः स्पर्शानर्हद्रव्यत्वात् अनारम्भकत्वे सति अनवयवद्रव्यत्वात् वा आत्मवदित्यनुमानेन शब्दस्य विभुत्वं सर्वगतत्वञ्च सिध्यतीति भाट्टानामाशयः। प्राभाकरमते तु श्रोत्रग्राह्य आकाशगुणः नित्यः व्याप्यवृत्तिः नित्यसमवायश्च शब्द इति शब्दस्य गुणत्वमेव स्वीकृतम्। तेषां मते शब्दो नित्यः व्योमैकगुणत्वात् तद्गतपरममहत्ववत् इत्यनुमानं प्रमाणम्। श्रावणत्वात् शब्दत्ववदित्यपि एतेषां नित्यत्वसाधकानुमानम्। अत्रेदं बोध्यम्-शब्दविषये वैयाकरणानां अन्येषाञ्च दार्शनिकानां च मतभेदो दृश्यते। तत्र वैयाकरणाः वर्णानां प्रत्येकसमुदायाभ्यां विकल्पे सति दूषणासहत्वात्, तृतीयप्रकारासम्भवाच्च शब्दादर्थं प्रतिपद्यामहे इति वृद्धव्यवहाराच्च वर्णेभ्योऽतिरिक्तार्थप्रतीत्यन्यथानुपपत्या तद्गम्यं स्फोटनामकं शब्दतत्त्वमभ्युपगच्छन्ति।

अन्ये च दार्शनिका नैयायिकाश्च इदमसहमाना वर्णातिरिक्तं स्फोटतत्त्वं खण्डयन्तः दृष्टपरित्यागस्य अदृष्टकल्पनायाश्च प्रमाणाभावात् आनुपूर्वीविशेषभाजां वर्णानामेव पदत्वम्, एकार्थबोधकत्वरूपोपाधिना एकपदत्वम् व्यवहारसिद्धं समर्थयन्ति। भाट्टास्तु साक्षादिन्द्रियेण ग्रहणात् शब्दो द्रव्यमिति द्रव्यात्मकत्वमभ्युपगच्छन्तः, अबाधित-प्रत्यभिज्ञाबलात् नित्यत्वञ्चातिष्ठन्ते। नैयायिकास्तु द्विविधस्यापि शब्दस्य गुणत्वम्, उत्पन्नो गकारः, विनष्टो गकारः इति प्रतीतिम्, गकारादिरनित्यः उत्पत्तिमत्वे सति विनाशित्वात् घटवदित्यनुमानञ्च पुरस्कुर्वन्तः वर्णात्मकस्य शब्दस्याप्यनित्यत्वमभ्युप-गच्छन्ति। ध्वन्यात्मकस्य तु शब्दस्यानित्यत्वं समेषां दार्शनिकानामभिमतम्। प्राभाकरमीमांसकास्तु तार्किकसरणिमनुसृत्य शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वेन गुणत्वमुपवर्णयन्तः भाट्टसम्मतं द्रव्यत्वं निरस्य गुणत्वमभ्युपयन्ति। स एवायं गकार इत्यबाधितप्रत्यभिज्ञाबलात् उत्पन्नो गकारः, विनष्टो गकारः इत्येतयोरनुभवयोः गकाराभिव्यञ्जकध्वनिरुत्पन्नः, गकाराभिव्यञ्जकध्वनिर्नष्ट इत्यभिप्रायं वर्णयन्ति। स एवायं गकार इति विषयप्रत्यभिज्ञानस्य स्थिरात्मसिद्धिरपि प्रयोजनमिति वर्णयन्ति। प्रत्यभिज्ञायाः नित्यत्वे सिद्धे तदविरोधेनानुमानेनापि शब्दस्य नित्यत्वं सिध्यतीत्याशयेन कारणरहितत्वे सति सत्वात् गगनादिवत् नित्यश्शब्द इति नित्यत्वं साध्यन्ति। शब्दविषये यदधिकं वक्तव्यं तदस्माभिरस्मिन्नेव ग्रन्थे प्रथमे कुसुमे वर्णितम्।

**इन्द्रियविचारः** – सम्बद्धार्थविशदावभासकत्वम्, अपरोक्षज्ञानजनकद्रव्यत्वम्, ज्ञानानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वम्, यत्सम्प्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तत् इति इन्द्रियलक्षणानि **मानमेयोदय भाट्टचिन्तामणि शास्त्रदीपिकादौ** प्रसिद्धानि। मीमांसादर्शने बाह्यान्तरभेदेन द्विविधानीन्द्रियाणि तेषु घ्राण रसनचक्षुस्त्वकश्रो-त्राणि बाह्येन्द्रियाणि, मनस्तु आन्तरं इन्द्रियम्। यतः मन आत्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते। न बाह्येषु रूपादिष्विति आन्तरमित्युच्यले, इन्द्रियाणि प्राप्यकारीणीति मीमांसादर्शन-निश्चयः। तेषु गन्धज्ञानजनकत्वे सति अतीन्द्रियगन्धवत्त्वम्, गन्धोपलब्धिसाधनम्, गन्धमात्रग्रहणशक्तमिन्द्रियं घ्राणेन्द्रियम्। रसोपलब्धिसाधनम्, रसज्ञानजनकत्वे सति

अतीन्द्रियत्वम् रसमात्रग्रहणशक्तं रसनेन्द्रिययम्। रूपमात्रग्रहणशक्तम् रूपोपलब्धिसाधनम्, रूपज्ञानसाधारणत्वे सति इन्द्रियरूपवत्वमिति चक्षुषो लक्षणम्। स्पर्शग्राहकम्, स्पर्शोपलब्धिसाधनम्, स्पर्शज्ञानजनकत्वे सति इन्द्रियस्पर्शवत्वम् त्वगिति लक्षणं त्वचः। शब्दोपलब्धिसाधनम् शब्दज्ञानजनकत्वे सति शब्दवत्वम्, कर्णशष्कुल्यवच्छिन्नदिग्भागः न तु आकाशः इति श्रोत्रलक्षणम्। मनसो लक्षणं पूर्वमुक्तम्।

तेषु घ्राणरसनचक्षुस्त्वगिन्द्रियाणि पृथिव्यप्तेजोवायुप्रकृतीनि। श्रोत्रन्तु दिशः श्रोत्रमिति वेदवाक्यात् दिग्भागमेवेति स्वीक्रियते। मनस्तु पृथिव्यादीनामेवान्यतमात्मकं तेभ्योऽन्यद्वा सर्वथा तावदस्ति मनः। तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते न वाह्येषु रूपादिष्वित्यान्तरमित्युच्यते। रूपादिज्ञानेष्वपि तच्चक्षुरादिसहायं प्रवर्तते। एवमनुमानादिष्वपि लिङ्गादिसहायम्। स्मृतावपि संस्कार परतन्त्रं प्रवर्तते न स्वतन्त्रम्। स्पष्टञ्चेदं शास्त्रदीपिकायां प्रकरणपञ्चिकायाः **प्रमाणपारायणे** च।

**संनिकर्षविचारः** -प्रत्यक्षजनकज्ञानहेतुरिन्द्रियस्य विषयेण सम्बन्धस्संनिकर्ष इत्युच्यते। स च लौकिक अलौकिकश्चेति द्विविधः। यद्यपि नैयायिकैस्संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवायविशेषणविशेष्य-भावाख्याः षट् संनिकर्षाः लौकिकाः स्वीकृताः, परन्तु मीमांसादर्शने संयोगः, संयुक्ततादात्म्यम्, संयुक्ततादात्म्यतादात्म्यञ्चेति संनिकर्षत्रयमेव स्वीकृतम्। आकाशगुणस्य शब्दस्य ग्रहणाय श्रोत्रेण समवायसंनिकर्षो नैयायिकानाम्। दिशः श्रोत्रमिति तैत्तरीयवाक्यं प्रमाणयन्तो मीमांसकाः श्रोत्रस्य दिगात्मकतां स्वीकुर्वन्ति। ततश्च शब्दस्य द्रव्यत्वेन संयोगरूपसंनिकर्षसम्भवात् न समवायसंनिकर्षस्स्वीकृतः। शब्दवृत्तिसामान्यस्य संयुक्ततादात्म्यसंनिकर्षेणैव ग्रहणसम्भवेन जातिगुणकर्मणां द्रव्येण तादात्म्याङ्गीकारात् न समवेतसमवायोऽप्यपेक्षितः। एवमभावस्य अनुपलब्धिरूपप्रमाणान्तरगोचरतया प्रत्यक्षज्ञानाभावेन तत्कृते विशेषणविशेष्यभावरूपस्संनिकर्षोऽपि न स्वीक्रियते। लोकप्रसिद्धसंयोगादिसंनिकर्षभिन्नाः केवलं शास्त्रगम्या ये संनिकर्षास्ते अलौकिकसंनिकर्षा इत्युच्यन्ते। ते सामान्यलक्षण-ज्ञान लक्षण योगजाश्चेति त्रिविधाः। तेषां स्वीकारः किमर्थः

नैयायिकानाम्? मीमांसकैः प्राचीनैः तेषु द्वयोःस्वीकरः, योगजस्यास्वीकारश्च, परं नव्यमीमांसकैः त्रयाणामपि स्वीकार इत्येते विषयाः सुविशदं अस्मिन्नेव ग्रन्थे द्वितीये कुसुमे वर्णितास्तत एव ग्राह्याः॥

**गुणविचारः**–कर्मभिन्नत्वे सति समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्य-जातिमत्वं गुणत्वमिति गुणलक्षणं **मानमेये**। द्रव्याश्रयी अगुणवान् संयोगविभागानपेक्ष अहेतुर्गुण इत्यपि लक्षणम्। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभाग परत्वापरत्वगुरूत्वद्रवत्व स्नेह शब्द बुद्धि सुखदुःखेच्छा द्वेष प्रयत्नधर्माधर्मसंस्कारा इति वैशेषिकोक्तेषु चतुर्विंशतिविधेषु गुणेषु शब्द धर्माधर्मान् त्यक्त्वा तत्स्थाने ध्वनिप्राकट्य शक्तिरिति त्रीन् गुणान् संयोज्य चतुर्विंशतिगुणा **मानमेयोदये** परिगणिताः। मीमांसकदर्शने शब्दस्य द्रव्यत्वाङ्गीकारात् गुणेषु न परिगणनम्। एवं शक्तिरूपस्य गुणान्तरस्य कारणभूतेषु सर्ववस्तुषु सद्भावाभ्युपगमात् धर्माधर्मयोरपि विहितनिषिद्धकर्मसम्बन्धितत्तत्फलो-त्पादनानुकूलशक्तित्वेन न तयोः गुणेषु पृथग्गणनेति तेषामाशयः। नवीनास्तु मीमांसकाः रूपरस गन्धस्पर्श परिमाण संयोग विभाग परत्वापरत्व गुरूत्व द्रवत्व स्नेह संस्कारादृष्ट बुद्धि सुख दुःखेच्छाद्वेषयत्ना इति विंशतिगुणान् स्वीकुर्वन्ति। स्पष्टञ्चेदं भाट्टचिन्तामणौ। अपरे संख्यामपि स्वीकृत्य एकविंशति गुणान् स्वीकुर्वन्ति। प्राभाकरास्तु संख्यां त्वक्त्वा शब्दं गुणत्वेन परिगणयित्वा पृथक्त्वञ्च गुणेषु अन्यतमं स्वीकृत्य वैशषिकवत् रूपरसगन्धस्पर्शशब्दपरिमाणपृथक्त्वसंयोगविभाग परत्वापरत्वगुरूत्वद्रवत्वस्नेह-संस्कारबुद्धिसुखदुःखेच्छाद्वेष प्रयत्नधर्माधर्मास्त्रयोविंशतिर्गुणाः इति स्वीकुर्वन्ति। रूपरसगन्धस्पर्शाः संख्यापरिमाण पृथक्त्वानि संयोगविभागौ बुद्धिसुखदुःखेच्छाप्रयत्नाश्च प्रत्यक्षग्राह्या गुणा इति च प्रकरणपञ्चिकायाः **प्रमाणपारायणे** एवं **तन्त्ररहस्ये** च दृश्यते। तेषु चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्मात्रग्राह्यं पृथिव्यादित्रयवर्ति तमसि च वर्तमानं रूपम्, बाह्येन्द्रियाणां मध्ये चक्षुर्मात्रं यद्ग्राहकं तत् रूपमिति वा **रूपलक्षणम्**। तच्च शुक्लनीलहरितादिप्रभेदलक्षणं पृथिव्यप्तेजसां गुणभूतम्। पृथिव्या रूपं शुक्लत्वमेव। भास्वरत्वविशिष्टं शुक्लत्वं तेजसः। **भास्वरत्वं** नाम प्रकाशकतेजोन्तरानपेक्षत्वम्। पृथिव्यां

पाकजं साक्षात् परम्परया वा। संसर्गभेदेनातिनीलमतिशुक्रमिति प्रतीतेस्सम्भवात् शुक्लादि सर्वं रूपमेकमेव नित्यञ्चेति मीमांसकैस्स्वीक्रियते। ततश्च शुक्लत्वादिजात्यनङ्गीकार एव। एवमवयवरूपेणैव उपपत्तेः चित्ररूपमपि मीमांसकानामनभिमतम्। जलजलजशङ्ख-शुक्तिचन्द्रादौ रूपविशेषाः शुक्लभेदाः। एवं तत्र तत्र वर्णान्तरभेदा बोध्याः। यदग्नेरोहितमिति श्रुतिबलात् तेजसि रोहितरूपमेव मीमांसकाभिमतम्, नतु नैयायिकवत् शुक्लभास्वरम्। **रसलक्षणन्तु**-रसनग्राह्यः, रसनेन्द्रियमात्रग्राह्यः पृथिवीजलवृत्ति विशेषगुणः इति। स च मधुराम्लतिक्तकटुकषायलवणभेदात् षड्विधः। पृथिव्यां षड्विधो रसः। जले मधुर एव। एतेषां अवान्तरभेदानां बहुत्वेऽपि अवान्तररसा एतेष्वेवान्तर्भवन्ति। घ्राणेन्द्रियमात्र-ग्राह्यः पृथिवीमात्रवर्ती विशेषगुण गन्ध इति **गन्धलक्षणम्** स च सुरभिरसुरभिश्चेति द्विविधः। सुरभिरसुरभिस्साधारणश्चेति त्रिविध इति केचित्। जलवाय्वादौ गन्धप्रतीतिस्तु पृथिवीसंसर्गाद्, न तु स्वतः। **स्पर्श लक्षणन्तु**- बाह्येन्द्रियाणां मध्ये त्वङ्मात्रग्राह्यः गुण इति, स्पार्शनेन्द्रियमात्रग्राह्यः पृथिव्यादित्रये वायौ च वर्तमानः विशेषगुणः, इति। स च शीत-उष्ण-अनुष्णाशीतभेदात् त्रिविधः। अनुष्णाशीतोऽपि द्विविधः -पाकजः, अपाकजश्चेति। पाकजअनुष्णाशीतः पृथिव्याम्। अपाकज अनुष्णाशीतस्पर्शः अनिले अनले च। जले शीतस्पर्शः, दहने उष्णोऽपि। खरत्वमृदुत्वादयस्संयोगविशेषाः न स्पर्शविशेषाः उभयेन्द्रियग्राह्यत्वात्। श्रोत्रेन्द्रियग्राह्य आकाशगुणश्शब्द इति **शब्दलक्षणम्।** स च नित्यो व्याप्यवृत्तिनित्यसमवायश्च। स च वर्णात्मक अवर्णात्मकश्चेति द्विविधः। अकारादिर्वर्णात्मकः। शङ्खादिनिमित्तअवर्णात्मकः। एवं वर्णादिनिमित्तकः नित्यः। समुद्रघोषादिनिमित्तक अनित्यः। तत्रेयं प्रक्रिया-पुरुषस्य वर्णविशेषोच्चारणेच्छया वर्णविशेषे स्मृतिर्भवति, तया आत्ममनस्संयोगो जायते। संयोगादात्मनि प्रयत्नः, प्रयत्नात् आत्मवायुसंयोगः, तस्मात् वायौ शरीरे च कर्मोत्पत्तिः। स च वायुः नाभेरूर्ध्वं गच्छन् कण्ठादीनवयवान् गच्छति। ततश्च उरस-कण्ठ-शिरस्-जिह्वामूल-दन्त-नासिका-ओष्ठ-तालु आख्याष्टविधस्थानाभिधातलक्षणसंयोगवान् वायुः कर्णशष्कुलीमनुप्रासः स्तिमितवाय्ववयवापनोदं कुर्वन् वर्णस्याभिव्यञ्जको भवति। शङ्खभेर्यादौ बिल-

दण्डाभिघातात्, समुद्रघोषादौ वीच्यभिघातात् अवर्णलक्षणशब्दोत्पत्तिश्चेति प्राभाकराः। शब्दस्य द्रव्यत्ववादिनां मतं तु पूर्वमेव वर्णितम्। **परिमाणलक्षणन्तु**-मानव्यवहारकारणम्, सर्वद्रव्यगतं सामान्यगुण इति लक्षणम्। तत् अणुत्व-महत्व-ह्रस्वत्व-दीर्धत्वभेदात् चतुर्विधम्। अणुत्वं परमाणुगतम्। महत्वं आकाशादिगतम्। परस्परविरोधात् एकत्रैव सर्वेषां न समावेशः। परमाणुगतं मनोगतं च अणुत्वं नित्यम्। तदेव पारिमाण्डल्यमित्युच्यते। द्व्यणुकादिषु अनित्यम्। **संख्या** तु एकत्वादि व्यवहारहेतुः सर्वद्रव्यवृत्ति सामान्यगुण इति भाट्टाः। सा तु एकत्वादिपरार्धान्तेति च। पृथक्त्वनिवेशिनी संख्येति वदन्तः प्राभाकरास्तु षड् रसाः, त्रीणि रूपाणि एका जातिः, चतुर्विंशतिर्गुणा इति व्यवहारदर्शनात् पदार्थान्तरत्वं शक्तेरिव संख्याया अपीति वदन्ति। पृथक्त्वनिवेशिनी संख्येति वदतां मते एकत्वस्य संख्यात्वं नास्तीति द्वित्वादीनां पृथक्त्वनिदेशकत्वात् द्वित्वादीनामेव संख्यात्वमित्याशयः। भेदव्यवहारकारणं सर्वद्रव्यगतं सामान्यगुणः, अपोद्धारव्यवहारहेतुः गुणः, इदमस्मात् पृथग्भूतमिति, इदमस्मात् पृथगिति व्यवहारस्य वा यत् कारणं तत् पृथक्त्वमिति च **पृथक्त्वस्य** लक्षणम्। पृथक्त्वविषये भाट्टानां प्राभाकराणां च मतभेदो दृश्यते। भाट्टास्तु नित्यानित्यद्रव्यवर्तिसामान्यगुणः पृथक्त्वमिति वदन्तः परमाणुषु तत्कार्येषु अनित्येषु च पृथक्त्वं स्वीकुर्वन्ति। प्राभाकरास्तु नित्यद्रव्येषु परमाणुष्वेव पृथक्त्वं कार्येषु अनित्यद्रव्येषु भेदप्रतीतिस्तु वस्तुस्वाभाव्यादिति वदन्ति। **संयोगलक्षणन्तु**-युतसिद्धयोः प्राप्तिस्संयोगः, अप्राप्तयोः प्राप्तिस्संयोगः, इमौ संयुक्ताविति प्रत्ययनिमित्तं संयोगः, इति लक्षणानि। स च सर्वद्रव्यवर्ती सामान्यगुणः। सम्बन्धिनोः परस्परविभागाश्रयत्वयोग्यता **युतसिद्धिरित्युच्यते**। पटघटौ संयुक्तौ इति प्रतीतिस्संयोग-सद्भावे प्रमाणम्। सचैकोऽपि नित्यगतो नित्यः, अनित्यगतस्तु अनित्यः। नित्यविभूनां व्योमकालादीनां परस्परं संयोगः नित्यः। अनित्यसंयोगस्त्रिविधः-अन्यतरकर्मजः, उभयकर्मजः संयोगजश्चेति। स्थाणु श्येनयोस्संयोग अन्यतरकर्मजः, युध्यतोर्मल्लयोस्संयोग उभयकर्मजः, तन्तुतुरीसंयोगात् उत्पन्नस्य पटस्य तुरीसंयोगः, हस्ततरूसंयोगात् काष्ठत-रूसंयोगश्च संयोगजसंयोगः इत्युदाहरणानि। भाट्टास्तु अन्यतरकर्मज-उभयकर्मजाविति

च संयोगद्वयमेव स्वीकुर्वन्ति, न तु तृतीयं संयोगजसंयोगम्। प्राभाकरास्तु त्रैविध्यमातिष्ठन्ते। संयोगः संयोगिषु कथं वर्तत इति जिज्ञासायां भाट्टाः सादृश्यात् प्रतिसंयोगिभिन्न इति वदन्ति। यथा देवदत्तसंयोग एव तस्मिन् कुण्डलिनि जाते कुण्डलिसंयोगो भवति, एवं तुरीतन्तुसंयोग एव तन्तौ पटभावभिन्ने पटतुरीसंयोगो भवति, न संयोगान्तरं प्रतीत्यभावादिति भाट्टानामाशयः। प्राभाकरास्तु वैशेषिकवत् उभयोर्व्यासक्तं संयोगमङ्गीकुर्वन्ति। **विभागलक्षणन्तु** संयोगप्रध्वंसहेतुभूतः अविभुद्रव्यमात्रवर्ती विशेषगुणो विभागः। घटपटौ संयुज्य विभक्तौ इति प्रत्ययस्तद्भावे प्रमाणम्। अन्यतरकर्मजः, उभयकर्मजः विभागजश्चेति विभागस्त्रिविधः। विभागजश्च कारणविभागजः अकारणविभागजश्चेति द्विविधः। स्थाणौ श्येनविभागः अन्यतरकर्मजः। विरुद्धकर्मयोर्मल्लयोर्विभाग उभयकर्मजः। वेणुदलविभागजः आकाशदलविभागः कारणविभागजः। अङ्गुलीतरूविभागजनकेन कर्मणा अङ्गुलीतरूविभागः, तेन हस्ततरूविभागश्च कारणविभागजः। विभागश्चैको नित्य अनित्यसमवेतश्च। परमिदं द्रव्यम्, अपरमिदं द्रव्यमिति विशिष्ट प्रत्ययलक्षणं **परत्वापरत्वं** विशेषगुणः। स च दिक्कृतः कालकृतश्चेति द्विविधः। दूरस्थिते प्रतीयमानं परत्वं समीपस्थिते वर्तमानं अपरत्वञ्च दिक्कृतम्। स्थविरयूनोर्दृश्यमानं परत्वापरत्वं वयोरूपकालकृतम्। अपेक्षाबुद्धिनाशात् आश्रयनाशाद्वा तयोरुत्पत्तिविनाशौ भवतः। पतनसमवायिकारणं पृथिवीजलवृत्ति विशेषगुणः **गुरुत्वम्**। गुरुत्वञ्चातीन्द्रियम्। कार्यानुमेयञ्च। गुरूत्वञ्च संयोगप्रयत्नसंस्कारप्रतिबन्धेन पतनं जनयति। अश्वारूढस्य संयोगात् पतनम्। आकाशचरस्य श्येनादेः प्रयत्नात् पतनम्। शरादेःवेगात् पतनम्। गुरुत्वतारतम्यादेव लघुत्वव्यवहारः। स्यन्दकर्मासमवायिकारणं पृथिव्यप्तेजोवृत्ति विशेषगुणः **द्रवत्वम्**। तद् द्विविधम्-नैमित्तिकम्, सांसिद्धिकञ्च। सांसिद्धिकं जलवृत्ति, नैमित्तिकं तु अग्निसंयोगात् पृथिवीवृत्ति। संग्रहमृजादिहेतुः अपां विशेषगुणः **स्नेहः**। **संग्रहो** नाम परस्परमसंयुक्तानां सक्त्वादीनां पिण्डीभावप्राप्तिधारणाकर्षणहेतुः संयोगविशेषः। चूर्णादिग्राहकं द्रवत्वमेव स्नेह इत्यपि कश्चित् पक्षः। **संस्कारो** नाम स्वोत्पादकसमानजातीयकार्यारम्भ इत्युच्यते। अनुभवहेतुः वासनाख्यस्मृतिहेतुस्संस्कार इत्यपरे

वैशेषिकादयः। स च वेगो भावना अलौकिकश्चेति त्रिविधः। तत्र वेगो नाम मूर्तद्रव्यपञ्चकवर्ती विशेषगुणः। क्रियाहेतुश्च। भावनाख्यस्तु संस्कारः आत्मगुणः अनुभवजन्यः अनुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञाहेतुः। स्थितस्थापकाख्यस्संस्कारस्तु नाङ्गीक्रियते पूर्वावस्थाप्रापकधनावयवसंयोगस्य कारणत्वसम्भवात्। अलौकिकस्तु संस्कारः तक्षणोत्पवनप्रोक्षणावहननादिक्रियया जन्यः। स च व्रीहीन् प्रोक्षति इत्यादिषु द्वितीयाश्रुतिगम्यः। प्रोक्षणादिभिः व्रीहीन् संस्कुर्यादित्यर्थः। स च भूतभाव्युपयोगिद्रव्यमात्रवर्ती विशेषगुणः। प्रोक्षणादिरूपसंस्कारस्य क्रियारूपत्वात् तज्जन्यस्य अतिशयविशेषस्य अपूर्ववत् योग्यतारूपशक्तावेवान्तर्भावः इति अलौकिकसंस्कारं नाभ्युपगच्छन्ति भाट्टाः। अर्थप्रतिबद्धव्यवहारानुकूलस्वभावः पुरुषस्य धर्मविशेषः **बुद्धिः**। अस्या एव उपलब्धिर्ज्ञानं संवित् मतिः प्रत्ययो मनीषा इत्यादिशब्दैर्व्यवहारः। सा च यथार्था स्वप्रकाशा फलतोऽनुमेया विप्रतिपन्नबोधाय सर्वात्मसु अभिन्ना। सा च इन्द्रियहेतुभेदात् प्रत्यात्मं प्रतिविषयं च भिद्यते। तथापि स्वरूपतो नित्या एका च। सा च बुद्धिः अर्थप्रकाशापरनामधेय प्राकट्यान्यथानुपपत्तिप्रसूता अर्थापत्तिगम्या चेति भाट्टाः। अनुमानगम्येति शावरभाष्यम् सा च अयथार्थ–स्मृति–अनुवाद–यथार्थरूपेण चतुर्विधा। सोऽयं विषयः लौकिकप्रमाणविचारे विस्तृत इति नेह प्रतन्यते। इतरेच्छानधीनेच्छाविषयम्, अनुग्राहकस्वभावम्, यस्मिन् जाते अनुगृहीतोऽस्मि तृप्तोऽस्मीति मनुंते तत् **सुखम्**। तच्चात्ममनस्संयोगोद्भवाम्। तच्चातीतविषये स्मृतिजम्, अनागतेषु सङ्कल्पजम्, वर्तमाने चानुभवजम्। ऐहिक स्वर्गमोक्षसुखभेदेन त्रिविधम् सुखम्। स्रक्चन्दनवनितादिजमैहिकम्। परन्तु तद्दुःखमिश्रम्। स्वर्गसुखन्तु लोकान्तरप्राप्यं दुःखरहितञ्च। तच्च वेदोक्तधर्मकर्मानुष्ठानजम्। मोक्षसुखन्तु प्रपञ्चविलयस्वरूपम्। दुःखनिवृत्तिरूपं वा। इतरद्वेषानधीनद्वेषविषयम्, उपधातकस्वभावं वा **दुःखम्**। तच्चात्मनिष्ठम्। अतीतेषु स्मृतिजम्, अनागतेषु संकल्पजम्, वर्तमानेषु अनुभवजम्। दुःखफलं दैन्यादि। अधर्मसहितादात्ममनसंनिकर्षादुत्पद्यते। ऐहिकामुष्मिकभेदेन द्विविधं दुःखम्। रोगादिजमैहिकम्, रौरवादिनारकं आमुष्मिकम्। ऐहिकञ्चाध्यात्मिकाधिभौतिकाधिदैविकभेदेनापि त्रिविधम्। स्वस्मै परस्मै वा अप्रास

प्रार्थना **इच्छा**। इदं मे भूयादिति, ममेदं भूयादिति अप्राप्तस्य वस्तुनः प्रर्थनारूपा सा। सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वा आत्ममनस्संयोगजन्या। अनागते सुखहेतौ इच्छोत्पद्यते, अतीते स्मृतिसाहाय्यात्। प्रयत्नकृतिधर्माधर्माः इच्छाफलानि। कामादयोऽपि इच्छाभेदा एव। अभ्यवहारेच्छा **कामः**। पुनः पुनर्विषयानुरञ्जनेच्छा **रागः**। अनासन्नक्रियेच्छा **सकंल्पः**। स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा **कारुण्यम्**। दोषदर्शनात् विषय परित्यागेच्छा **वैराग्यम्**। परवञ्चनेच्छा **उपधा**। तस्या एव डम्भ इति नामान्तरम्। अन्तर्गूढेच्छा **भावः**। स्मरणं कीर्तनं केलिः प्रेक्षणम् गुह्यभाषणम् सकंल्पः अध्यवसायः क्रियानिर्वृत्तिरिति अष्टविधमैथुनेच्छापि काम इत्युच्यते। चिकीर्षादयोऽपि इच्छाभेदाः। प्रज्वलनात्मकः, शत्रुविषयो भावः **द्वेषः**। सोऽपि आत्ममनस्संयोगादेवोद्भवति। दुःखापेक्षा स्मृतिर्वा कारणम्। प्रयत्नधर्माधर्माः तस्य फलम्। द्रोहः क्रोधः मन्युः, अक्षमा अमर्षाश्च द्वेषभेदा एव। **प्रयत्नः** संरम्भ उत्साह इति समानार्थकाः। जीवनपूर्वक इच्छाद्वेषपूर्वकश्चेति स द्विविधः। प्रथमस्तु धर्माधर्मापेक्षात् आत्ममनस्संयोगादुद्भवति। द्वितीयस्तु हिताहितप्राप्ति परिहारयोग्यक्रियाहेतुर्भवति। स चापि इच्छाद्वेषापेक्षादात्ममनस्संयोगादेव उद्भवति। विधायक वेदलक्षणः कर्तुः सुखअभ्युदयमोक्षहेतुरात्मगुणो **धर्मः** स चापूर्वमेव मीमांसादर्शने। विशुद्धाभिसन्धिसापेक्षात् आत्ममनस्संयोगादुत्पद्यते। प्रतिषेधलक्षणः कर्तुः प्रत्यवायहेतुः पुरुषगुणो **अधर्मः**। प्रतिषिद्धकर्मानुष्ठान-विहिताकरण-प्रमाद-दुष्टाभिसन्धिसापेक्षात् आत्ममनस्संयोगादुत्पत्तिः। प्राभाकराणां मते संख्या न गुणः। गुणकर्मणोराश्रितत्वात् शक्तिवदिति तेषामाशयः शब्दस्य द्रव्यत्ववादिनां भाट्टानां मते **ध्वनिः** वायुगुणः, अनित्यश्चेति गुणत्वमेव स्वीकृतम्॥ घटादिविषये ज्ञाने जाते मया ज्ञातोऽयं घटः घटः प्रकाशते, घटोभाति, घटः प्रकट इत्यादिः प्रत्ययः भवति। तत्र घटस्य ज्ञातत्वं प्रकटत्वं वा प्रतिसन्धीयते। तेन ज्ञाने जाते सति **ज्ञातता प्रकटता** नाम कश्चित्पदार्थः धर्मो जायत इत्यनुमीयते। सा ज्ञानात्पूर्वमजातत्वात् ज्ञाने जाते च जातत्वात् अन्वयव्यतिरेकाभ्यां ज्ञानेन जन्यत इत्यवधार्यते। सा च न ज्ञानरूपा विषयगतत्वेन प्रतीतेः, ज्ञानन्तु आत्मगतम्। नापि विषयरूपा विशिष्टज्ञानस्य समूहालम्बनज्ञानात् अवैलक्षण्यापत्तेः। अतश्च

ज्ञानविषयभिन्ना सा इत्यम्युपगन्तव्यम्। ततश्च लौकिकव्यवहारोपपत्तये प्रकाशविशिष्टः कश्चनार्थः कल्प्यते। स प्रकाश एव **प्राकट्यम् ज्ञातता** विषयताप्रकाशापरपर्यायमिति भाट्टा वदन्ति। ततश्च भाट्टसम्प्रदाये ज्ञात इति प्रतीतिसिद्धः ज्ञानजन्यः विषयसमेवतः प्राकटयापरनामा अतिरिक्तपदार्थविशेष इति स्वीक्रियते। अत एव **मानमेयोदये प्राकट्यं** विषयव्यवस्थापकः सर्वद्रव्यवर्ती सामान्यगुणः। स च संयुक्त तादात्म्यसम्बन्धेन प्रत्यक्षगम्यः इत्युक्तम्। एवं **शक्तिरपि** पदार्थान्तरम्। सा च सर्वभावेषु अतीन्द्रिया। सा च कार्येणानुमीयते। तथाहि – यादृशादेव करालानलसंयोगात् दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते। अतश्च यदभावात् कार्याभावः तद् वह्नयादौ अम्युपेयम्। ततश्च अन्वय-व्यतिरेकाभ्यां मणिमन्त्रादिप्रतिबन्धनीयं तद्विनाश्यं वा किञ्चिदतीन्द्रियं कल्पनीयम्। तथा च वह्नेः कारणत्वात् वह्नित्वस्य कारणतावच्छेदकत्वात् तत्र वह्नौ कारणतावच्छेदकधर्मः कश्चिदप्युपगन्तव्यः। स एव शक्तिसामर्थ्यादिपदवाच्यः। तस्य च स्वाश्रयकारणादु-त्पत्तिः। कार्यानुत्पत्तौ द्वयी गतिः – अभिभवो विनाशो वा। यत्र पुनः कार्यं न जन्यते तत्र विनाशः। यत्र तु जन्म तत्राभिभवः। इयं शक्तिः न द्रव्यात्मिका गुणादिवृत्तित्वात्, अत एव न गुणात्मिका कर्मात्मिका वा। नापि सामान्याद्यन्यतमरूपा, उत्पत्तिमत्वे सति विनाशित्वात्। ततश्च सर्वभावानां कार्यानुमेया शक्तिरिति प्राभाकराः। यद्यपि मण्याद्यभावविशिष्ट-वह्नयादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वमिति वदन्तः नैयायिकाः शक्तिं खण्डयन्ति, तार्किकैरभावस्य कारणत्वस्वीकारात्। प्राभाकरमीमांसकैरभावस्य कारणत्वं नाभ्युपगम्यत इति तु अतिरिक्तशक्तिस्वीकारे कारणमिति तु रहस्यम्। सा च शक्तिस्त्रिधा – सहजा शक्तिः, आधेयशक्तिः, पदशक्तिश्चेति। सहजशक्तिः वह्न्यादिनिष्ठा। आधेयशक्तिः प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा, भस्मादिजन्या कांस्यपात्रादिनिष्ठा शुध्यात्मिका-प्याधेयशक्तिः। पदशक्तिश्च तत्तदर्थनिरूपिता तत्तत्पदनिष्ठा। द्रव्याश्रयि अगुणवत् संयोगविभा गेष्वनपेक्षकारणं, अविभुद्रव्यसंस्थं चलतीतिप्रत्ययविषयं संयोगविभागयोर्हेतुभूतं स्वाश्रयपराश्रयसमवेत कार्यारम्भकत्वं कर्मत्वजातिमत्वं वा **कर्म** इति कर्मलक्षणम्। तच्च संयोगविभानुमेयमिति प्राभाकराः। चलनात्मकमेकं प्रत्यक्षमिति भाट्टाः। कार्य-

भेदादनन्तत्वम्, एकद्रव्यवृत्ति द्रव्यकर्मणोरनारम्भकत्वम्, आशुतरविनाशित्वम्, गुरुत्वद्रव्य संयोगवेगप्रयत्नादृष्टकारणकत्वम्, स्वकार्यसंयोगविनाश्यत्वम् आशुतरविनाशिसम्बन्धत्वञ्च कर्मगुणाः। उत्क्षेपण—अवक्षेपणाकुञ्चनप्रसारणगमनभेदात् कर्म पंचविधमिति भाट्टाः। एकमेव परिस्पन्दात्मकं कर्म, तद्विशेष एव उत्क्षेपणादय इति प्राभाकराः। **भाट्टचिन्तामणिस्तु** चलनात्मकं कर्म एकमेव, तद्विशेषा उत्क्षेपणादय इति वदति। वैदिकन्तु कर्म नित्यम् नैमित्तिकम्, काम्यञ्चेति त्रिविधं धर्माधर्मात्मकं बीजाङ्कुरवत्प्रवाहरूपेणानादि फलार्थिभिरनुष्ठीयमानमिति मीमांसादर्शनम्। तेषु यदकरणे प्रत्यवायस्तन्नित्यम्। यथा सन्ध्योपासनादि। अनियत निमित्तकं नैमित्तिकम् यथा ग्रहणश्राद्धादि। अनियतस्य राहूपरागस्य निमित्तत्वात्। फलकामनाधीनकर्तव्यताकं कर्म काम्यम्। यथा स्वर्गाद्युद्देशेन कृतं अश्वमेधाद्यादि। नित्यमेकं प्रातिस्विकरुपेण अनित्यद्रव्यैकसमवेतं नित्यैकत्वे सति निरतिशयेन अनेकत्र वर्तमानम्, नित्यत्वे सति सर्वगतत्वे सति प्रत्यक्षज्ञानगोचरत्वे सति व्यक्तिगतभिन्नाभिन्नात्माकत्वं वा सामान्यमिति **सामान्यलक्षणम्।** परापरत्वभेदात् तस्य द्वैविध्यं नित्यत्वमेकत्वञ्च। तच्च सामान्यं व्यक्तिमात्रावसायि सर्वगतं वेति पक्षद्वयम्। प्रथमपक्षे तस्य व्यक्त्यात्मकत्वात् व्यक्तिमात्रे तदुपलब्धिः। द्वितीयपक्षे व्यक्तीनामेव तदभिञ्जकत्वात् जातेः व्यक्त्यात्मकत्वाच्च संयुक्ततादात्म्येन तस्य ग्रहणमिति भाट्टाः। सामान्यमेव जाति-आकृतिपदाभ्यामभिधीयते। महासामान्यावान्तरासामान्यभेदेन तद् द्विविधम्। द्रव्यगुणकर्मसामान्येषु सत्तापरपर्यायं **महासामान्यम्।** सत् सत् इति प्रतीयमानत्वात्। **अवान्तरसामान्यं** द्रव्यत्वादिकं द्रव्यादिषु प्रतीयमानम्। एतयैव रीत्या अन्यानि शब्दत्व ब्राह्मणत्वादीनि सामान्यानि ज्ञेयानीति भाट्टाः। अयुतसिद्धानां आधाराधेयभूतानां सम्बन्धः **समवायः**, अपृथगाश्रयाश्रयित्वम्, अपृथग्गतिमत्वं वा **अयुतसिद्धत्वम्** इति, अयुतसिद्धयोस्सम्बन्धः इति, येन सम्बन्धेन अधेयमाधारे स्वानुरूपां बुद्धिं जनयति - स्वाकारेण बोधयति स सम्बन्धस्समवाय इति, येन सम्बन्धेन अधेयमाधारस्य स्वानुरक्तबुद्धिजनक स्स सम्बन्धस्समवाय इति **प्रकरणपञ्चिकाशास्त्रदीपिका तन्त्ररहस्य भाट्टचिन्तामण्यादौ** लक्षणानि दृश्यन्ते। भाट्टमीमांस-

कास्तु तादात्म्यमेव सम्बन्धः न तु समवायः, अयुतसिद्धेर्निरूपयितुमशक्यत्वात् इति वदन्ति। नीलो घट इत्यादौ तादात्म्यमेव सम्बन्धो भासते न तु समवायः। अत एव भाट्टैः संयोगः संयुक्ततादात्म्यम्, नीलो घट इत्यत्र नीलत्वग्रहणाय नैयायिकानां संयुक्तसमेवत-समवाय इव संयुक्ततादात्म्यतादात्म्यं नाम तृतीयस्संनिकर्षश्च स्वीकृतः। प्राभाकरास्तु समवायं अतिरिक्तं पदार्थं स्वीकुर्वन्तोऽपि तस्य नित्यत्वं न स्वीकुर्वन्ति। नित्यद्रव्यस्य तद्वृत्तिगुणादीनाञ्च समवायो नित्यः, यथा नित्यमाकाशम्, तद्वृत्तिमहत्वादिगुणानाञ्च नित्यस्समवायः। अनित्यद्रव्यस्य घटपटादेः तद्वृत्तिगुणक्रियादीनाञ्च समवाय अनित्य इति "न वयं काश्यपीया इव समवायं नित्यमुपेमः" इति च वदन्ति। प्रत्यक्षेणानुपलम्भात् समवायः नित्यानुमेय इति च प्राभाकराः। सादृश्यज्ञानात् सदृशविषयधीरुपमा, तद्विषयत्वं सादृश्यमिति **सादृश्यं** तत्वान्तरमिति प्राभाकराः। द्रव्यत्वादिपदार्थान्यतमधर्म-भिन्नपदार्थविभाजकधर्मवत् सादृश्यमपि भवति। भावरूपत्वेन प्रतीयमानत्वात् न अभावरूपं सादृश्यम् यथा गोत्वं नित्यं तथा अश्वत्वं नित्यं आकाशादिकमपि नित्यमिति सादृश्यप्रतीत्या गोत्वनिरूपितसादृश्यस्याश्वत्वे आकाशादौ च सिद्धतया सादृश्ये सादृश्येतरवृत्तित्वे सति सामान्यवृत्तित्वमपि सम्भवति। सादृश्यं गुणकर्मणोः वर्तते। गन्धादयः परस्परसदृशाः प्रतिभान्ति-गन्धो गन्धान्तरेण रूपं रूपान्तरेण तथा क्रिया क्रियान्तरेण। सादृश्यं हि सप्रतियोगिकमेवं प्रतीयते-अयमनेन सदृश इति। तस्मात् सादृश्यपि पदार्थान्तरम्। प्रकरण पञ्चिका व्याख्यायां **न्यायसिध्यां** क्रमो नाम पदार्थान्तरं स्वीकृतम्। क्रमो नाम पदार्थानां विततिरित्यप्युक्तम्। स चास्मामिः अलौकिकप्रामाण्यविचारा वसरे वर्णितः। अनुपलब्धेरतिरिक्तप्रामाण्यवादिनां भाट्टानां मते अभाव अतिरिक्तः पदार्थः। इदमिह नास्ति इदमिदं न भवति इत्यादि प्रतीतिनियामकः भावाभाव-साधारणस्वरूपसम्बन्धविशेषः, प्रतियोगिज्ञानाधीनविषयत्वम्, भावभिन्नत्वम्, नास्तीति-प्रत्ययविषयत्वं वा **अभावत्वमिति** तल्लक्षणानि। अभावस्यातिरिक्तपदार्थत्वानङ्गीकारे भूतले घटो नास्तीति प्रतीतिसिद्धः आधाराधेयभाव अनुपपन्नस्स्यात्। अभावस्वीकारे च भूतलात्मकाधिकरणस्य घटाभावात्मकाधेयस्य सम्बन्ध आधारतात्मकआधेयतात्मक-

श्च भूतलं घटाभाववदिति प्रमितिविषयो भवति। भूतले घटाभावस्य आधारताख्य-स्वरूपसम्बन्धः, भूतलस्य च घटाभावे आधेयताख्यस्वरूपसम्बन्धः भूतलघटाभावयो-र्भिन्नत्वे एव उपपद्यते। द्वयोरैक्ये तु कस्य किमाधारम्? किमाधेयमिति न वक्तुं शक्येत। एवं अभावस्यातिरिक्तत्वस्वीकारे एव अन्यत्र वर्तमानानां तत्तच्छब्दगन्धाद्यभावानां प्रत्यक्षत्वमुपपद्येत। अन्यथा श्रोत्रेण शब्दाभावं जानामीति घ्राणेन गन्धाभावं जानामीत्यादि प्रतीतिसिद्धं प्रत्यक्षविषयत्वम अनुपपन्नं स्यात्। घटो नास्तीति व्यवहार एव न स्यात्। लोकव्यवहारसिद्धस्य अबाधिततत्तादृशव्यवहारस्य किम पि कारणं वक्तव्यम्। भूतलमात्रज्ञानं कारणमिति तु न वक्तव्यम्। पटवति भूतले घटो नास्तीति व्यवहारो न स्यात्। तत्र भूतलमात्रस्योपालम्भाभावात्। अनुपलब्धेरतिरिक्तप्रामाण्यानङ्गीकर्वृणां अभावस्याधि-करणात्मत्ववादिनां प्राभाकराणां मते अभाव नातिरिक्तः पदार्थः। तेषामियं प्रक्रिया अभावस्य भावविलक्षणतया भावरूपप्रमाणेन तद्ग्रहणाशक्तेः इतरप्रमाणानुत्पत्तिरूपं अभावरूपं प्रमाणं स्वीकर्तव्यमिति यदुच्यते तदयुक्तम्। सर्वं प्रमाणं प्रमेयाविनाभावि इति प्रसिद्धम्। नैव अभावाख्यस्य प्रमाणस्य प्रमेयं किञ्चिदस्ति। भूतले या अभावप्रतीतिः सा भूतलान्नातिरिच्यते। इन्द्रियव्यापारमन्तरेण प्रत्यक्षाप्रवृत्तेः अभावो न प्रत्यक्षवेद्यः। लिङ्गाभवात् नानुमानगम्या, सादृश्याद्यभावात् नोपमानार्थापत्तेरवसरः। अभाव अभावाख्येन प्रमाणेनैव वेद्य इति न वक्तव्यम्। प्रमाणस्य प्रमेयाविनाभावित्वात् अभावस्य प्रमेयत्वमेव नास्ति। भूतलादीनामवगतिः द्विविधा - एका भावान्तरसंस्पृष्टविषया, अन्या तदेकविषया। अनन्तरोक्तापि द्विविधा—प्रतियोगिनि दृश्येऽदृश्ये च। तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः। तस्य प्रतियोगिनोऽभाव इच्युच्यते। तथा च यस्मिन् दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः सा तदभाव इति विशेषतो व्यपदिश्यते भूतले घटाभाव इति। अतः भूतले घटो नास्तीत्युक्ते घटे दृश्ये भूतलमात्रस्य बोध इत्युक्तं भवति। प्रतियोगिनि दृश्यत्वञ्च अन्यत्र अवश्यमङ्गीकर्तव्यम्। अन्यथा अप्रसक्तप्रतिषेधस्समापद्येत प्रसक्तं हि निषिध्यत इति न्यायात्। सैव दृश्यता, सा प्राभाकरमते ज्ञानविशेषः इति धर्मिकल्पनातो वरं धर्मकल्पना लाधवात्। किञ्च अभावज्ञानम् अनुोगिज्ञानं प्रतियोगिज्ञानञ्चापेक्षत

इत्यभाववादिना स्वरूपज्ञानमभावज्ञानात् प्रागेष्टव्यम्। उक्तञ्च **श्लोकवार्तिके** "स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित्स्मरन्नपि। तत्रान्यनास्तितां पृष्टः तदैव प्रतिपद्यते" इति। तथाच अधिकरणस्वरूपातिरिक्त अभावो न स्वीकर्तव्य इति महता बुद्धिकौशलेन प्रकरणपञ्चिकाया **प्रमाणपरिच्छेदे** साधितः प्राभाकरैः। भाट्टमते अभावश्चतुर्विधः - प्रागभावः, ध्वंसाभाव:अत्यन्ताभावः, अन्योन्याभावश्च इति। मृत्पिण्डादौ कारणे घटाद्युत्पत्तेः पूर्वं योऽभावः स प्रागभावः। घटे मुद्गरप्रहारानन्तरं योऽभावः स ध्वंसात्मक अभावः - ध्वंसाभावः। इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः। गवि यो अश्वाद्यभावः स अत्यन्ताभावः, अस्यैव पृथक्त्वमिति नामान्तरमिति भाट्टाः। **भाट्टचिन्तमणौ** तु प्रागभावः प्राध्वंसाभावश्च नाभावरूपः। किन्तु आद्यक्षणसम्बन्धरूपोत्पत्तिपूर्वकालरूप एव प्रागभावः, एवं चरमक्षणसम्बन्धरूपः ध्वंसाभावः, स एव नाशः। तस्य चोत्तरकालमेव नाशादनित्यत्वम्। अत एव घटो भविष्यति घटो नष्ट इति प्रतीतिः, नहि प्रागभावोऽस्ति ध्वंसाभावोऽस्तीति कस्य चित् प्रतीतिर्भवति। अतश्च प्रागभावध्वंसाभावौ न स्त इति केषांचित् पक्ष अनूदितः। प्रेरणा इष्टसाधनत्वं वा विध्यर्थ इति वादिनां भाट्टानां मते, कार्यं विध्यर्थः, नियोगापरपयाये कार्ये वैदिकलिङादेशशक्तिरिति वादिनां प्राभाकराणां मते च स्वर्गपुत्रपश्वादिकं फलं भावनायां भाव्यत्वेनान्वितमपि यागैनैव जननीयमिति यागः फलं प्रति करणमिति श्रुत्या अवगतं भवति। तादृशं करणत्वं आशुतरविनाशिनां कर्मणां यागहोमादीनां कालान्तरभावि स्वर्गादिकं प्रति न सम्भवतीति श्रुतकरणत्वनिर्वाहाय यागस्वर्गयोर्मध्ये यागजन्यं फलोत्पत्तिपर्यन्तावस्थायि **अपूर्वाख्यं** वस्तु कल्प्यते। अग्निहोत्रादियागैः अपूर्वं कृत्वा स्वर्गादिफलं संपादयेदिति च वाक्यार्थः। यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः, यागादिकर्मणः फलैकनाश्या काचिदुत्तरावस्था इति वा **अपूर्व**स्वरूपं वक्तव्यम्। प्राभाकरमते-क्रियागतेष्टसाधनता भावनागतेष्टसाधनता वा लिङ्वाच्या। इष्टविशेषसमर्पकं च विध्युद्देशगतं स्वर्गादिपदम्। साधनत्वान्यथानुपपत्या च अपूर्वं कल्प्यम्, तत्तु न वाच्यम्। इदमेव कार्यं मानान्तरागोचरत्वात् अपूर्वमिति स्वात्मनि पुरुषं नियुञ्जानो **नियोग** इति गीयते। तदेव स्वप्रकरणपठितपदार्थजातं स्वशेषतया गृह्णन्

**प्रयोजक** इति, गृहीतं पदार्थवर्गं श्रुत्यादिभिर्वा स्वातन्त्र्येण वा द्वारशेषतया विनियुञ्जानो **विनियोजक** इति कथ्यते इति स्वीक्रियते।" तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके। तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः॥ अपूर्वं हि क्रियासाध्यं साधिता साधनं क्रिया॥" इति प्रकरणपञ्चिकायाः **वाक्यार्थमातृकायाम्**। तथाच व्यापारवतो यागस्य नाशेऽपि यागजन्या काचित् शक्तिरस्ति, सैव अपूर्वमिति वक्तव्यम्। शक्तिव्यवधानेऽपि यागस्य साधनत्वमविरुद्धम्। यथाङ्गारजन्यं औष्ण्यं शान्तेष्वपि अङ्गारेषु जलेऽनुवर्तते तथा यागजन्यमपूर्वं नष्टेऽपि यागे यागकर्तर्यात्मनि अनुवर्तते। वेदोदितकरणमेवात्र प्रमाणम्, इति श्रुतार्थापत्तिरपूर्वकल्पनायाः प्रमाणम्। तच्चापूर्वं **परमा**पूर्वापरनामकं **फला**पूर्वम्, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वञ्चेति चतुर्विधम्। येन स्वर्गादिफलमुद्भवति फलजनकत्वात् तत् फलापूर्वमथवा **परमापूर्व**मित्युच्यते। यत्र बहूनां यागानां समवायेन अथवा भिन्नकालिकानां यागानां समवायेन वा एकं कर्म निष्पाद्यते तत्र **समुदाया**पूर्वं भवति। तत्तु प्रत्येकं कर्मणां उत्पत्त्यपूर्वद्वारा निष्पन्नं भवति। ततश्च समुदायगतात् यज्ञात् उत्पन्नं अपूर्वमु**त्पत्त्यपू**र्वमित्युच्यते। यागाङ्गद्रव्यदेवतादि उद्दिश्य विधीयमानं कर्म **संनिपत्योपकारकम्**। यागाङ्गद्रव्यदेवतादि अनुद्दिश्य केवलं विधीयमानं कर्म **आरादुपकारकम्**। एवं प्रकार भेदे सत्यपि सर्वाण्यङ्गानि अपूर्वनिष्पत्तौ अनुग्राहकाणीति स्वीक्रियन्ते। एतानि अङ्गेभ्यस्समुदभवन्तीति **अङ्गापू**र्वाणीत्युच्यन्ते। अङ्गापूर्वं उत्पत्त्यपूर्वोपहितं प्रधानापूर्वोत्पादने सहकारि भवति। प्रधानापूर्वं परमापूर्वं अथवा फलापूर्वमुत्पाद्य अङ्गापूर्वेस्सह विनश्यति। परमापूर्वन्तु फलोदयं यावत् यजमानात्मनि तिष्ठति। फलोत्पत्तेरनन्तरं नश्यति चेति इयमपूर्वप्रक्रिया मीमांसादर्शनाभिमता।

**भेदाभेदविचारः** जात्याकृतिव्यक्तयः पदार्थ इति नैयायिकाः। समानाकार-बुद्धिजननयोग्यधर्मविशेषः, नित्यत्वे सति अनेकसमवेतत्वं वा **जातिः**, यथा गोत्वम्, घटत्वम्, अवयवसंस्थानविशेषः **आकृतिः** यथा सास्नादिमत्वम्, कम्बुग्रीवादिमत्वं वा, परिच्छिन्नपरिमाणाश्रया **व्यक्तिः**, यथा घटः, गौः इत्यादि। ततश्च एतेषां सम्बन्धस्स मवाय इति च न्यायदर्शनम्। समवायानङ्गीकतृणां आकृतिर्हि व्यक्त्या नित्यसम्बद्धेति वादिनां मीमांसकानां मते जातिव्यक्त्योः भेदाभेदसम्बन्ध इति सिद्धांतः **शास्त्रदीपिका भाट्टचिन्तामण्यादौ** विस्तृतः। भिन्नमेव सामान्यं व्यक्तिभ्यः। व्यक्तिसम्बन्धित्वात् न पृथक्प्रतीतिः। तयोस्तु समवायस्सम्बन्धः। समवायश्च अयुतासिद्धानां इहप्रत्ययहेतुः। तत्तु न सम्भवति। इहप्रत्ययासिद्धेः। इयं गौः इति किल सर्वेषां सर्वथा प्रतीतिः। न तु इह गोत्वमिति। किञ्च का नाम **अयुतसिद्धिः**? युतसिध्यभाव इति वक्तव्यम्। का नाम **युतसिद्धिः**? पृथग्गतिमत्वम्, पृथगाश्रयाश्रितत्वं वा, तदभाव अयुतसिद्धिः। यद्येवं अवयवावयिनोः समवायः सम्बन्धो न स्यात्। विनापि अवयविचलनेन अवयवानां चलनदर्शनात् अवयविनः अवयवानाञ्च स्वावयवाश्रितत्वात्। तथा सामान्यस्य व्यक्त्याश्रयत्वात् व्यक्तेश्च स्वावयवाश्रितत्वात् पृथगाश्रयाश्रित्वात् अयुतसिद्धत्वाभावात् समवायानुपपत्तिः। ततश्चैवं वक्तव्यम् येन सम्बन्धेन आधेयं आधारे स्वानुरूपां बुद्धिं जनयति स सम्बन्धः **समवाय** इति। यदि जात्यात्मना व्यक्तिः प्रतीयते, ततो जातिव्यक्त्योः अभेद एव प्रतीतिबलात् आपद्यते, न भेदाभ्युपगम इति प्रश्नः। तस्येदमुत्तरम्, गौरयं शाबलेयः, गौरयं बाहुलेयः इत्युभयत्र गवाकारोऽनुवर्तमानो दृश्यते शाबलेयबाहुलेयाकारौ तु व्यावर्तेते। तद्यदि तयोः शाबलेयबाहुलेयगवाकारयोः अभेदस्स्यात् एकानुवृत्तौ इतरोऽप्यनुवर्तेत। तदव्यावृतौ गवाकारोऽपि व्यावर्त्तेत। किञ्च तस्यामेव व्यक्तौ इयं गौरिति गवात्मना प्रतीयमानायामपि न इयंबुद्धिगोबुध्योः गौः गौः इतिवत् पर्यायत्वं प्रतीयेत। तस्मान्नाभेदः। कथं तर्हि तादूप्यं व्यक्तेः प्रतीयेत। इदमेव हि तादूप्यं व्यक्तेः यत्तत् समवायः सम्बन्धः। तस्यैष महिमा येन आधेयं आधारं स्वबुध्या अनुरञ्जयति, तस्माददोषः। अथवा तादात्म्य प्रतीतेरभेदोऽप्यस्तु, पूर्वोक्तरीत्या भेदोऽपि। तस्मात् प्रमाणबलेन भिन्नाभिन्नत्वमेव

युक्तम्। भेदाभेदौ तु विरुद्धौ, कथं तयोः एकत्र भानं उपपन्नं स्यात् इति शङ्कायास्तु एवमुत्तरम् न विरोधस्तयोः, सहदर्शनात्। यदि हि इदं रजतम्, नेदंरजतम् इतिवत् परस्परोपमर्देन भेदाभेदौ प्रतीयेयाताम् ततो विरुध्येयाताम्। न तु तयोः परस्परोपमर्देन प्रतीतिः। इयं गौः इति बुद्धिद्वयं अपर्यायेण प्रतिमासमानं एकं वस्तुद्वयात्मकं व्यवस्थापयति। सामानाधिकरण्यं हि अभेदमापादयति। अपर्यायत्वञ्च भेदम्, अतश्च प्रतीतिबलादविरोधः। अपेक्षाभेदश्च अविरोधं गमयति–तथाहि–गोरूपेण निरूप्यमाणया जात्या व्यक्तिः अभेदेन प्रतीयते गौरयं शाबलेय इति। यदा तु जातिः व्यक्त्यन्तरात्मना निरूप्यते तदा इयं व्यक्तिः ततो भिन्नरुपा अवसीयेत, योऽसौ बाहुलेयो गौः, सोऽयं शबलेयो न भवति इति। एवं धर्मिणो द्रव्यस्य रसादिधर्मान्तररुपेण रूपादिभ्यो भेदः, द्रव्यरूपेण चाभेदः। तथा अवयविनः स्वरूपेण अवयवैरभेदः, अवयवान्तररूपेण तु अवयवन्तरे भेद इत्यहनीयम्। तत्र यथा दीर्घह्रस्वादीनां विरुद्धेस्वभावानामपि अपेक्षाभेदात् एकत्रापि अविरुद्धत्वं प्रतीतिवलादङ्गीक्रियते तथा भेदाभेदयोरपि द्रष्टव्यम्। प्रतीत्यविशेषात्। भेदाभेदावभासिनी प्रतीतिरेव न सम्भवतीति प्राभाकराः। विलक्षणरूपा हि प्रतीतिः भेदावभासः। अविलक्षणरुपा प्रतीतिश्च अभेदावभासः। तत् येन भेद प्रतिभाससमये जातिरूपं व्यक्तिरूपं च प्रतीतम् तेन अभेदप्रतीतिबेलायां तयोरन्यत् प्रत्येतव्यम्। तत्र एकस्य द्विरवभासोऽयं भवेत्। न पुनः इतरेण अभेदः प्रतीतो भवति। तस्मान्नास्ति भेदाभेदयोरेकत्र प्रतीतिरिति प्राभाकराणामाशयः। तदिदं भाट्टा न स्वीकुर्वन्ति। तेषामयमाशयः नहि वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः, तद्भावेऽपि अभेदात्। प्रथमं व्यक्तिदर्शनेऽपि हि अस्ति जातिव्यक्त्योः द्वयोः प्रतीतिः। न च तदा तयोः भेदः प्रतीयते, व्यक्त्यन्तरदर्शनेन तु जातेरन्वयात्, पूर्वव्यक्तेश्च व्यतिरेकात्, अन्वयव्यतिरेकाभ्यां जातिव्यक्त्योः भेदावधारणं प्राभाकरस्यापि सम्मतत्वात्। तथा देवदत्तमुपालभ्य कालान्तरे यज्ञदत्तं दूरात् पश्यन् पूर्वदृष्टं च देवदत्तं स्मरन् वस्तुतः तद्विलक्षणमेव पुरुषद्वयं प्रत्येति, तथापि न भेदभवधारयति, संशेते हि किं स एवायं देवदत्तः, किं वा अन्य इति। तस्मात् वस्तुद्वयप्रतीतिरेव भेदप्रतीतिरित्ययुक्तम्। तथा तमेव देवदत्तं कालान्तरे दूरात् पश्यन्नपि किं स एवायमुतान्य

इति सन्दिहानो वस्तुगत्या एकमेव प्रतियन्नपि नाभेदमवधारयितुमलं भवति। तस्मात् वस्तुद्वयप्रतीतिरेव न भेदप्रतीतिः। नापि एकवस्तुप्रतीतिरेव अभेदप्रतीतिः। किन्तु अन्योऽयमिति बुद्धिः भेदावभासः, अनन्योऽयमिति च अभेदावभासः। अस्ति च शाबलेय बाहुलेयौ उपलभमानस्य अयं गौः, अयमपि गौः इत्यभेदावभासः, अन्यः शाबलेयात् बाहुलेय इति भेदावभासश्च। तस्मादुपपन्नो भेदाभेदावभासः। तथाचेयं निष्कर्षसिद्धिः - जातिः व्यक्तिमात्रावसायिनी सर्वगतैवेति पक्षद्वयम्। तत्र प्रथमपक्षे तस्या व्यक्त्यात्मकत्वात् व्यक्तिमात्रे तदुपलम्भस्साधीयानेव। यदा तु सर्वगतत्वं, तदा व्यक्तीनामेव तदभिव्यञ्जकत्वात् व्यक्त्यात्मकत्वाच्च जातेः संयुक्ततादात्म्येनैव ग्रहणम्। तादृशस्य सम्बन्धस्य व्यक्तिदेश एव सत्त्वात् न सर्वत्रोपलब्धिप्रसङ्गः। अभेदे सत्यपि जातिव्यक्त्योर्भेदस्यपि विद्यमानत्वात् नित्यानित्यत्ववत् सर्वगतत्वमपि तस्या नानुपपन्नम्। यदि जातिजातिमन्तौ अत्यन्तभिन्नौ तर्हि इदं गोत्वे प्रतीतिस्स्यात्, इमौ घटपटाविति-वत्। यद्यत्यन्ताभिन्नौ तर्हि हस्तः कर इतिवत् इदंगोपदयोः पर्यायत्वं स्यात्। तस्मादि-दंगोपदयोरपर्यात्वे सति सामानाधिकरण्यदर्शनात् भेदाभेदसमुच्चयः स्वीकर्तव्यः। एवं अवयवाववियिनोः गुणगुणिनोः क्रियाक्रियावतोरपि भेदाभेदोऽनुसन्धेयः।

पूर्वमीमांसायां **ज्ञानम्।** मीमांसादर्शने **ज्ञानं नाम मानसी क्रिया।** इन्द्रियेण साकं चक्षुषः संनिकर्षे मनसि च आत्मना संयुक्ते ज्ञानं संजायते। तत्र मनःक्रियाजन्य आत्मनि क्रियाविशेष एव ज्ञानम्। यावत्कालमिन्द्रियेण सह अर्थस्य तथा इन्द्रियेण सह मनसः संयोगक्रिया प्रचलति तावत्कालं ज्ञानसंततिरपि तिष्ठति। अत एव यथा तडागे वायुसंयोगजन्या लहर्यः क्रियाविशेषात्मिकाः तादृशलहरीजन्याः अन्या लहर्योऽपि क्रियाविशेषा एव तथेन्द्रियार्थसंयोगजन्यं ज्ञानमपि क्रियाविशेषा एव। यदि ज्ञानं न क्रिया तदा ज्ञानार्थमुपदिष्टा विधयो निरर्थकाः स्युः शास्त्रं हि कर्तव्यमुपदिशति। यदि ज्ञानस्य न क्रियात्वम् तदा तदुपदेशः कथम्? उपदेशो हि लिङ-लोट्-तव्यत्-प्रत्यय रूपेण विधिना भवति। दुग्धं पिब, विषं मा भुङ्क्ष्व, सर्वं खल्विदं ब्रह्म। तज्जलानिति शान्त उपासीत ''इत्यादि ज्ञानोपदेशकानां विधीनामनर्थक्यं भवेत्। न चैतन्न्याय्यम् तथा सति शास्त्राप्रामाण्यप्रसङ्गो

भवेत्। शास्त्रैकदेशस्याप्रामाण्यप्रसक्तावपि सत्यं वद धर्मंचर इत्यादीनां अप्रामाण्यप्रसक्ति-र्न भवेदिति अर्धजरतीयस्य अनौचित्यम्। यतो हि शब्दस्य लौकिकस्य वैदिकस्य वा एष स्वभावो यत् तत्राप्रमाण्यशंकायां सर्वस्यापि अप्रामाण्यं दुर्वारं भवति। नैव कोऽपि मानवः सर्वदा मिथ्यैव वदतीति वक्तुं शक्यम्। कदाचित् सत्यमपि वदति, कदाचिदसत्यमपि वदति, परन्तु एकदा मिथ्यावचनेन दूषिते मानवे जनाः कदापि न विश्वसन्तीत्यनुभवः। तस्मादाशङ्कितं आंशिकमपि अप्रामाण्यं शास्त्रस्य नाङ्गीकरणीम्। न च ज्ञानस्य क्रियारूपत्वे तत्र यथेष्टव्यवहारापत्तिः, यथा हि पद्भ्यां गच्थति, अश्वेन गच्छति, न वा गच्छति। तथैव शास्त्रेऽपि भवेदिति वाच्यम्। शास्त्रप्रामाण्यबुद्धेर्नियामकत्वात्। यथा हि लोके नियामकाभावात् यथेष्टं व्यवहारो न तथा शास्त्रे। प्रामाण्यबुद्धिः सदैव यथेष्टं व्यवहारं निरुणद्धि। एतदेव शास्त्रस्यालौकिकत्वम्। तथासत्येव शास्त्रस्यापि मोक्षोपयोगित्वं सिध्येत् - यो हि संसारे समासक्त्वेताः जीवो नानाविधानि पापानि कर्माणि कुर्वन् प्रत्यहं दुःखाग्निना दन्दह्यमानचेताः कदाचित् निर्वेदं प्राप्तोऽस्मात् दुःखसागरात् आत्मानं मोचयितुमिच्छति तदा तं प्रति शास्त्रं क्रमेण वैराग्यमुपदिशत् ध्यानधारणादिकं वा नित्य कर्मानुष्ठानं वा समुपदिशतीति सर्वैरपि दार्शनिकैरास्तिकैर्वक्तव्यम्। केवलं परमात्माऽस्ति सच्चिदानन्दात्मकः, सर्वं दृश्यमानं मिथ्या'' इत्यादि कथनेन कस्य लाभो भवेत्। सर्वमिदमनित्यम् तस्मात् त्वं अत्रासक्तिं मा कुरु इत्युपदेशेऽस्ति तथाचरणरूपां क्रियां कर्तुमिच्छा। तस्मान्न केवलं वस्तुस्वरूपबोधनं ज्ञानं सुखसाधनम् किन्तु तथा ज्ञात्वा तदनुष्ठानरूपम्। ततश्चागतं **ज्ञानस्य क्रियारूपत्वम्।** तत्र मोक्षोपयोगिनो ज्ञानस्यापि स्वरूपे महती विप्रतिपत्तिः -केचन शून्यमिति भावयन्ति। अन्ये नित्योऽहमिति, केचित् सच्चिद्रूपमात्मानम्, अपरे तु सच्चिदानन्दरूपमात्मानं भावयन्ति। एताः सर्वाः कल्पनाः स्वस्वमतानुसारं स्वकपोलकल्पनाकल्पितास्सन्ति तत्र शास्त्रं यद् वदेत् तदेव प्रमाणत्वेन स्वीकरणीयम्। एतेषां सर्वेषां पदार्थानाम् अलौकिकत्वेन तत्र शास्त्रमेकमुत्सृज्य नान्यत् प्रमाणं भवितुमर्हति। शास्त्रं च स्वतःप्रमाणम्। शास्त्रं तु नित्यानि कर्माणि चोदयति। तेषामकरणे प्रत्यवायं ब्रूते। न हि प्रत्यवायवान् कश्चन मोक्षेऽधिकारी भवितुमर्हति।

तस्मात् प्रत्यवायपरिहारार्थं नित्यकर्माणि मुमुक्षुणाऽनुष्ठेयान्येव। प्रारब्धकर्मणां तु भोगादेव क्षयः। संचितानान्तु नित्यकर्मणामाचरणात् क्षयः। आसक्त्यभावादेव क्रियमाणानामभावः। एवंरीत्या सर्वकर्मक्षये भोगस्याभावादेव आत्मा मुक्तो भविष्यति। न तु एतदर्थं ज्ञानस्यापेक्षा अस्ति। नानेन शास्त्रविरोधः। यतो हि "तमेव विदित्वाऽतिमृत्युमेति" इत्यत्र विहितं ज्ञानमुपासनात्मकं वा भावनात्मकं वा कर्मरूपमेव। तथा च नित्येषु कर्मसु तस्यापि अन्तर्भावः कर्तव्य एव। यदि च केवलं नित्यस्य वा सच्चिदानन्दरूपस्य वा आत्मनो ज्ञानमेव कारणं तदा यः कोऽपि संसारी अनन्तकल्मषराशिकलुषितचेता अपि एतद्वाक्यं पठित्वा तदर्थं चावगम्य कृतकृत्यः संसारपाशात् मुच्येत। नचैवं सुलभो मोक्षः कस्यापि दर्शने दृश्यते। अत एव परमपुरूषार्थ इत्युच्यते। किञ्च तत्त्वज्ञानपदेन केवलं वाक्यज्ञानं न विवक्षितम्। किन्तु अनुभवात्मकमिति वक्तव्यम्। अनुभवश्च चिरं शास्त्रविहितकर्मानुष्ठानजन्या दृढा चित्तवृत्तिरेव नान्य इति सर्वसम्मतम्। तथा च शास्त्रप्रामाण्यस्वीकारपूर्वकं यत् शास्त्रीयकर्तव्यानुष्ठानं तदेव ज्ञानपदेन पूर्वमीमांसादर्शने विवक्षितम्।

**विषयताविचारः** –जातिव्यक्त्योः समवायाङ्गीकर्तृणां नैयायिकानां मते अयं धट इति ज्ञाने धटत्व विषयः, जगत् प्रमेयमिति ज्ञाने प्रमेयत्वेन जगद् विषयः।। विषयता चात्र विषय इत्याकारकप्रतितिसाक्षिकः स्वरूपसम्बन्धविशेषः। एवं धटो ज्ञानविषयः, पटो ज्ञानविषयः, इत्यनुगतप्रतीतिसाक्षिकः ज्ञानविषयस्वरूपसम्बन्धविशेषः। अत्र ज्ञानविषयत्वं च ज्ञानसम्बन्ध एव। इयं च विषयता त्रिविधा विशेष्यता प्रकारता संसर्गता चेति। यथा अयं घट इति प्रत्यक्षे घटत्वे प्रकारता, इदमर्थे विशेष्यता समवायादौ सम्बन्धे च संसर्गता इति। परन्तु मीमांसकेषु भाट्टचिन्तामणिकारादयः विषयतां ज्ञानविषयाभ्यामतिरिक्तां स्वीकुर्वन्ति। सा नित्या ज्ञानोत्पाद्या वा भाविभूतयोरपि पदार्थयोस्तिष्ठति। न च विषयतायां मानाभावः, विषयज्ञानातिरिक्तायास्तस्याः आवश्यकत्वात्–तथाहि–न तावत् विषयता ज्ञानस्वरूपा, तथात्वे घटप्रकारक भूतलविशेष्यकज्ञानात् भूतलप्रकारकघटविशेष्यकानुव्यवसायापत्तेः। नापि विषयस्वरूपा विशिष्टज्ञान–समूहालम्बनयोः अवैलक्षण्यापत्तेः। अत उभयातिरिक्ता, सा च लाघवात्, अन्यथा अनन्ततद्विषयकज्ञानैः अनन्ततत्तद्विषयतो–

त्पत्तितन्नाशकल्पनात् गौरवापत्तेः। एवञ्च नष्टयुधिष्ठिरादिविषयकज्ञानोत्पत्तिरपि सुलभेति युक्तम्। केचित्तु आत्मघटयोः व्याप्यतालक्षणसम्बन्धो मानसप्रत्यक्षः विषयतेत्याहुरिति भाट्टचिन्तामणौ। अन्ये तु तत्तज्ञानजन्या तत्रद्विषयनिष्ठा विषयता सा च नष्टभाविविषयनिष्ठापि। द्वित्वबहुत्वयोर्भाविभूतपदार्थनिष्ठत्ववत् तत्तज्ञानोत्पाद्यायाः विषयतायाः अपि भाविभूतपदार्थनिष्ठत्वम्। आश्रयनाशेऽपि कपालादिनाशे घटादेरिव विषयतायास्सत्वे बाधकाभावः। तथा च नष्टघटादावपि घटो ज्ञात इत्याद्यनुभवात् विषयताया भूतभाविनिष्ठत्वम्। तस्मादतिरिक्ता विषयता। किञ्च ज्ञानेच्छाकृतिसंस्काराणां समानविषयकत्वेनैव कार्यकारणभावे लाधवं विषयताया अतिरिक्तत्वस्वीकारे एव। तस्मादतिरिक्ता विषयता। इयमेव ज्ञातता प्राकट्यमिति व्यवह्रियते। निरूपितञ्चैतत् पूर्वम्। विषयतायाः पदार्थान्तरत्वेन संमवायेन उत्पत्यभावेन समवायिकारणानावश्यकता चेति नव्यमीमांसकाः।

मीमांसादर्शने **सृष्टि-प्रलयावपि** स्वीक्रियेते-मन्त्रार्थवादेतिहासप्राण्यात् सृष्टि-प्रलयाविष्येते। तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात् स्वमाहात्म्येन आत्मन एव पशुरूपमभिनिर्माय वपोत्खननादि कृतवान्, ततोऽसमाप्ते एव कर्मणि तूपरः पशुः (शृङ्गरहितःपशुः) उत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम्। महता प्रजापतिना यत्नेन चरितमिति सर्वं सत्यमेव। प्रतिसृष्टि च तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्न अनित्यताप्रसङ्गश्च इति मीमांसादर्शनमपि स्वीकरोति। परन्तु न्यायवैशेषिकप्रक्रियायाः मीमांसादर्शने प्रकारान्तरं दृश्यते। तत्र न्यायवैशेषिकयोरियं प्रक्रिया-त्रिविधं **वस्तुजातम्**-संप्रतिपन्नचेतनकर्तृकम् यथा धटादि, संप्रतिपन्नचेनाकर्तृकं यथा वियदादि, विप्रतिपन्नचेतनकर्तृकं महीरूहाङ्कुरादि। तेषु तृतीयं सावयवत्वेन सिद्धकार्यत्वकं पक्षीकृत्य बुद्धिमत्कर्तृकं कार्यत्वात् पटवत् इति ईश्वरं कर्तारं अनुमापयति। स ईश्वरः प्राणिनां भोगभूतये सिसृक्षते। सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यः तत्संयोगेभ्यः परमाणुषु कर्मोत्पत्तिः, ततो द्वयोस्संयोगः, द्यणुकोत्पत्तिः, त्र्यणुकोत्पत्तिरित्या-दिरीत्या, महदण्डमारभ्यते। तस्मिन् चतुर्वदनं सकललोकपितामहं ब्रह्माणं उत्पाद्य प्रजासर्गे नियुंक्ते। स च अतिशयज्ञानवैराग्यैश्वर्यसंपन्नः सर्वप्राणिनां पूर्वजन्मकर्मविपाकं

विदित्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन् मानसान् मनून् देवर्षिपितृगणान् चतुरो वर्णान् अन्यानि भूतानि सृजति वासनानुरूपैधर्मवैराग्यज्ञानैश्वर्यैः संयोजयति। अत्र जगत्सृष्टौ ईश्वरस्य परमाणवः समवायिकारणम्, तत्संयोग असमवायिकारणम्, क्षेत्रज्ञपदवाच्या जीवात्मानो धर्माधर्मौ च निमित्तकारणम्। एवं सर्गकाले ईश्वरेच्छां अदृष्टं च निमित्तमासाद्य परमाणुषु कर्मोत्पत्तिः, ततो पुनः पृथिव्याद्यवयविचतुष्टयोत्पत्तिः। निमित्तभूतादृष्टवैचित्र्यात् ईश्वरेच्छाजन्यक्रियावैचित्र्यवशाच्च जरायुजाण्डजोद्भिज्जस्वेदजभेदं शरीरमारभते। इति। एषा सृष्टिप्रक्रिया वैशेषिकोक्ता पूर्वमीमांसादर्शनाभिमता। परं कश्चन भेदः पूर्वमीमांसायाम्-इच्छायाः कार्यमात्रजनकत्वं वैशेषिकैस्स्वीकृतम्। न तत्र मानं दृश्यते। आत्मनिष्ठप्रयत्नोत्पादनं विना इच्छायाः कार्यजनकत्वं नास्ति। अचेतनक्रिया-निष्ठजनकत्वं च नानुभूतम्। अतः तादृशहेतुहेतुमद्भावकल्पनेन अत्यन्तगौरवापत्तिः। आवश्यकादृष्टहेतुतया अन्यथासिद्धिश्च। अतो धर्माधर्मयोरेव विजातीयक्रियाजनकत्वं न ईश्वरेच्छाप्रयत्नादीनामिति। तेन ईश्वरेच्छायां तस्याः कार्यजनकत्वे च 'स ऐक्षत बहु स्यां प्रजायेय इति श्रुतिरेव मानम्। तत्र च आत्मन आकाशः सम्भूतः' इत्यादाविव ईक्षतिः अदृष्टे लाक्षणिकः इति स्वीक्रियते। एवं **प्रलयोऽपि** वैशेषिकोक्त एवाङ्गीक्रियते। तत्रेयं वैशेषिकप्रक्रिया-ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मण अपवर्गकाले संसारे खिन्नानां सर्वप्राणिनां रात्रौ विश्रान्त्यर्थं सकलभुवनाधिपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियभूतोपनिबन्धकानां सर्वात्मगतानां अदृष्टानां वृत्तिनिरोधे सति महेश्वेरेच्छात्माणु-संयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः तत्संयोगनिवृत्तौ तेषां परमाण्वन्तो विनाशः। एवं पृथिव्यप्तेजोवायूनामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते। धर्माधर्मसंस्कारानु-विद्धाः आत्मानस्तावन्तमेव कालमवतिष्ठन्ते। स च प्रलयः खण्डप्रलयः महाप्रलयश्चेति द्विविधः। सकलकार्यद्रव्यानाधारकार्याधिकरणसमयः **खण्डप्रलयः**। सच आगमप्रति-पाद्यः। द्वितीयस्तु महाप्रलयः सकलभावकार्यलयः इति। मीमांसकास्तु संसारप्रवाहस्य बीजाङ्कुरन्यायेन अनादित्वात् अनन्तत्वाच्च महाप्रलयसद्भावे मानाभाव इति वदन्ति।

प्रपञ्चितञ्चैतत् पूर्वमेव इति नात्राधिकं वर्ण्यते। धाता यथापूर्वमकल्पयदिति मन्त्रलिङ्ग-प्रमाणात् अवान्तरप्रलयस्वीकारो भवतु नाम, परन्तु महाप्रलये मानाभाव एव। यदि पटः अदृष्टासमानकालीनध्वंसप्रतियोगी भावकार्यत्वात् मुक्त्यव्यवहितप्राक्कालीनज्ञानवत्, बुद्धिः प्रागभावासमानकालीनध्वंसप्रतियोगिनी भावकार्यत्वात् मुक्त्यव्यवहितप्राक्कालीना-दृष्टवत्, सुखं गन्धानाधारसमयवृत्तिध्वंसप्रतियोगि जन्यगुणत्वात् संस्काराजनकानुभववत् आकाशवदिति व्यतिरेकिणा, एककालीनाः सर्वे परमाणवः समग्रोपादेयप्रबन्धशून्याः आरम्भकत्वात्, नष्टपवनारम्भकत्वात्, नष्टपवनारम्भकपरमाणुवत्, दुःखसन्ततिर-त्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवत् इत्यनुमानानि महाप्रलये प्रमाणानीत्युच्यन्ते तानि उपाधिग्रस्तत्वात् न प्रमाणानीति वदन्ति मीमांसकाः। तथाहि–अमूर्तमात्रवृत्य-भावत्वस्योपाधित्वात्। उक्तः पक्षः कार्यद्रव्याधाराधारः मूर्तमात्रवृत्यभावमात्रत्वात् तन्तुनिष्ठपटप्रागभावत् इति सत्प्रतिपक्षाच्च। एवं द्वितीयतृतीययोः अमूर्तमात्रवृत्ति-भावत्वमुपाधिः। एवं परमाणवः समग्रोपादेयप्रबन्धवन्तः प्रागभाववत्वात् कपालवदिति सत्प्रतिपक्षश्च। यदि अनुमानमेव प्रमाणं स्वीकृत्य महाप्रलयस्वीकारः तर्हि नरशिरः कपालं शुचि प्राण्यङ्गत्वात् शङ्खवदिति अनुमानस्यापि प्रामाण्यापत्तिरिति दूषयन्तो मीमांसकाः महाप्रलयं न स्वीकुर्वन्ति।

मीमांसादर्शने **मोक्षस्वरूपम्**–दर्शनेषु मोक्षस्वरूपनिरूपणे महान् आशयभेदस्स्व-रूपभेदश्च दृश्यते। केचन अभावस्वरूपं, अपरे ध्वंसस्वरूपम, इतरे भावस्वरूपं तं वर्णयन्ति। संस्काराजनकानुभवध्वंसः, दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसः, दुःख-मयसंसारबीजमिथ्याज्ञानध्वंसः, शरीरेन्द्रियबुद्ध्यादि तन्निदानधर्माधर्मध्वंसः, आत्यन्तिकदुः खप्रागभावः, संस्काराजनकभोगविषयकदुःखध्वंसः, समानाधिकरणदुःखप्रागभवा-सहवृत्तिदुःखध्वंसः इत्यादिमोक्षलक्षणानि विभिन्नदर्शनेषु दृश्यन्ते। परन्तु मीमांसादर्शने भाट्टप्राभाकरसिद्धान्येव लक्षणानि प्रधानतया निरूप्यन्ते–"दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः। आनन्दस्यानुभूतिस्तु मुक्तिरुक्ता कुमारिलैः॥" इति **मानमेयोदय**प्रमाणात् विषयसम्बन्धरहिता परानन्दानुभूतिर्मोक्ष इति भाट्टाः। **शास्त्रदीपिकायान्तु** कुत्रचित्

अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः इति श्रुतिवाक्यं प्रमाणीकृत्य सुखदुःखयोरनुपयोग एव मोक्ष इति, अपरत्र प्रपञ्चसम्बन्धविलयो मोक्षः, इत्युक्तम्। प्रपञ्चश्च पुरूषं त्रेधा बध्नाति–भोगायतनं शरीरम्, भोगसाधनानि इन्द्रियाणि भोग्याः शब्दादयो विषयाः। भोग इति सुखदुःखविषय अपरोक्षानुभव एव उच्यते। तस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयः मोक्षः। तथा च पूर्वोत्पन्नस्य शरीरस्य इन्द्रियाणां विषयाणाञ्च नाशः, एवं बन्धोत्पादकानां धर्माधर्माणां निश्शेषं नाशः शरीरेन्द्रियविषयाणां पुनरनुत्पत्तिश्च यस्यामवस्थायां स एव मोक्ष इति भवति। तस्मात् प्रपञ्चस्य सर्वथा विलयो मुक्तिः, स च दुःखाभावरूपत्वात् पुरुषार्थः इति भाट्टचिन्तामणावनूदितश्च। मीमांसकमते प्रपञ्चस्य पारमार्थिकसत्यतया प्रपञ्चसम्बन्धविलय एव, नतु प्रपञ्चविलय इति वक्तव्यम्। प्राभाकरमते तावत् मोक्षस्वरूपं भाट्टमतात् भिन्नं दृश्यते। नियोगसिद्धिरेव मोक्ष इति प्रकरणपञ्चिकायाः **तत्त्वालोकप्रकरणात्** ज्ञायते। नित्यकर्मानुष्ठानेन विफलीकृते सञ्चितकर्मजाते आत्मा निर्मल आसक्तिरहितः शास्त्रप्रामाण्यदत्तहस्तावलम्बः कर्तव्यबुद्ध्या कर्माणि अनुतिष्ठन् तिष्ठति। यानि तु प्रारब्धदुःखानि तानि च निरासक्ततया सेवमानो न विरुद्धं न वा अनूकूलं चेष्ठते। येन संस्कारो न सम्भवति। एवञ्च देहेन्द्रियाणां सम्बन्धः अत्यन्तविच्छिन्नो भवति। स एव मोक्षः। आत्यन्तिकस्तु देहोच्छेदः निःशेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति युक्तमिति **प्रकरणपञ्चिका**। मोक्षोऽपि सकलदुःखोच्छेदरूपतया विलक्षणः पुरुषार्थ इति **तन्त्ररहस्ये**। विनश्वरविविधपुरुषार्थविरक्तः सकलदुःखध्वंसकामोऽधिकारी। इतरस्तु कर्माधिकारी। तमधिकृत्यैव सर्वाणि कर्मशास्त्राणि प्रवर्तन्ते। मोक्षशास्त्राणि तु तदितर-पुरुषमिति च तन्त्ररहस्यम्। तत्र भाट्टमीमांसकाः प्रपञ्चविलयो मोक्षः एकविंशतिदुः-खध्वंसो मोक्ष इति च मतद्वयं निरस्यन्तः प्रपञ्चसम्बन्धो बन्धः, प्रपञ्चसम्बन्धविलयो मोक्ष इत्याशेरते। शरीरादिप्रपञ्चः पुरुषशब्दवाच्यमात्मानं त्रिधा वध्नाति। तत्र भोगायतनं शरीरम् भोगसाधनानि चक्षुरादीनीन्द्रियाणि अन्तरिन्द्रियं मनश्च। भोग्याश्शब्दादयो विषयाः। भोगशब्देन सुखदुःखसाक्षात्कारोऽभिधीयते। तथा च एतत्त्रिविधस्यापि बन्धस्या-त्यन्तिकसमुच्छेदो मोक्षः। उच्छेदे आत्यन्तिकत्वं च पूर्वोत्पन्नानां देहेन्द्रियविषयाणां

विनाशः, अनुत्पन्नामात्यन्तिकोऽनुत्पत्तिः। स च तदुत्पादकयोः धर्माधर्मयोर्निश्शेषयोः परिक्षयात्, देहादीनां आत्यन्तिकी निवृत्तिः। प्रारब्धकर्मणां भोगेनैव परिक्षयः। नित्यनैमित्तकयोरनुष्ठानं प्रत्यवायपरिहाराय, काम्यानां प्रतिषिद्धानां च कर्मणां परिवर्जनम्। देहान्तरारम्भे असति, वर्तमानस्य शरीरस्य पातात् स्वरूपेण अवस्थानं मोक्ष इति। "मोक्षार्थी न प्रवर्तेत तथा काम्यनिषिद्धयोः। नित्यनैमिके कुर्यात् प्रत्यवायजिहासया।" इति सम्बन्धश्लोकवार्तिकमपि प्रमाणम्। तथा च स्वेन रूपेणावस्थानमिति पर्यवस्यति। तत्रात्मानन्दोऽभिव्यज्यते, न तु संसारदशायाम्, अनुभवहेतोरभावात्। देहेन्द्रियादीनां आत्यान्तिकध्वंसानुगृहीतं मनः तदनुभवसाधनम्। अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः, इत्यादि वाक्यं प्रमाणम्। अत एव मोक्षाभिधानप्रसङ्गे नित्यसुखाभिव्यक्तिर्मोक्ष इति मीमांसकमतम्।

**नीतितत्वाविर्भावे** "वयन्तु सकलदुःखविलये सति नित्यनिरतिशयानन्दाभिव्यक्तिलक्षणं मोक्षमाचक्ष्महे इत्युक्तम्। **मानमेयोदये** सयुक्तिकं व्यवस्थापितश्च। परन्तु **सम्बन्धवार्तिक-प्रकरणपञ्चिका-शास्त्रदीपिकादि**ग्रन्थ पर्यालोचने तु आत्यन्तिकविशेषगुणोच्छेदरूप एव मोक्षस्तेषां मीमांसकानामभिमत इति स्पष्टमवगम्यते। प्रत्युत आनन्दावाप्तिरिति पक्षस्य सविस्तरं खण्डनम्, आनन्दादिश्रुतिगतशब्दानं दुःखाभावपरतया व्याख्यानमुपलभ्यते। **वार्तिक**मनुसृत्यैव **प्रकरणपञ्चिकायां** मोक्षस्वरूपमुपावर्णि। तामेव सरणिमनुसृत्य **शास्त्रदीपिकाया**स्तर्कपादे आत्मवादान्ते अद्वैतश्रुतीनां स्वाभिमतार्थयोजनेन आनन्दावाप्तिरिति पक्षमुपमर्दयन् आत्मवैशेषिकगुणोच्छेदरूपमेव मोक्षतत्त्वमुपवर्णितम्। **भाट्टचिन्तामणिस्तु** मोक्षविचारप्रकरणे आत्यन्तिकदुःखप्रागभावमेव मोक्षं वर्णयति। आत्यन्तिकदुःख प्रागभावो मोक्ष इति गुरव इति च निर्दिशति। बुद्ध्यादि विशेषगुणविलये सति आत्मनः स्वरूपेण अवस्थानं मोक्ष इति प्राभाकरमतमिति **मानमेयोदये** निर्दिष्टम्। **मोक्षसाधनता**विचारे सांख्याः प्रकृतिपुरुषविवेकज्ञानं साधनमिति नैयायिकाः षोडशपदार्थतत्त्वज्ञानात् मोक्ष इति ब्रह्मज्ञानादेव मोक्ष इति वेदान्तिनश्च सङ्गिरन्ते। कर्मणान्तु चित्तशुद्धिसम्पादकत्वेन प्रयाजादिवत् आरादुपकारकत्वम्। अतएव

बहिरङ्गे साधने यज्ञादिकं परिगणयन्ति। मीमांसादर्शनन्तु इदमनुपन्नमिति मत्वा ज्ञानकर्मसमुच्चयमेव मोक्षसाधनं साधयति। अत्र ज्ञानशब्द उपासनं निर्दिशति। ज्ञानेन सञ्चितानां उत्पन्नधर्माधर्माणां नाशः, नित्यकर्मभिस्तु तदनुत्पत्तिः, अन्यथा नित्याकरण-जन्यप्रत्यवायेन शरीरोत्पत्तिप्रसङ्गात्। तस्मादुभयोरपि शरीरोत्पत्त्यभावसंपादकतया मोक्षजनकता। प्रारब्ध कर्मणान्तु न कर्मभिः, न ज्ञानेन वा नाशः किन्तु उपभोगेनैव। ज्ञानवतोऽपि विहिताननुष्ठाननिषिद्धाचरणाभ्यां प्रत्यवायोत्पत्तेः कर्म कर्तव्यमेव। तेन ज्ञनकर्मणोः समुच्चयेन जनकत्वम्। तत्रापि उपनिषज्जन्यमात्मज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थम्। उपसनात्मकन्तु दृष्टोपयोगाभावात् अभ्युदयफलकं निःश्रेयसफलकञ्च। अतश्च ज्ञानकर्मसमुच्चयः सिद्धः। तत्रापि समुच्चयो द्वेधा भवति-समप्रधानभावेन गुणप्रधानभावेन च। तत्राद्यं यथा आग्नेयादिनां षण्णां यागानां समप्राधान्येन समुच्चयः। द्वितीयं यथा-प्रयाज-दर्शपूर्णमासयोः। तत्रापि कर्म प्रधानं, ज्ञानं गुणः विपरीतं वा। परार्थत्वे प्रमाणाभावात्। अङ्गाङ्गिभावबोधकश्रुत्यादीनां प्रमाणानामन्यतमस्याभावात्। पारिशेष्यात् समसमुच्चयपक्ष एव परिशिष्यते। "उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः। तथा वै ज्ञानकर्मभ्यां नराणां मुक्तिरिष्यते॥" इति सम्बन्धवार्तिके। तथा च यः खलु सांसारिकेभ्यः दुःखभ्यः उद्विग्नः, तदनुषङ्गशबलेभ्यश्च सुखेभ्यः विगतस्पृहः मोक्षायोत्तिष्ठते स तावत् बन्धहेतुभ्यो निषिद्धेभ्यः प्रत्यवायहेतुभ्यः, काम्येभ्यः अभ्युदयसाधनेभ्यश्च निवर्तमानस्सन् उत्पन्नपूर्वौ धर्माधर्मौ भोगेन क्षयं नयन् शम-दम-ब्रह्मचर्यादिकाङ्गोपबृंहितेन आत्मज्ञानेन न पुनरावर्तते इत्यपुनरावृत्तये चोदितेन निश्शेषकर्माशयं नाशयन् मुच्यत इति सिध्यति।

**पूर्वमीमांसायां देवतास्थानम्**-चार्वाक जैनबौद्धादिषु सर्वथा वेदप्रामाण्यं न स्वीकृतम्, प्रत्युत खण्डितञ्च। तथा वेदप्रामाण्यं स्वीकृत्यापि तस्य स्वतः प्रामाण्याभावं ईश्वरकर्तृकत्वञ्च पौरुषेयत्वञ्च साग्रहं नैयायिकैस्साधितम्। जगन्मिध्यात्ववादिमिः परमात्मभिन्नस्य सर्वस्यापि व्यावहारिकसत्यत्ववादिभिर्वेदान्तिभिः वेदानामपि पारमार्थिक-सत्यत्वं खण्डितम्। अस्यामवस्थायां वेदप्रामाण्यमप्रकम्प्यं सुस्थिरं च सिषाधयितुं

उद्युक्तै: मीमांसकै: वेदानां पौरुषेयत्वेऽभ्युपगते स पुरुषो ईश्वरो न वेति बहुधा सन्देहमुद्भाव्य जगति धर्मप्रमाणस्य अन्ये मूलघातं सृजेयुरिति पश्यन्त: सर्वज्ञस्य पुरुषस्यैव कस्यचिदप्रमाणक: सद्भावोऽनपेक्षितश्चेत्यभिधातुमारभन्त। अत्र विषये उपर्युपरि खण्डनमण्डनेषु बहुलं प्रतायमानेषु वस्तुत: सत्यामसत्यां वा इच्छायां मीमांसकैस्तावाननीश्वरवाद: प्रकटनीयोऽभवत् यावता तेऽन्ततो निरीश्वरा: आस्तिकेषु नास्तिका इति विरूदं प्रतिग्रहीतुं सञ्जातनिर्बन्धा: संवृत्ता:। एतदनीश्वरवादोपोद्बलकं विषयान्तरमप्येतैरङ्गीकृतम्-शब्दमयी देवता इति। मीमांसकानां मते देशनादेशित-चतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वम्। तद्धितरूपया बोधितं चतुर्ध्यन्तपदनिर्देश्यत्वं तच्छब्दोच्चारणं यत्र तत् तथा। ततश्च त्यज्यमानद्रव्योद्देश्यत्वं तावद् देवतात्वम्। तच्च संप्रदानस्वरूपान्तर्गतम्। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्य संप्रदानत्वात्। अत: चतुर्थीत: संप्रदानैकदेशतया देवतात्वप्रतीति:। "तद्धितेन चतुर्ध्यावा मन्त्रवर्णेन वा पुन:। देवताया विधिस्तत्र दुर्बलं तु परं परम्॥ इति **तन्त्रवार्तिके**। वेदवाक्यानां निपुणं पर्यालोचने यागोपयुक्तदेवतास्वरूपे शब्दस्याप्यन्वयोऽस्तीति ज्ञातुं पार्यते। अत एव यत्र यो मन्त्र: विनियुज्यते तत्र तत्समानार्थकशब्दान्तरोच्चारणे न तत्फलसिद्धिरिति यथा शब्दप्रधाने वेदे मन्त्रशब्दस्वरूपं प्रयोगेऽवश्यापेक्षितम् तथा विधिघटकदेवतावाचकपदस्य स्वरूपमपि कर्मानुष्ठानकालेऽवश्यापेक्षितं भवति। यथा सौर्यं चरूं निर्वपेत् ब्रह्मवर्चसकाम इति वाक्यबोधिते भागे सूर्यायेदं न मम इत्येव त्याग: कार्य:, नापि आदित्याय मित्रायेत्यादिपर्यायवाचकै:। अत्रायं संशय उदीयात्-यदा विधिवाक्यं श्रूयते तदा लोकव्युत्पत्यनुसारेण तस्मिन् वाक्ये अन्येषां पदानामिव सूर्यादिपदस्यापि अशब्दात्मक: कश्चिदर्थ: प्रतीयते। तस्यैव च तत्पदोत्तरं श्रुतेन तद्धितादिप्रत्ययेन देवतात्वमभिधीयत इति कथं शब्दस्य विधिगतस्य देवतास्वरूपधटकता इति। अत्रायं संशयव्युदासक्रम: -तत्र अर्थस्य किंरूपं देवतात्वमिति विमर्शे यदि स प्रसिद्धेन्द्रादिलोकान्तरवृत्तिचेतनगत-मनुष्यादिव्यावृत्तधर्मविशेष: तदा कर्मविशेषेषु विहितानां अहोरात्रिसंवत्सरादीनामपि देवतात्वं स्यात्, तत्तु नोपपद्यते। तस्मात् कर्मकाले शब्देन निर्देश्यत्वमेव देवतात्वमिति

विज्ञायते। तत्र शब्दोच्चारणमन्तरा नान्येन केनचित्प्रकारेण पुरुषेण यागाङ्गभूता देवता सम्पादयितुं शक्यत इति पुरुषप्रवर्तकस्य विधेः तत्र शब्दोच्चारणमेव कर्माङ्गभूत-देवतात्वसम्पादनाय पुरुषकर्तव्यतया तात्पर्यविषय इति निर्धार्यते। एवं सति सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इत्यत्र यद्यपि सूर्यपदार्थवृत्तिदेवतात्वनिरूपको यागः प्रथमं प्रतीयते, तथापि तादृशार्थनिष्ठदेवतात्वस्य तद्वाचकशब्दोच्चारणमन्तरा पुरुषेण सम्पादयितुमशक्यतया प्रकृतकर्मानुष्ठानसम्पत्तये शब्दोच्चारणे कृते अर्थगतदेवतात्वस्य स्वयं सिध्यतः पुरुषानपेक्षिततत्वेन विधितात्पर्यागोचरत्वावधारणात् सूर्यशब्दमुच्चार्यैव यागं कुर्यात् इत्येव तद्वाक्यार्थः निश्चेतव्यः। अत एव शब्दमयी देवता इत्युच्यते। एवञ्च इन्द्रादिशब्दार्थभूतदेवतासु न मीमांसकानामादरः। एवं पुराणादिप्रतिपादितरीत्या विग्रहादिमत्वञ्च तादृशदेवतानामप्रामाणिकमित्यपि तेषामाशयः। विग्रहादिपञ्चकं देवतास्तित्वसाधकम्-सहस्राक्षो गोत्रभिद् वज्रबाहुरित्यादिवाक्यम्-देवतादीनां विग्रहवत्वसाधकम्। अग्निरिदं हविरजुषत इत्यादिवाक्यं देवतानां हविस्स्वीकारद्योतकम्। अद्धीन्द्रप्रस्थितेमाहवींषि इत्यादि वाक्यं देवतानां हविर्भोजनज्ञापकम्। तृप्त एवैनमिन्द्रः प्रजया पशुभिर्वर्धयतीत्यादिवाक्यं देवतानां तृप्तेः प्रसादस्य च निरूपकमिति इत्यादि देवतानां विग्रहादिमत्वे प्रमाणमित्यपि न स्वीक्रियते। एतेषां मन्त्राणां स्वार्थे तात्पर्याभावात् न इदं देवतास्तित्वसाधनायेति देवताधिकरणे **न्यायमालाविस्तरः**। यदि यागादि-रूपेणाराधनेन स्वयं प्रतिगृहीतेन प्रसन्ना देवता फलममीप्सितं ददातीति स्यात् तर्हि चेतनप्रसादस्य अनियतोपायत्वात् कतिपयाङ्गवैकल्येऽपि पुरुषदैन्यादिवशात् प्रसभं प्रसादिता देवता फलं दास्यतीति जनाः मात्रामात्रेणाप्यन्यथाभावरहितं कर्म अनुष्ठातुं न श्रद्धधीरन्निति, यदि फलमीप्स्यते तर्हि यथोक्तं सर्वं साङ्गं तदुपायभूतं कर्म अनुष्ठेयमिति श्रद्धासंवर्धनाय तेषामेवं प्रवृत्तिरिति तात्पर्यं वक्तव्यम्। एवं देवतास्वीकारे वनस्पतिभ्यस्स्वाहा, मूलेभ्यस्स्वाहा इत्यादिमन्त्रेष्वपि देवतात्वं विग्रहादिमत्वं च कल्पनीयं स्यात्, तच्च प्रत्यक्षविरुद्धम्। ततश्च देवादीनां विग्रहादिर्नास्ति। एवंच वेदतदर्थप्रामाण्यपरिरक्षणै-दम्पर्यवन्तोऽपि मीमांसकाः, तदनुगुणं परिकरं विचिन्वानाः विहितनिषिद्धकर्मजन्यतद्-

द्वारभूतापूर्वतत्फलव्यतिरिक्तं किमपि अलौकिकं देवतादि नास्तीति ब्रुवाणाः नास्तिकपदव्यपदेश्या भवन्तीति मन्वाना अपरे केचन मीमांसकाः देवतास्वीकारे युक्तीः वर्णयन्ति देवताधिकरणे देवतानां विग्रहादिपञ्चकनिराकरणं प्रौढिवादमात्रम्। अत एव वार्तिके देवताविग्रहादिपञ्चकमनाध्रायैव तदधिकरणं भविष्यतीत्युक्तम्। शब्द एव देवता न तु तदर्थः इत्यपि बौद्धप्रलपितमेव। अर्थाभावे इन्द्रादिशब्दानामनर्थकतया प्रातिपदिकार्थ-तद्गतकर्मत्वादिकारकसंख्याभिधायिन्यः सुब्विभक्तयो न स्युः। ततश्च इन्द्रादिशब्दघटित समस्तवेदवाक्यानि उन्मत्तप्रलपितानि आपद्येरन्। वेदप्रामाण्यमभ्युपगच्छद्भिः वैदिकैः देवतानां विग्रहादिपञ्चकं नास्तीति न शक्यमभ्युपगन्तुम्। यागविधिसामर्थ्यादेव तद्विग्रहादिलाभात्। यतो यागादिर्हि देवताराधन रूपः, यज देवपूजायामिति धातोः स्मरणात्। फलकामिभ्यश्च राजा फलं ददाति इतिवत् यागैराराध्यमानानां देवतानां फलदातृत्वं गम्यते। न च फलस्य अनीशानानां फलदातृत्वं संभवति। नापि अप्रसन्नाः फलं प्रयच्छन्ति। नापि दत्तं हविः अभुञ्जानाः प्रसीदन्ति। न चैतत् सर्वं अचेतनानां विग्रहरहितानां घटते। ततश्च यागविधिसामर्थ्यादेव **विग्रहवत्त्वम्, हविर्भोक्तृत्वम्, प्रसादवत्त्वम्, फलैश्वर्यवत्त्वम्, फलदातृत्वञ्च** इति **विग्रहादिपञ्चकं** देवतानां कल्प्यते स्वीकर्तव्यञ्च। सहस्राक्षो गोत्रत्रिद् वज्रबाहु रित्यादि वाक्यानामर्थवादत्वेऽपि तेषां विध्येकवाक्यत्वेऽपि अवान्तरपदसंसर्गतः प्रतीयमानदेवताविग्रहादित्यागे कारणाभावात् मानाभावाच्च। देवता मावाहयति इत्यादिरावाहनविधिः दृष्टार्थत्वात् देवतानामागमनमपेक्षते, आगमनन्तु हविषां स्वीकरणाय, तत्स्वीकरणं भोजनाय, भोजनं तृप्तये, तृप्तिश्च फलदातृत्वसिद्धये, फलदातृत्वञ्च फलैश्वर्यादिति साक्षात् परम्परभा वा देवतागमनादीनां आवाहन-विध्यपेक्षितत्वात् देवतानां विग्रहवत्वे तात्पर्यमनिवार्यं स्वीकर्तव्यमेव। किञ्च विश्वसृजाममयनाख्यस्य सत्रस्य सायुज्य-सार्ष्टिता-समानलोकतादीनि फलानि श्रूयन्ते। यदि देवा तत्तल्लोकविशेषेषु दिव्यशरीरायतननिरतिशयभोगवन्तो न स्युः तदा तत्फलार्थत्वेन विधानं उन्मत्तप्रलपितं स्यात्। किञ्च कर्ममीमांसकाः निरीश्वरवादिनः, तेषां देवताविग्रहादिपञ्चकं नास्तीति वादश्च प्रच्छन्नवौद्धतदेकदेशिविषयः। विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयः

प्राप्तिनिमित्ताय नमः सोमार्धधारिणे।'' इति श्लोकवार्तिकमङ्गलश्लोके देवतायाः विग्रहादीनाञ्च अभिधानमपि प्रमाणम्। ओषधीभ्यः स्वाहा मूलेभ्यास्स्वाहा इत्यादावपि तत्तधिष्ठात्र्यो देवता एव स्वीक्रियन्त इति न विरोधः। **भाट्टदीपिकायाः देवताधिकरणे** अपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकता निराकृता। इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गात् निराक्रियते इति प्रस्तूय कथमपि न देवता विग्रहादि स्वीकारः, किन्तु शब्दमात्रं देवता, अर्थस्तु प्रातिपदिकानुरोधात् चेतन अचेतनो वा कश्चित् स्वीक्रियते न तु विग्रहादिमान्। उपासनादौ परं ध्यानमात्रमाहार्यम् तस्य इति जैमिनिमतनिष्कर्षः। मम तु एवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणमिति उपसंहृतम्। ततश्च न जैमिनिना देवतानां निरासः कृतः। यज्ञकर्म प्रधानम्, देवताश्रुतिस्तु गौणी। फलदाने कर्मैव प्रधानम्। देवता तु गुणभूता इत्येव मीमांसादर्शनसिद्धान्तः इति स्वीकर्तव्यो भवति। तथा च मूर्तानां अमूर्तानां चेतनानां अचेतनानां च श्रुत्या कञ्चिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं, भवति, यस्य वाचकं शब्दं उद्दिश्य स्मृत्वा वा हविः त्यक्ष्यामि इति संकल्पः क्रियते सा तत्र देवता इति देवताविषयकः पूर्वमीमांसादर्शनसिद्धान्तः। विमृष्टश्चायं विषयः **अध्वरमीमांसाकुतूहलवृत्तौ शास्त्रदीपिका न्यायसुधा भाट्टदीपिकादौ**''।

# सप्तमं कुसुमम्

पूर्वमीमांसादर्शने **प्रस्थानभेदः** –मीमांसादर्शनं वेदधर्मकर्मसंरक्षणार्थं अवैदिकेभ्यः वेदस्य संरक्षणार्थं प्रमाणैः वेदवाक्यार्थनिर्णयार्थञ्च प्रवृत्तम्, कार्यस्यास्य अथवा लक्ष्यस्यास्य साधनाय समादृतानां आधारभूतानां केषाञ्चित् सिद्धान्तानां युक्तिप्रकाराणां भेदात् मीमांसादर्शनं प्रस्थानत्रयात्मना विभक्तं दृश्यते। भाट्टप्रस्थानम्, प्राभाकरप्रस्थानम्, मुरारिप्रस्थानमिति। भाट्टप्रस्थानमेव तौतातिकम्, प्राभाकरप्रस्थानमेव गुरुमतम्, मिश्रमतमिति व्यवहियते। मुरारिमिश्रमतस्यैव जरन्मीमांसकमतम्, एकदेशिमतमिति च व्यवहारः। तेषु कुमारिलः सुब्रह्मण्यावतार इति मण्डनमिश्रस्य शिष्य इति च प्रसिद्धिः। एकदा आचार्यसन्निधौ अधीयानः कुमारिलः कदाचित् तत्रापिनोक्तम्, अत्रतुनोक्तमिति पंक्तिमपठत्। तदाकर्ण्य तत्रापि नोक्तम्, अत तु नोक्तमिति पदच्छेदं मत्वा तुकारासामञ्जस्यं चिन्तयति आचार्ये कुमारिलः तत्र अपिना उक्तम्, अत्र तुना उक्तमिति चतुरं पदच्छेदमकरोत्। तदा प्रमृति स तुतात इत्यभिदधे। पाण्डित्यातिशये आदावन्ते वा भट्टपदं घटयित्वा नाम पण्डितानां कीर्त्यते। तदनुसृत्य कुमारिलभट्टः, भट्ट कुमारिलः इति चायमभिधीयते। भट्टपादः, भट्टाचार्याः इत्यपि पूज्यताद्योतकं आचार्यपदं, पादपदञ्च संयोज्य व्यवह्रियते। ततश्च तौतातिकाः, भाट्टाः, भाट्टपादाः, इति व्यवहारः कुमारिलमतानुयायिनां कालान्तरे सञ्जातः। कुमारिलभट्टोऽयं श्रीशङ्कराचार्यसामयिकः, द्रविडदेशीयः प्रयागक्षेत्रेऽवसत् इति प्रवादः। जैनबौद्धादिमतानुसारिण अनेके प्रतिवादिनः वादे कुमारिलभट्टेन पराभूताः कर्मपरो मीमांसामार्गश्च रक्षितः। मीमांसादर्शनस्याधारस्तम्भभूतेनानेन **श्लोकवार्तिक तन्त्रवार्तिक टुप्टीकात्मकं** खण्डत्रयात्मकं च वार्तिकं कृतम्। तेषु **श्लोकवार्तिकं** **शाबरभाष्यस्य** प्रथमाध्याय प्रथमपाद भाष्यमात्रस्य व्याख्यानम्। अत्र श्लोकान् विना एकमपि वाक्यं नास्तीति श्लोकवार्तिकमिति व्यवह्रियते। प्रथमाध्यायस्य द्वितीयपादप्रभृति तृतीयाध्यायचतुर्थपादसमाप्तिपर्यन्तस्य भाष्यस्य विस्तृतं गद्यपद्यसंमिश्रं व्याख्यानं तन्त्रवार्तिकमित्युच्यते। परिमितपद्यं तृतीयाध्यायपञ्चमपादादारम्य द्वादशाध्यायान्त भाष्यस्य

टिप्पणीरूपं गच्छद्गच्छद्व्याख्यानं टुप्टीकाभिधानम्। त्रिष्वपि व्याख्यानेषु भाष्यस्पष्टीकरणात् इतरदपि मतान्तरखण्डनात्मकं स्वमतमण्डनात्मकं वैदिककर्मणां आवश्यकत्वपरं कर्मठजनप्रवृत्तविविधाचारसमर्थकं स्मृत्यर्थपरिपोषकं विचारजातं प्रदर्शितम्। धीरया निपुणया विवेचनपट्व्या विमर्शैकस्वभावया विपुल प्रसरया तर्ककर्कशया विचारशैल्या मीमांसेतरसिद्धान्ताः विशिष्य बौद्धानां दिङ्नागस्य **प्रमाणसमुच्च**यादीनां प्रखरसमीक्षा कृता दृश्यते। तेषु तेषु स्थलेषु प्रमातृप्रमेयप्रमिति प्रमाणफलादीनां जीवादि-पदार्थानां तादृशं विस्तृतविवेचनं कृतम् यादृशेन जैमिनिसूत्रोपज्ञं मीमांसाशस्त्रं दर्शनपदवीमारोपितमिदानीं राजते।

प्रायः कुमारिलभट्टस्य समकालिकः पण्डितवर्यः प्रभाकरः येन यत्र कुत्र स्थलेषु मतान्तरं प्रदर्श्य शाबरभाष्यं व्याचख्ये। एतदीयं शाबरभाष्यव्याख्यानं **बृहट्टीके**ति नाम्ना ख्यातं लभ्यते। सूत्रव्याख्यानप्रसङ्गेन जीवस्वरूपनिर्णय-अभिहितान्वयवाद-अभावस्वरूप-अर्थापत्तिस्वरूपादिनिरूपणस्थलेषु स्वमतं कुमारिलमतात् विभिन्नतया अनेन प्रतिपादितम् येन प्रभाकरमतं कुमारिलमतञ्चैते गुरुमत-भाट्टमतेति नाम्ना विश्रुते अभूताम्। प्रभाकरश्च कुमारिलस्य शिष्य एव यः कस्याञ्चित् शाबरभाष्यव्याख्यानवेलायां अनेन यथारूपं प्रदर्शितात् भाष्यरहस्यनिर्णयात् गुरुसकाशादपि गुरुपदवीं लेभे। अनन्तरं प्रभाकरगुरूरिति आख्या प्रचलिता। पूर्वतनोक्तमधुनापिनोक्तमतः पौनरुक्त्यम् इत्यस्याः फक्किकाया व्याख्याप्रसङ्गे पूर्वं तु न उक्तम्, अधुनापि न उक्तम् इत्येवंरूपं पदच्छेदं मनसि निधाय उक्तेस्सर्वथाभावात् पौनरुक्त्यस्यासम्भव संभ्रान्तमनस्काः गुरवो यदा यदृच्छया क्षणमात्रं बहिर्गताः तदा प्रभाकरेण गुरोः पुस्तिकायां पूर्वं तुना उक्तम्, अधुना अपिना उक्तमतः पौनरुक्त्यम् इत्येवंरूपः पदच्छेदः कृतः। प्रतिनिवृत्तश्च कुमरिलगुरुः पदच्छेदावलोकनेन प्रकामं प्रमुदितमनाः नूनमस्माकं प्रभाकरो गुरूरित्युक्त्वा आनन्दाश्रुगद्गदं जगाद। तदतन्तरं च शिष्याः प्रभाकरं गुरूरितिनाम्ना सम्बोधयामासुरिति परम्परागता प्रमाणशून्या कथा तुतातप्रसिद्धिकथावत् श्रूयते। प्रभाकरः विनायकावतार इति केरलेषु प्रसिद्धिः।

मीमांसादर्शने तृतीयप्रस्थानस्य प्रवर्तकः मुरारिमिश्रः। भाट्टगुरुसम्मतात् अस्य भिन्न एव सिद्धान्त आसीत् येन मुरारेस्तृतीयः पन्था इति लोकोक्तिरपि प्रसिद्धा बभूव। मुरारिमिश्रस्य मतस्य परतःप्रामाण्यप्रसङ्गे नैयायिका निरसनीयतां उपदिशन्ति। तदीयेषु ग्रन्थेषु त्रिपादीनीतिनयनमित्यस्य अङ्गत्वनिरुक्तिरिति ग्रन्थस्य च नाम श्रूयते। अन्ये ग्रन्थाः नामावशेषं गताः प्रथमाध्यायस्य द्वितीयतृतीयचतुर्थपादस्य अधिकरणानां जैमिनिसूत्राणां विश्लेषणात्मकत्रिपादीनीतिनयनाख्यः ग्रन्थः सम्पूर्णं न लभ्यते। सम्पूर्णं जैमिनिसूत्राधिकरणं द्वादशलाक्षणिकं व्याख्यातं स्यादिति विश्वस्यते। नयविवेकीयसिद्धान्तं त्रिपादीनीतिनयने मुरारिमिश्रःखण्डयतीति जर्नलआफओरियण्टलरिसर्चपत्रिकायाः द्वितीयपञ्चमभागात् ज्ञायते। तत्त्वचिन्तामणौ मुरारिमिश्रमतं खण्डितमिति च ज्ञायते। अङ्गत्वनिरुक्तिस्तु षट्प्रकरणात्मिका नव्यन्यायभाषामयी प्रकरणशो वर्णक्रमेण भित्वा सर्वा संगृहीता च। मुरारिमिश्रमते ब्रह्म एक एव पदार्थः। परन्तु व्यावहारिकदशायां धर्मधर्मि-आधार-प्रदेशविशेषाश्च पदार्थाः स्वीकृताः, परं पारमार्थिकदृशा तेषां प्रामाण्यं नास्ति। ब्रह्मण एव परमार्थतया स्वीकारात् अस्य मतं ब्रह्ममीमांसाशब्देनापि मीमांसकाः वदन्ति। मानसप्रत्यक्षविषयकं ज्ञानम् इति स्वीकुर्वन्नयं मुरारिमिश्रः ज्ञानप्रामाण्यमपि मानसप्रत्यक्षविषयमिति वदति।

तत्त्वज्ञानदिशा मीमांसकानां सर्वेषां दृश्यमानप्रपञ्चस्य नित्यत्वम्, न मिथ्यात्वम्। परं पदार्थव्यवस्थायां प्रभाकर-कौमारिल-मुरारिमिश्रसिद्धान्तेषु भूयान् आशयभेदो वर्तते। द्रव्यगुण कर्म जाति अभावश्चेति पञ्चपदार्था भाट्टमते। द्रव्यगुण कर्मसामान्य समवाय संख्या सादृश्यशक्तयः अष्टौ पदार्था इति प्राभाकरमते। ब्रह्मैकम्, व्यवहारे तु धर्मिधर्माधार प्रदेशविशेषाः पञ्च पदार्था मुरारिमिश्रमते। एवं प्रामाण्यवादोऽपि मीमांसकानां प्रधान-विषयः। एतेषां नयेन स्वतः प्रमाणमेव प्रामाण्यकोटिमारोहति। न परतः प्रमाणम्। तस्य तु अप्रामाण्यमेव। तदत्र मीमांसकानां परतः प्रामाण्यवादिभिः नैयायिकैः सह प्रवर्तते बलवान् संघर्षः। इन्द्रियार्थसंनिकर्षोत्पन्नं घटोऽयं पटोऽयमित्याकारकं व्यवसायात्मकं ज्ञानमुत्पद्यते। ततो घटमहं जानामि पटमहं जानामि इत्यनुव्यवसायात्मनो ज्ञानस्योत्पत्तिः

तदनन्तरं सत्यां सन्देहादिनिवृत्तौ चरितार्थायाञ्च प्रवृत्तौ तद् ज्ञानं प्रामाणिकत्वमुपैति। अतः अनुमितिं द्वारीकृत्यैव तत्प्रामाण्योपपत्या तस्य परतः प्रामाण्यं नैयायिकानाम्। मीमांसकास्तु स्वतःप्रामाण्यवादमेव अभिनन्दन्ति। वादेऽस्मिन्नपि स्वतः प्रामाण्ये मीमांसकानां मिथो भेदः दृश्यते। तत्र प्राभाकराणां ज्ञानस्य स्वतःप्रकाशत्वम्। यथाहि दीपप्रकाशः घटपटादीन् पदार्थान्, ततश्च आत्मानम्, तदनन्तरञ्च भूयो तैलवर्तिकादीन् प्रकाशयति तद्वत् ज्ञानमपि प्रथमं इन्द्रियसंनिहितं पदार्थजातम्, ततस्स्वरूपम्, तदनन्तरं ज्ञानाधिकरणमात्मानम् अभिव्यञ्जयति। इदत्र बोध्यम्-प्रत्यक्षे हि तावत् पदार्थज्ञानम्, ततो ज्ञानस्वरूपज्ञानम्, अनन्तरोऽभिव्यक्तिरिति। तदिदं प्रत्यक्षं **त्रिपुटीप्रत्यक्षना**म्नापि व्यवह्रियते। स्वतश्चास्य स्वज्ञानजनक सामग्रीतः प्रतीतिः। अतः ज्ञानसामग्रीतो यद् ज्ञानं उत्पद्यते तत एव तत्प्रामाण्यमपि जन्यते इति प्राभाकराः। भाट्टानां मतं तु किञ्चिदतो विलक्षणमभिमनुते तन्मते घटज्ञाने सति ज्ञातो घट इति ज्ञानमुत्पद्यते यतः प्रत्यक्षविषयीभूतेऽर्थे ज्ञातताधर्म उदेति। तत्र ज्ञानस्य न स्वयं प्रत्यक्षत्वम्, अपितु ज्ञानधर्मविशेषस्य ज्ञाततालक्षणस्यैव प्रत्यक्षत्वम्। एतं ज्ञातताधर्मं द्वारी कृत्यैव ज्ञानस्य तत्प्रामाण्यस्य च उदयस्सम्भवति। इति।

मुरारिमिश्रमते तु न्यायमतेन सह कश्चित् विशिष्टो विसंवादः। एतन्मते ज्ञानस्यैव प्रत्यक्षत्वम्। इन्द्रियार्थसन्निकर्षे सति व्यवसायात्मकज्ञानोत्तरं घटमहं जानामीत्याकार कमनुव्यवसायलक्षणं यद् ज्ञानमुत्पद्यते, तदेवानु व्यवसायात्मकं ज्ञानं प्रामाण्यापादकमिति स्वीक्रियते। तदेवास्य मतान्तरेभ्यः वैशिष्टयम्। एतच्च मतान्तरैस्सह सर्वांशतया न संवदति। वर्णितश्चायं मधुरानाथतर्कवागीशेन **तत्त्वचिन्तामणिरहस्यप्रत्यक्षखण्डे**।

भ्रमविषयकज्ञानेऽपि मीमांसकेषु वैलक्षण्यं दृश्यते। ज्ञानमात्रस्य यथार्थत्ववादिनां प्राभाकराणां मते शुक्तौ रजतप्रतीतिः रज्जौ सर्पप्रतीतिश्च सुप्रसिद्धा। विषयेऽस्मिन् प्रभाकराणां समर्थप्रक्रिया तु एवम्-शुक्तौ रजतमिदं एतद्भ्रान्त्युपलब्धौ केवलमिदमंश एव प्रत्यक्षविषयो भवति। चक्षुस्तु इदम्पदार्थस्य अस्तित्वं प्रत्याय्य विरमति। रजतांशस्तु न प्रत्यक्षविषयः। तत्पदार्थस्य तत्र अविद्यमानत्वात्। अन्यत्र दर्शनेन केवलं स्मृतिमात्रम्। उभयोरपि स्वस्वविषये सत्यस्वरूपत्वम्। परं स्मृतिप्रमोषात् उपालभ्यमानमिदंपदार्थस्य

स्मर्यमाणरजतपदार्थस्य च विवेकग्रहाभावात् एवास्य भ्रमस्योत्पत्तिः। ज्ञानयोर्विषययोश्च भेदाग्रहात् भ्रमः सञ्जायते। शुक्तौ शुक्तित्वम् रजते रजतत्वञ्चेत्येतदुभयात्मकं ज्ञानं स्वस्वाधिकरणे यथार्थमेव। प्राभाकराः शुक्तौ रजतज्ञानं विवेकाग्रहणनिमित्तमिति वदन्ति। इदमेवाख्यातिरित्याख्यायते। प्रपञ्चितञ्चैतत् प्रकरणपञ्चिकायाम्।

भाट्टमतं मुरारिमिश्रमतञ्च न्यायमतमनुसरतः। शुक्तिविषयकं ज्ञानं शुक्तित्वप्रकारकम्। रजतविषयकं ज्ञानञ्च रजतत्वप्रकारकम्। शुक्तित्वरजतत्वलक्षणो धर्मविशेषः समवायसम्बन्धेन शुक्तौ रजते चास्ते। तस्य पार्थक्यं न कथमपि सम्भवति। परन्तु शुक्तौ रजतत्वप्रतीतिवेलायां शुक्तौ रजतत्वप्रकारकं ज्ञानं सम्भवति, तच्च अन्यस्मिन् अन्यप्रकारकं ज्ञानम्। शुक्तौ रजतत्वज्ञानं अन्यथारूपेण भिन्नरूपेण सम्भवादिदं अन्यथाख्यातिरित्यप्युच्यते। इदमेव विपरीतख्यातिरित्यप्युच्यते, अकार्यस्य कार्यरूपतया भानात्॥

आत्मविषयेऽपि मीमांसाप्रस्थाने भेदो दृश्यते मीमांसकानां मते आत्मनः कर्तृत्वं भोक्तृत्वञ्च। कौमारिलमतेन सोऽयमात्मा न चैतन्यस्वरूपः किन्तु चैतन्यविशिष्टः। शरीरार्थसम्बन्धेन चैतन्यमुदेति, परं स्वापावस्थायां विषयसंपर्कवैधुर्येण आत्मनश्चैतन्यं प्रच्यवते। तदेवमेषां आत्मनश्चैतन्यं जडत्वञ्चेत्युभयधर्मकत्वम्। एवं भाट्टमतेन आत्मा मानसप्रत्यक्षगम्यः। आत्मानमहं जानामीत्यस्मिन् प्रत्यक्षे कर्तुर्निजास्तित्ववोधकत्वम्। आत्मप्रत्ययविषय एव आत्मा। तथा च भाट्टमतरीत्या आत्मनो ज्ञानकर्तृत्वम्, ज्ञानविषयत्वञ्चेत्युभयमेवाभिमतम्।

परन्तु प्राभाकराणां मते आत्मनो न क्रियावत्वम्। किन्तु आत्मनोऽहंप्रत्ययबोधकत्वम्। घटमहं जानामीत्यत्र घटप्रत्ययस्य कर्तृत्वमात्मन्येव। अतः मीमांसकानां प्रतिप्रत्ययं आत्मनोऽस्तित्वावबोधः अपरिहार्यः। प्रत्ययश्च चेतननिबन्धनः। चैतन्यस्य आत्माधिकरणत्वम्, आत्मनोऽधिकरणतया चैतन्यस्यात्मास्तित्वं दुर्वारमेवेति। मुरारिमिश्रग्रन्थानां अलाभात् भाट्टप्राभाकरग्रन्थानां प्रचाराच्च प्रस्थानद्वयमेवेदानीं प्राचुर्येण अध्ययनाध्यापनादिषु प्रसृतं दृश्यते। मीमांसासिद्धान्तेषु वेदरक्षणैकतत्परेषु केचन सिद्धान्ताः प्रस्थानद्वयसाधारणाः सामान्यभूताः अभिन्नाश्च विद्यन्ते। केचन प्रस्थानद्वयासाधा–

रणाः विशेषभूताः परस्परं भिन्नाश्च विद्यन्ते। प्रस्थानद्वयसामान्यभूताः **भेदरहिताश्चेमे** विषयाः १) प्रमाकरणं प्रमाणमिति प्रमाणलक्षणे, २) प्रमाणानां प्रामाण्यं स्वत उत्पद्यते ज्ञायते च, अप्रामाण्यन्तु कारणदोषबाधकज्ञानाभ्यां जन्यते, इति स्वतःप्रामाण्ये, ३) निर्विकल्पक-सविकल्पकभेदेन प्रत्यक्षभेदे, ४) चक्षूरसनघ्राणत्वक्श्रोत्रभेदे बाह्येन्द्रियाणि पञ्च, मनश्चान्तरिन्द्रियमिति इन्द्रियविभागे, ५) मनस अणुत्वविषये, ६) व्याप्यदर्शनात् असन्निकृष्टार्थविज्ञानमनुमानमिति तल्लक्षणे, ७) प्रकृतपक्षादन्यत्र अप्रसिद्धस्यापि अलौकिकस्यापि पदार्थस्य साधनाय उपयोगिनः नैय्यायिकैरङ्गीकृतस्य केवलव्यतिरेक्यनुमानस्य स्वीकारे वेदैकवेद्यानां अदृष्टाद्यलौकिकार्थानां अनुमानविषयत्व प्रसक्त्या तद्वारणाय, अर्थापत्तेस्स्वीकाराच्च केवलव्यतिरेक्यनुमानानङ्गीकारे अन्वयव्यतिरेकिकेवलान्वयिरूपानुमानद्वयाङ्गीकारे च, ८) प्रतिज्ञाहेतूदाहरणानि, उदाहरणोपनयनिगमनानि वेति परार्थानुमानावयववाक्यस्वीकरे, ९) असिद्ध-अनैकान्तिक-विरुद्धापरपर्यायबाधाख्यहेत्वाभासत्रयस्वीकारे (शास्त्रीपिका) च भेदाभावः। एवं १०) शक्तिः लक्षणा गौणीति तिस्रः वृत्तयः, ११) व्यंग्याभिमतेऽपि स्थले शब्दस्याभिधैव इषोरिव दीर्घदीर्घतरो व्यापारः, परन्तु व्यञ्जना नेति, १२) शाब्दबोधसहकारीणि आकाङ्क्षा-योग्यता-आसक्ति-तात्पर्यज्ञानञ्चेति चत्वारि, तत्र तात्पर्यं लौकिकवाक्येषु पुरुषनिष्ठम्, वैदिकवाक्येषु शब्दनिष्ठमिति, १३) वाक्ये शक्तिर्नास्ति, एकार्थीभावलक्षणसामर्थ्यं वाक्ये न, परन्तु व्यपेक्षासामर्थ्यमेवेति, १४) वाक्यार्थबोधानुकूलः पदार्थसम्बन्धः, अन्वयनिष्ठं पदार्थप्रतियोगित्वम्, वाक्यार्थान्वयिगतपदार्थसम्बन्धो वा लक्षणा, सा च पदे वाक्ये चेति, १५) शब्दार्थस्तु जातिरुपाधिर्वा, न व्यक्तिः नापि जातिविशिष्टा व्यक्तिरिति, १६)अखण्डं कर्मत्वादिकं सुबर्थः, तत्रैव सुबर्थसंख्याया अन्वयः, सुबर्थः परम्परासम्बन्धेन भावनायामन्वेतीति, १७) आख्यातवाच्यः कालः भावनायामन्वेतीति, १८) उपमान लक्षणम्-पूर्वदृष्टेऽर्थे स्मर्यमाणे दृश्यमानार्थसादृश्यज्ञानमिति, १९) आत्मनस्स्वरूपावस्थानात्मकत्वमिति, २०) वेदसिद्ध ईश्वरः, न आनुमानिक इति, २१) देवतानां विग्रहाभावत्वम्, चतुर्थ्यन्तपदमात्रतेति, २२) न

कदाचिदनीदृशं जगदिति वदन्तः स्वर्गभूलोकपातालादीनां नित्यत्वम्, चेतनाचेतनात्मकस्य विश्वस्यानेकत्वम् इति, २३) अग्निहोत्र-दर्शपूर्णमास पशुबन्ध सोमयागात्मकत्वं धर्मस्येति, २४) वेद अपौरुषेयः, स्वतःप्रमाणं नित्यश्चेति २५) मन्त्रार्थवादोपनिषद-इतिहास-पुराणानां स्वतः प्रामाण्याभावः, विधिशेषत्वेनैव प्रामाण्यमिति च सिद्धान्तेषु भाट्टप्राभाकरप्रस्थानद्वये ऐक्मत्यं विद्यते। एवं जैमिनीयमीमांसासूत्रेषु षष्ठाध्यायेऽधिकार-निरूपणम् सप्तमाष्टमाध्यायोः यथासंख्यं सामान्यविशेषातिदेशौ, नवमे मन्त्रसामसंस्काराणामूहः, एकादशे तन्त्रावापाभ्यां अङ्गपरिमाणनिरूपणम्, द्वादशे अन्यत उपकारलाभप्रयुक्तः अङ्गाननुष्ठानरूपः प्रसङ्गश्चेति इमे विषयाः समाः। महासृष्टि-महाप्रलयौ न स्वीकृतौ, परन्तु खण्ड सृष्टिखण्डप्रलयौ स्वीकृतौ। भाट्टानां प्राभाकराणाञ्च अधोनिर्दिष्टेषु विषयेषु **सैद्धान्तिकभेदो** दृश्यते-१) अनधिगताबाधितासन्दिग्धार्थबोधकं प्रमाणमिति भाट्टाः। अनुभूतिः प्रमाणमिति प्राभाकराः। २) प्रत्यक्षानुमानशब्दोपमानार्थापत्ति अनुपलब्धिरूपाणि प्रमाणानि षडिति भाट्टाः। प्रत्यक्षानुमानोपमानशास्त्रार्थापत्यात्मकानि प्रमाणानि पञ्च इति प्राभाकराः। ३) पदार्थैस्साक्षादिन्द्रियाणां संनिकर्षे सति ज्ञायमानं षडिन्द्रियात्मकं त्रिसंनिकर्षजं ज्ञानं प्रत्यक्षम्। संनिकर्षश्च संयोग संयुक्ततादात्म्यतादात्म्यञ्चेति त्रितय इति भाट्टाः। साक्षात्प्रतीतिः प्रत्यक्षम्, तच्च मेयमातृमितिविषयं त्रिपुटं भवति, संनिकर्षश्च संयोग-संयुक्तसमवाय-समवायभेदेन त्रिविधः, द्रव्यजातिगुणेषु इन्द्रियसंयोगेन प्रत्यक्षा प्रतीतिर्भवतीति प्राभाकराः। ४) व्याप्यदर्शनात् असन्निकृष्टार्थविज्ञानमनु-मानम्, यथा पर्वते धूमवत्वदर्शनात् अग्निमत्ताज्ञानम् इति, व्याप्तिज्ञानपक्षधर्मताज्ञान-योरनुमितिकारणता, विशिष्टवैशिष्ट्यावगाहिज्ञानस्य यथासम्भवं कारणतेति, अन्वयदृष्टान्त-व्यतिरेकदृष्टान्तद्वयमिति, वार्तिकमते हेत्वाभासचतुष्टयम्, शास्त्रदीपिकामते हेत्वाभासत्रयमिति च भाट्टाः। महानसादौ वह्निधूमयोर्नियमग्रहणावसरे ये ये पदार्थाः ज्ञातास्त एवानुमानावसरेऽनुमानेनापि गृह्यन्त इति, तस्य संस्कारमात्रजन्यत्वात् अनुभूति-त्वाच्च पर्वते धूमवत्वदर्शनादनन्तरं अग्निमत्वज्ञानोत्पत्यर्थं अनुमानस्य पृथक्प्रामाण्यं स्वीक्रियते इति, व्याप्तिज्ञान-पक्षधर्मताज्ञानाभ्यामेवानुमितिः, न तु विशिष्टवैशिष्ट्याव-

गाहिज्ञानात् इति, अन्वयदृष्टान्त एव न व्यतिरेकदृष्टान्त इति, हेत्वाभासचतुष्टयमिति च प्राभाकरा:।५) उपमानमतिदेशोपपादकमिति भाट्टा:, उपमानस्य न अतिदेशोपपादकतेति प्राभाकरा:। ६) शब्दविज्ञानापेक्षात् आत्ममनस्संनिकर्षात् पदै: पदार्थस्मरणे जाते यत् असन्निकृष्टविषयकं ज्ञानम् तत् शाब्दं अथवा शास्त्रं नाम प्रमाणम्। इदं शाब्दज्ञानं शब्द-व्युत्पत्तिमूलकमिति वदन्त: शब्दव्युत्पत्तिमधिकृत्य पदार्थेषु तत्तत्पदैरभिहितेषु तेषां परस्परं अन्वयरूपे वाक्यार्थे पुनर्लक्षणां प्रतिपादयन्तो भाट्टा: अभिहितान्वयवादं स्वीकुर्वन्ति। तत्तद्वाक्यस्थानि पदानि यदा स्वीयमर्थं उपस्थाप्य विरतानि भवन्ति तदा पदैरभिहिता: पदार्था: आकाङ्क्षा सन्निधि-योग्यतारूपै: कारणै: परस्परान्वययुक्ता: वाक्यार्थबोधका: भवन्ति इति **अभिहितान्वयवाद** इत्युच्यते। अभिहितानां पदार्थानां मिथ अन्वयो भवतीत्यर्थ:। तथा च पदैरभिहिता: पदार्था: शाब्दबोधे अथवा वाक्यार्थबोधे करणमिति भवति। पौरुषेयापौरुषेयभेदेन द्विविधश्शब्द:, लौकिकमाप्तवाक्यं पौरुषेयम्, वेदवाक्यमपौरूषेयम्। द्विविधमपि शाब्दं प्रमाणम्। फलावच्छिन्नव्यापारो धात्वर्थ:, कृतिर्न धात्वर्थ: इति, कृतिस्तु तिङ्र्थ:, भावना धात्वर्थस्य विशेषभूता, तत्रैव विशेषण-त्वसंख्यादिकानामन्वय:। लिङ्स्थले लिङादिप्रत्ययानां विधि: इष्टसाधनत्वं वा अर्थ:, तस्यैव प्रवृत्तिहेतुत्वात्। ततश्च प्रवर्तनाख्य: अलौकिक: कश्चित् धर्मविशेष:लिङादि-वाच्य:। एवं च शब्दभावना प्रवर्तना प्रवृत्यनुकूलव्यापारो वा विध्यर्थ:। एवमभिधाशक्ति-विषये पदपदार्थयोस्स्वाभाविक: नित्य: सम्बन्ध अभिधाशक्तिरिति सा च प्रत्याय्य-प्रत्यायकभावरूपेति, बोध्यसम्बन्धो लक्षणेति, शाब्दबोधे आख्यातार्थस्य आर्थभावनाया वा मुख्यविशेष्यत्वमिति च भाट्टा:। प्राभाकरमते शब्दविज्ञानापेक्षात्ममन:संनिकर्षात् यददृष्टार्थविषयं विज्ञानं तत् शास्त्रं (शब्द:) नाम प्रमाणम् इति स्वीक्रियते। शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति शाबरभाष्योक्तं लक्षणं न लौकिकवैदिक शब्दसाधारणम्। लौकिकानां आप्तवाक्यानां अनुमानेऽन्तर्भावात् न तत्साधारणमिदं लक्षणम्। परन्तु वैदिकानामेव वाक्यानां प्रमाणान्तरापरिच्छिन्नकार्यार्थावबोधकत्वात् तदसाधारणमेव लक्षणम्। एवञ्च प्राभाकराणां मते लौकिकवाक्यानां नैव प्रमाणशब्द-

त्वम्। प्रमाणशब्दस्तु वेदात्मक अपौरुषेय एव। तथाहि-पदानां खलु स्वाभाविकी अर्थबोधनानुकूला शक्तिरस्ति, न केवलमियं पदार्थमात्रबोधनानुकूला अपितु इतरन्वित पदार्थबोधनानुकूला च। पदानां पदार्थेऽन्वये च पार्थगर्थ्येन शक्तिस्वीकारे शक्तिद्वयम्। जातिशक्तेर्व्यक्तिबोधपर्यन्तवत् पदशक्तेरन्वयपर्यन्तत्वे च लाधवेन **अन्विताभिधानवादः** श्रेयान्। ततश्च तादृशान्वयस्यापि तादृशपदार्थविशेषणतया शक्यत्वं पदवाच्यत्वञ्च अङ्गीकुर्वन्त एते प्राभाकराः अन्विताभिधानवादिन इति कथ्यन्ते। विभक्त्यन्तस्य एकपदस्य अर्थेन अन्वितोऽन्यः पदार्थः पदेन अनुभाव्यत, न तु विभक्त्यन्तपदार्थमात्रम्। एवञ्च अन्वितस्य अभिधानम् इत्यर्थः। लोके केवलेन पदार्थमात्रेण न कश्चिद् व्यवहरति, अपितु विशिष्टेनैव। अन्ततो गत्वा अस्ति भवतीत्यर्थेनैव वा व्यवहारः क्रियते। प्राथमिकशक्ति-ग्रहवेलायामेव व्युत्पित्सुर्बालकः स्वप्रयोजनार्थं व्यवहरतोरूत्तमवृद्धमध्यमवृद्धयोर्वाक्यात् विशिष्ट एव अर्थे शक्तिं गृह्णाति। पदानां आवापोद्वापाभ्यां विपर्यासेऽपि प्रथमातिक्रमणे मानाभावात् अन्विताभिधानः युज्यत इति प्रकरणपञ्चिकायाः वाक्यार्थमातृकायाम्। तत्र पदार्थांशे ज्ञाता सती शक्तिः कारणम्, अन्वयांशे स्वरूपसती कारणम्। अत एव **कुब्जशक्तिवादिन** इति कीर्त्यन्ते। तथा च अन्वितार्थाभिधायीनि पदानि शाब्दबोधे कारणमिति वादिनः प्राभाकराः अन्विताभिधानवादिन इति कीर्त्यन्ते। एवं वदतां प्राभाकराणामयमाशयः -पौरुषेय-अपौरुषेयेषु च पदेषु वैदिकेषु पदेषु स्वभावसिद्धया अन्विताभिधानानुकूलशक्त्या बोधं जनयत्सु तस्मिंश्च बोधे स्वतः प्रामाण्यशालिनि अपौरूषेयाणां वेदवाक्यानां स्वतस्सिद्धं प्रामाण्यं अप्रकम्प्यं भवतीति। लौकिकाणां पौरूषेयाणां शब्दानां शक्तिः भ्रम-अयथार्थशङ्का-आश्रयदोष-प्रमाद-अशक्त्यादिभिः कुण्ठिता भवतीति न तेषां पृथक् स्वतन्त्रं प्रामाण्यम्। किन्तु वक्तृधिय अनुमानेनैव प्रामाण्यं लभन्ते पौरूषेयाणि इति वेद प्रामाण्यपरिपालने भूयसा दत्तादराः प्राभाकराः लौकिकशब्दानां पृथक्प्रामाण्यमेव न स्वीकुर्वन्ति। तथा च वेदशब्दो लौकिकाप्तशब्द इत्युभयप्रामाण्यं भाट्टेषु नैयायिकेषु च निरूपयत्सु उभयस्याप्यनुरूपतया पृथक्प्रामाण्याभावं वैशेषिकेषु निरूपयत्सु एकस्य पृथक् प्रामाण्यम्, अपरस्यानुमानत्वञ्च वदन्तः प्राभाकराः तृतीयं

पन्थानमनुसरन्ति। तदिदं शाब्दं प्रमाणमुपदेशजम्, कार्यजञ्चेति द्विविधम्। जैमिनेर्द्वादशलक्षण्यां पूर्वषट्के उपदेशः, उत्तरषट्के अतिदेश इति भाट्टाः। प्राभाकरास्तु उपदेशस्य न केवल-मातिदेशिकत्वम्, न वा औपदेशिकत्वम् किन्तु विध्याक्षिप्तत्वात् उपदिष्टत्वम्, तद्वद्भावेन प्रापितत्वात् आतिदेशिकत्वमपि। अतश्चोभयलक्षणाक्रान्तत्वात् उभयरूपत्वं तस्येति वदन्तः पूर्वषट्के उपदेशः प्रमेयम्, उत्तरषट्के कार्यप्रमेयमिति मन्यमानाः शास्त्रस्यास्य शब्दनिरूपणपरत्वमुपपादयन्ति। शास्त्रे लिङादेः कार्ये शक्तिः, लोके च क्रियाकार्ये लक्षणेति तज्ज्ञानस्य प्रवृत्तिहेतुत्वं प्राभाकरैस्स्वीकृतम्। तच्च कृतिसाध्यत्वे सति कृतिनिरूपितोद्देश्यताशलित्वात् **कार्यमिति** उच्यते। प्रमाणान्तरागोचरत्वात् **अपूर्वमित्य-प्युच्यते**। पुरुषं तत्तत्कर्मणि नियोजयत् **नियोग** इति च गीयते। ततश्च प्राभाकरमते इयं वाक्यार्थबोधप्रक्रिया–ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यत्र यजेत इति लिङ्प्रत्ययेन कृतिसाध्यतया अपूर्वमभिधीयते। तत्र कृतेः तत्साध्यस्य कर्तृसंख्यायाश्च शब्दार्थत्वेऽपि ''यत्परः स शब्दार्थ इति न्यायेन कार्यस्य प्राधान्येन प्रत्ययार्थत्वे कृतिसंख्ययोरुपसर्जनत्वं एकेनैव अभिधाव्यापारेण अवगम्यते। व्यापारान्तराभ्युपगमे विरम्य व्यापारापत्तेः। अर्थद्वयस्य एकव्यापारेण शब्दतात्पर्यविषयकत्वेऽपि गोत्वगोव्यक्त्योरिव प्रधानोपसर्जनभाव अविरुद्ध एव। तथाविधसामर्थ्यावधारणात् शब्दस्य। तेन लिङ्प्रत्ययस्य कार्याभिधायकत्वेऽवगते यजिप्रकृतिः तदाकाङ्क्षितं विषयं समर्पयति। विषयः करणञ्च **धात्वर्थ** इत्यभ्युगमात्। तथा च यजेत इत्यनेन यागविषयककृतिसाध्यमिति बोधः पर्थवस्यति। पूर्णायां कृतिविषयाकाङ्क्षायां स्वर्गकामपदं कृत्याश्रयं नियोज्यमभिधत्ते। ज्योतिष्टोमेनेत्यत्र च प्रकृत्या यागपरिच्छेदाय तन्नाम अभिधीयते। तृतीयाविभक्तिश्च औपादानिकं यागकरण-त्वमनुवदति। एवञ्च स्वर्गकामनियोज्याश्रितज्योतिष्टोमनामकयागविषयककृति-साध्यमपूर्वमिति शाब्दबोधरूपा वाक्यार्थः पर्यवस्यति। वैयाकरणसम्मतं स्फोटरूपं शब्दतत्वं पराकृत्य क्रमवन्तो वर्णाः पदम् इति शब्दस्वरूपम्। प्रत्याय्य प्रत्यायकभावरूपं सम्बन्धम् औत्पत्तिकं नित्यम्, शक्तिग्रहोपायं वृद्धव्यवहारम्, पदानां अर्थबोधे सामर्थ्यम्, पदानां स्वार्थे जातौ स्मारकशक्तिः, अन्वितेऽर्थेआनुभाविकीं शक्तिम्, अभिधापरपर्यायाः

शक्तेः पदार्थान्तरत्वम्, वाक्यार्थान्वयिनीं पदार्थगतसम्बन्धरूपां **लक्षणाम्**, वृत्तित्रयम्, अविनाभावनिबन्धनां प्रतिपत्तुर्जिज्ञासारूपां **आकाङ्क्षाम्**, सम्बन्धार्हरूपां **योग्यताम्**, यस्यार्थस्य श्रवणानन्तरं आकाङ्क्षायोग्यताभ्यां अर्थान्तरे परिवृत्तिरूपं **सन्निधिञ्च** प्राभाकराः स्वीकुर्वन्ति। एवं अर्थापत्तौ अर्थाध्याहारस्यैव प्राधान्यात् श्रुतार्थापत्तिस्थलेऽपि तेनैव निर्वाहात् श्रुतार्थापत्तेरस्वीकारः प्राभाकरणाम्। यत्र अर्थानुपपत्तिः वाक्यात् प्रतिपन्ना तत्र वाक्यमेव कल्प्यमिति तत्र श्रुतार्थापत्तिं स्वीकुर्वन्ति भाट्टाः। प्रत्यक्षादीनि पञ्च प्रमाणानि भावविषयकाणि नाभावं ग्रहीतुमीशते। अत अभावग्राहकं प्रमाणान्तरमनुपलब्धिं स्वीकुर्वन्ति भाट्टाः। भाट्टमते प्रागभाव प्रध्वंसाभाव-अत्यन्ताभाव-अन्योन्याभावभेदेन अभावश्चतुर्विधः। भाट्टचिन्तामणिस्तु प्रागभावं न स्वीकरोति। परं प्राभाकराः अभावस्याधिकरणात्मकत्वात् तद्ग्राहकप्रमाणस्यानपेक्षितत्वात् अनुपलब्धेः प्रमाणान्तरत्वं न स्वीकुर्वन्ति। द्रव्यगुणकर्मसामान्याभावाः पञ्च, द्रव्यगुणकर्मसामान्याभावशक्तयः षट्, द्रव्यगुण कर्मसामान्य शक्तिसमवायाभावाः **सप्त पदार्था** इति भाट्टप्रस्थानभेदः। द्रव्यगुणकर्म सामान्य शक्ति सादृश्य संख्या समवायश्चेति अष्टौ क्रमेण सह **नव पदार्था** इति प्राभाकराः। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमांसि **एकादश द्रव्याणीति** भाट्टाः। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणीति प्राभाकराः। **वायुः** स्पार्शनप्रत्यक्षविषय इति भाट्टाः, वायुरनुमेय इति प्राभाकराः, आकाशकालदिशां प्रत्यक्षत्वं भाट्टमते, तेषामनुमेयत्वं प्राभाकरे, **आत्मा** मानसप्रत्यक्षविषय इति भाट्टे, आत्मा अहंप्रत्ययविषयः आश्रयविधया सर्वत्र प्रकाशत इति प्राभाकाराः, जरायुजाण्डजस्वेदजोद्भिज्जभेदेन **शरीरं चतुर्विध**मिति भाट्टे, उद्भिज्जं त्यक्त्वा त्रिविधमिति प्राभाकरे, मन अन्तरिन्द्रियं विभुरिति अणु इति पक्षद्वयं भाट्टे, मन अणुपरिमाणमिति प्राभाकरे, कर्णशष्कुल्यवच्छिन्नो दिग्भाग**श्श्रोत्र**मिति भाट्टे कर्णशष्कुल्यवच्छिन्नाकाशश्श्रोत्रमिति प्राभाकरे, शब्दोऽतिरिक्तं द्रव्यमिति भाट्टे, शब्दआकाशगुण इति प्राभाकरे, एवं वर्णात्मकशब्दः द्रव्यम्, ध्वन्यात्मकस्तु वायुगुण अनित्य इति भाट्टे, उभयमपि आकाशगुण नित्य इति प्राभाकरे, ज्ञाततालिङ्गकानुमानेन अनुमेयं **ज्ञानमिति** भाट्टे ज्ञानं स्वप्रकाशमिति

प्राभाकरे, तमसोऽतिरिक्तद्रव्यत्वं भाट्टे, तसस अस्वीकारः प्राभाकरे इति भेदा विद्यन्ते। एवं रूपरस गन्धस्पर्शसंख्या परिमाण संयोगविभाग परत्व अपरत्व गुरुत्व द्रवत्व स्नेह बुद्धि सुख दुःख इच्छा द्वेष संस्कार ध्वनि प्राकट्यभेदात् **एकविंशति** गुणाः, पृथक्त्व प्रयत्न शक्तीरपि मिलित्वा **चतुर्विंशति**गुणाः इति पक्षद्वयं भाट्टे, प्राभाकरे तु संख्यायाः गुणत्वेन अस्वीकारात् पृथक्त्वस्य स्वीकाराच्च रूपरसगन्ध स्पर्श परिमाण पृथक्त्व संयोग विभाग परत्व अपरत्व गुरूत्व द्रवत्व स्नेह बुद्धि सुखदुःख इच्छा द्वेष प्रयत्न संस्कार शब्दाः **एकविंशति**गुणाः स्वीकृताः। **कर्म** प्रत्यक्षमिति भाट्टाः, अनुमेयमिति प्राभाकराः। परापरत्वरूपद्विविधं **सामान्य**मिति भाट्टाः, परसामान्यं नास्तीति प्राभाकराः, पृथिवीत्व-घटत्वगुणत्वकर्मत्व ब्राह्मणत्वादि जातिरङ्गीक्रियते भाट्टैः प्राभाकरैस्तु नाङ्गीक्रियते, जातिव्यक्त्यो**र्भेदाभेदौ** भाट्टे, जातिव्यक्त्योर्भेद इति प्राभाकरीये, **अन्यथाख्याति**रिति भाट्टाः **आख्याति**रिति प्राभाकराः, शिष्टाचारस्य श्रुतिस्मृति कल्पनाद्वारा, स्मृतीनां च वेदमूलत्वेनैव प्रामाण्यमिति भाट्टाः। शिष्टाचारेण साक्षात् श्रुतिरेव अनुमीयत इति तयैव प्रामाण्यं न स्मृतिकल्पनाद्वारेति प्राभाकराः। **अध्ययन**विधिप्रयुक्तत्वमध्ययनस्येति भाट्टाः, **अध्यापनविधि**प्रयुक्तत्वमध्ययनस्येति प्राभाकराः। एवं जैमिनिसूत्राध्ययेष्वपि तात्पर्यभेदमवधारयति प्रस्यानद्वयम्-भाट्टरीत्या प्रथमाध्यायस्य धर्मप्रामाण्यप्रतिपादने तात्पर्यम्, प्राभाकरे तु विधिप्रामाण्य-प्रतिपादने तात्पर्यम्। द्वितीयाध्यायस्य शब्दान्तरादिभिः कर्मभेदनिरूपणे तात्पर्यम् इति भाट्टाः, प्राभाकरास्तु अनुबन्धसाध्यभेदेन शास्त्रभेदनि-रूपणे तात्पर्यमिति वदन्ति। तृतीयाध्यायः शेषशेषिभावं महाप्रकरणावान्तरप्रकरणभेदेन प्रकरणद्वैविध्यञ्च प्रतिपादयतीति भाट्टः। प्राभाकरास्तु वैनियोगिकं शेषत्वम्, महाप्रकरणञ्च प्रतिपादयति अवान्तरप्रकरणे तात्पर्यं नेति वदन्ति। चतुर्थाध्यायस्य विषयः प्रयोज्यप्रयोजकव्यापार इति भाट्टाः, प्राभाकरास्तु उपादानाख्यं प्रमाणम्, तच्च विध्यपेक्षारूपविधिव्यापारात्मकं शब्दप्रमाणान्तर्भूतम्। तेषां शेषत्व-प्रयुक्ति-अधिकार-उत्पत्त्याख्यं चतुष्टयं विषय इति वदन्ति। पञ्चमेऽध्याये श्रुत्यर्थपाठस्थानमुख्यप्रवृत्याख्यैः षड्भिः प्रमाणैः क्रमो निरूप्यते, स च विधेयः पदार्थविशेषणतयेति भाट्टाः, स चानुक्रमो

न विधेय इति प्राभाकराः। दशमाध्याये अर्थलोपप्रत्याम्नान-प्रतिषेधैः उत्सर्गापवादाभ्यां बाधनिरूपणम्, बाध्यस्य पदार्थस्य अतिदेशतो विकृतौ न प्राप्तिरिति भाट्टाः। प्राकृतानां पदार्थानां विकृतौ अङ्गत्वमस्ति परं द्वारलोपादिना अनुष्ठानं न भवति इति प्रतिपादनं विषय इति प्राभाकरणामाशयः। प्राभाकरेभ्यः भाट्टाः कुत्र भिद्यन्त इत्यस्मिन् विषये केचन श्लोकाः **मानरत्नावल्याख्ये** दृश्यन्ते-''संविदोऽस्वप्रकाशत्वम्, अन्यथाख्यातिसंशयौ। कर्मदिक्कालवियतां प्रत्यक्ष ज्ञानगम्यता॥ ध्वनेर्विभुत्वनित्यत्वे मनसोऽस्पन्द वैभवे। भिन्नाभिन्नत्वम्, एकस्य समवायस्य नास्तिता॥ विभुद्वयस्य संयोगः नित्यत्वं तस्य चात्मनः॥ ज्ञेयत्वं मुक्तिवेलायां नित्यानन्दानुभाविता। अभावप्रकटत्वञ्च शक्तेरननुमेयता। गुणत्वमन्धकरस्य पुंगिरां स्वार्थमानता॥ पृथिवीत्वादिसामान्यम्, रूपत्वाद्याश्च जातयः। अनन्विताभिधानञ्च वेदस्याकार्यमानता॥ श्रुतार्थापत्तिरित्येतेषु स्थलेषु प्रति-योगिनः। प्राभाकरा निराकार्याः भाट्टमार्गानुसारिणा॥'' एभिश्श्लोकैः भाट्टै स्स्वीकृताः विषयाः प्राभाकैररस्वीकृताश्च विषयाः संग्रहेण ज्ञातुं शक्यन्ते।

# अष्टमं कुसुमम्

**मीमांसादर्शनग्रन्थसम्पत्**-मीमांसादर्शनसाहित्यमिदं अनादिकालादारभ्य दर्शनान्तरसाहित्यवत् अनुस्यूतं यथाकालं विलसितं विकसितं प्रसृतञ्चेति तत्साहित्य ग्रन्थपरिशीलनया ज्ञातुं पार्यते। दर्शनान्तरेषु यावन्ति पुस्तकानि अतिगभीराणि दुरवगाहानि च वर्तन्ते ततोऽन्यूनं तानि मीमांसायामपि विद्यन्त एव। ते च ग्रन्थाः सूत्रग्रन्थाः, अधिकरणग्रन्थाः प्रकरणग्रन्थाश्चेति त्रिधा विभागमर्हन्ति। प्रकरणग्रन्था अपि विषयविचारे लघुभूता सुलभग्राह्याः, गम्भीरशैलीपूर्णाः वादप्रधानाश्चेति विभागमर्हन्ति। तेषु **सूत्रग्रन्थेषु** सूत्रग्रन्थाः सूत्रव्याख्यानपराः सूत्ररचनानन्तरं प्रणीताः, येषु शाबरभाष्यम्, वार्तिकम्, वृहती वार्तिकव्याख्योपव्याख्याश्च अन्तर्भवन्ति। **अधिकरण ग्रन्थेषु** शास्त्रदीपिकान्याय-मालाविस्तरादीनां ग्रन्थानां स्थानम्। **प्रकरणग्रन्थेषु** आकरग्रन्थस्थसिद्धान्त सारमाविष्कुर्वतां लघूनां वादप्रधानानां परिष्कारप्रधानानाञ्च मीमांसान्यायप्रकाश-न्यायरत्नमाला-भाट्टदीपिका-भाट्टचिन्तामणि-भाट्टरहस्यादीनां ग्रन्थानां स्थानं अनितरसाधारणं दृश्यते। तेषु प्रस्थानद्वयसिद्धाः सिद्धान्तभेदाश्च ज्ञातुं पार्यन्ते।

प्रथमं जैमिनिरचितं **मीमांसासूत्रम्**। सूत्ररचनायाः कारणन्तु इदम्-काले तस्मिन् चतुर्णामपि वेदानां अनेकाः शाखाः प्रशाखा-श्च या एकशतमध्वर्युशाखाः, एकविंशतिधा बाह्वृच्यम्, सहस्रवर्त्मा सामवेदः, नवधाथर्वण इत्यादिमहाभाष्यादौ उलिखिता दृश्यन्ते। तासु प्रचलितेषु ब्राह्मणपाठेषु प्रकीर्तितानां यागसवनहवनादीनां स्वरूपे कर्मणि च आपाततो दृष्टात् विरोधात् सम्प्रदायविच्छेदाच्च यागादिकर्मसु गुणविधीनाम्, अङ्गाङ्गिभावपौर्वार्यादिविषयेषु संशया उदपद्यन्त। एवंविधानां संशयानां निराकरणार्थं वैदिकवाक्यानां अविरोधेनार्थनिर्णयार्थञ्च बहुभिः पूर्वाचार्यैराश्वलायन-शाङ्खायनापस्तम्ब-बौधायन-सत्याषाढ-कात्यायन-द्राह्यायणादिभिः तथा आत्रेय ऐतिशायन बादरायण बादरि कार्ष्णाजिनि लाबुकायनादिभिश्च अनेकानि कल्पसूत्राणि मीमांसासूत्राणि च रचितानि। ऋग्वेदे आश्वलायनम्, सांख्यायनम्, कृष्णयजुर्वेदे आपस्तम्ब बौधायन

भारद्वाज-कठवैखानस बाधूल मानवादीनि, शुक्लयजुर्वेदे कात्यायन पारस्करादीनि साम-वेदे द्राह्यायण लाट्यायन गोभिलियादीनि इति प्रसिद्धिः। एवमथर्ववेदे कौशिकादीनि च। परन्तु कल्पसूत्राणि अर्थवादादिमिश्रशाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहार-निष्पन्नान् प्रयोगाशुभावान् प्रतिपादयन्ति। क्रतुप्रयोगं पाठमात्रेण कल्पयन्ति इति खलु **कल्प**शब्देन व्यपदिश्यते। कर्मणः शेषशेषिभावः उपदेशातिदेशोहबाधतन्त्रा-धिकारविचारादीन्, वेदार्थनिरूपणपरान् स्मृत्यर्थनिर्णायकान् न्यायांश्च कल्पसूत्राणि न वर्णयन्ति। तानि निरूपणार्थं ग्रन्थान्तरस्यावश्यकता संपन्ना स्यात्। तेषां निर्णयार्थं प्रवृत्तानि जैमिनिसूत्राणि। पूर्वोक्तानां कल्पसूत्राणां मीमांसासूत्राणां च मध्ये कानि पूर्वतनानि कानि पश्चात्तनानीति यद्यपि निश्चिततया न वक्तुं शक्यन्ते तथापि निश्चितमेतत् यत् जैमिनिसूत्रेभ्यः प्रागासन् कानिचन मीमांसासूत्राणि। पूर्वाचार्यविरचितानि मीमांसासूत्राणि कल्पसूत्राणि च समालोक्य तत्प्रतिपादितान् न्यायान् युक्तीश्च स्वीकृत्य सर्वान् मन्त्र ब्राह्मणग्रन्थांश्च सविमर्शमालोढ्य श्रौतभागनिर्वचने, उपयुक्तान् न्यायान् एकत्र उपनिबध्य द्वादशाध्यायीरूपं **मीमांसासूत्रं** जैमिनिकृतमाविरभूत। अयमेव जैमिनिसूत्राणां श्लाध्यो विशेषः यदेतेषु सूत्रेषु मुख्ययागानां अवान्तरयागानां होमानां उपहोमानां इष्टीनां च प्रकृतिविकृतिभाव-अङ्गाङ्गिभावनिर्णयः तथैव मुख्यभागादिषु प्रयुज्यमानानां अवान्तरकर्म-णां अङ्गाङ्गिभावः क्रमः द्रव्यदेवतानिर्णयश्चेत्यादयः तथा सामीचीन्येन प्रदर्शिता यथा अनिर्भिन्नपरम्परया लोके परिदृश्यमानं श्रौतकल्पसूत्रेषु च विस्तरतः प्रतिपादितं यागानां स्वरूपं आगामिकाले तथैव प्रतिष्ठितं स्यात् न विकल्पलवावकाशोऽपि मनसि पदं कुर्यात्। ईषदधिकनवशताधिकरणेषु विभक्तैः पादोनसहस्रत्रयपरिमितैः सूत्रैर्भगवता जैमिनिना वेदप्रतिपादितो यागादिरूपोऽर्थः पूर्वोत्तरपक्षरूपेण बहुविधलौकिकयुक्ति निर्देशपूर्वकं निर्धारितः। श्रुत्या आपस्तम्बसूत्राद्यनुरोधेनानुष्ठेययागादावेव धर्मशब्दार्थः प्रथमं प्रयुक्तः। तत्र बहवो धर्मशब्दार्थं प्रकल्पयन्ति-सांख्याः यागाद्यनुष्ठानजन्यं अन्तः करणस्य वृत्तिविशेषं धर्मं वदन्ति। ज्ञानस्य ज्ञानान्तरजन्यां वासनां धर्मं वदन्ति सौगताः। पुद्गलाख्यान् देहारम्भकान् पुण्यविशेषोत्पन्नान् परमाणून् धर्मं वदन्ति आर्हताः। अदृष्टापरपर्यायं

विहितकर्मजन्यं आत्मनो विशेषगुणं धर्मं वदन्ति नैयायिकाः। मीमांसैकदेशिनस्तु अपूर्वं धर्मं वदन्ति। "अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः। पुद्गलेषु च पुण्येषु नृगुणेऽ-पूर्वजन्मनि॥" इति श्लोकवार्तिके (९४)। चैत्यवन्दनं धर्मं आगमानुयायिन आचक्षन्ते। यद्योगेनात्मदर्शनं धर्म भागवतास्सङ्गिरन्ते। आचारः प्रथमो धर्म इति ऐतिह्यविदः। यतोऽभ्युदयनिःश्रेयससिद्धिस्सधर्म इति काणादाः। न हि सत्यात् परो धर्म इत्यन्ये। एवं बहुधा विप्रतिपत्तिगोचरे धर्मशब्दार्थे जैमिनिरसुसूत्रयद् "चोदनालक्षणो धर्मं इति। तेन वेदवाक्यगतविधि वोधितक्रियाकलापस्यैव धर्मत्वमवादीत्। एवं **प्रथमेऽध्याये** विध्यादेः प्रामाण्यं निरूपितं धर्मलक्षणभेदश्च। **द्वितीये** तद्विशेषकर्मभेदो निरूपितः। **तृतीये** विहितानां यागादिकर्मणां शेषशेषिभावः। चतुर्थेऽध्याये क्रतुप्रयुक्तानुष्ठेयानां पुरूषार्थ प्रयुक्तानां च पदार्थानां परिमाणं अथवा सिद्धशेषशेषिभावानां कर्मणामनुष्ठापनशक्तिरूपा प्रयुक्तिः निरूपिता। **पञ्चमे** अनुष्ठेयपदार्थानां अनुष्ठानक्रमः प्रदर्शितः। **षष्टे तु** विहितकर्म फलभोक्तृस्वरूपाधिकारः प्रदर्शितः। एवं द्वितीयेऽध्याये उत्पत्तिविधिप्रमेयस्य कर्म-भेदस्य तृतीयेऽध्याये विनियोगविधि प्रमेयस्य शेषशेषिभावस्य चतुर्थपञ्चमाध्याययोः प्रयोगविधिप्रमेययोः प्रयुक्तिक्रमयोश्च निरूपणानन्तरं षष्ठेऽधिकारविधिप्रमेयः फलसम्बन्धो निरूपितः। एवं विधिचतुष्टयात्मकोपदेशविचारे पूर्वषट्केन कृते ततः परमध्यायचतुष्टयेन अतिदेशविचारः क्रियते। इत्थं कर्तव्यमिति प्रतिपादनमुपदेशः। तद्वत्कर्तव्यमित्यतिदेशः। **सप्तमेऽध्याये** प्रकृतावुपदिष्टानामङ्गानां विकृतौ सामान्यातिदेशो निरूपितः। **अष्टमेऽ**ध्याये आग्नेयोऽष्टाक्माल इत्यादिप्रकृत्यङ्गानां सौर्यं चरुं निर्वपेदित्यादि-विकृत्तौ सप्तदशद्रव्यदेवतादिद्वारेण विशेषातिदेशो निरूपितः। **नवमे**ऽध्याये प्रकृतावुपदिष्टानां मन्त्रसामसंस्कारकर्मणां विकृतावतिदेशप्राप्तानां प्रकृतिविकृत्योरग्निसूर्यादिदेवताभेदे प्रकृति विकृतिगतं देवतादिवाचकं पदं विहाय विकृतौ देवतादिवाचकस्य पदस्याध्याहार ऊहो निदर्शितः। यथाऽग्नये जुष्टमिति मन्त्रे प्रकृत्युपदिष्टे विकृतातिदेशे प्राप्तेऽग्निपदपरित्यागेन सूर्यपदाध्याहारः। यथा च गिरा गिरा दृक्षसे इत्यत्र साम्नि गिरापदस्य परित्यागेन इरा पदस्याध्याहारः साम्नामूहः। व्रीहयवादिसम्बन्धिनश्चावधातादेर्नीवारादिद्रव्यारन्तसम्बन्धः

संस्कारकर्मणामूहः। **दशमेऽध्याये** विकृतौ चोदकप्राप्तानां प्राकृतानां प्रकृताङ्गानाञ्च प्रकृतौ सावकाशानां विकृतौ हि उपदिष्टविशेषाङ्गादीनां निवृत्यात्मको बाधो निरूपितः। यथा-प्रकृतेः सकाशात् विकृतौ अतिदिष्टानां बर्हिणां शरमयं बर्हिरित्युपदिष्टेन शरमयबर्हिषा बाधः। **एकादशे**ऽध्याये अनेकाङ्गिविधिप्रयुक्तानामङ्गानां सकृदनुष्ठानात् सर्वाङ्गिनामुपकारसाम्यरूपं **तन्त्रं** निरूपितम्। यथा-आग्नेयोऽष्टा कपालः उपांशुयाजमन्तरा यजत्यग्नीषोमीयमेकादशकपालमित्यादि पौर्णमासादिकर्मप्रयुक्तानां प्रयाजाद्यङ्गानां सकृदनुष्ठानात् सर्वाङ्ग्युपकारः। तत् **तन्त्रं** फलतन्त्रम् पदार्थतन्त्रम् अनुष्ठानतन्त्रञ्चेति त्रिविधम्। तत् त्रिविधमपि सोदाहरणं निरूपितम्। **द्वादशे** एकाङ्गिप्रयुक्तस्याङ्गानुष्ठानस्य तत्प्रयोजकसामर्थ्यरहितेऽङ्ग्यन्तरेऽप्युपकाररूपः **प्रसङ्गो** निरूपितः। अनुष्ठानप्रसङ्गः, पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति प्रसङ्गस्त्रिविधः। स च सोदाहरणं सापवादञ्च सविस्तरं वर्णित **इत्यध्यायसारः**। एतस्याः द्वादशलक्षण्याः कर्ता जैमिनिः। मीमांसासूत्रेषु आत्रेयाश्मरथ्य-कार्ष्णजिनि-बादरि-ऐतिशायन-कामुकायनालेखन-लाबुकायन-प्रभृतीनां आचार्याणम् उल्लेखो दृश्यते। तेषां प्रबन्धास्तु न लभ्यन्ते। ते हि जैमिनेस्सामयिका वा पूर्वतना वा भूत्वा स्वीयमभिप्रायविशेषमाविष्कृतवन्तः। तेषां आशयाश्च जैमिनिना निर्दिष्टाः इति कथनं समीचीनम्। शास्त्रदीपिकाव्याख्यायां **युक्तिस्नेह**प्रपूरणीत्यपराभिधायां **सिद्धान्तचन्द्रिकायां** ब्रह्मा प्रजापतये मीमांसां प्रोवाच सीऽपीन्द्राय सोऽप्यग्नये स च वसिष्ठाय सोऽपि पराशराय पराशरः कृष्णद्वैपायनाय सोऽपि जैमिनये स च स्वोपदेशानन्तरं इमं न्यायं ग्रन्थे निबद्धवानिति तर्कपादे दर्शनात्, सुमन्तु जैमिनिवैशम्पायन पैलसूत्रभाष्य भारत महाभारतधर्माचार्याः इत्यादिरूपात् ब्रह्मकर्मवाक्योल्लेखाच्च महर्षित्वेन साम्प्रदायिकानां विश्वासात् जैमिनेः कालनिर्णये अनासक्तास्साम्प्रदायिकाः। परन्तु भारतीया आधुनिका विमर्शका अभारतीया विमर्शकाश्च BC 200-300 शताब्दी जैमिनिकाल इति वदन्ति।

**मीमांसाभाष्यम्**-मीमांसासूत्राणि निगूढार्थानि शब्दतः सक्षिप्तान्यपि अर्थतो गभीराणि न बुद्धिमारोहन्तीति सूत्राणां सुलभार्थावबोधाय मीमांसाभाष्यं शबरस्वामिना रचितम्। भाष्यमिदं असाधारण्या वचनधोरण्या लोकोत्तरया अर्थप्रतिपादनशैल्या सर्वाण्यपि

भाष्याण्यतिशेते। भाष्यप्रणयनपद्धत्यां मार्गदर्शी इत्यपि वचनं सुलभम्। यतोहि शाङ्करभाष्यमपि शैलीतः भाष्यारम्भे मीमांसाभाष्यमनुसरति। मीमांसासूत्राणां पूर्वपक्षोत्तर-पक्षरूपा व्यावस्था भिन्नभिन्नविषयप्रतिपादकानां सूत्राणां भिन्नभिन्नेषु अधिकरणेषु निवेशः सूत्रप्रतिपादित विषयोद्धाटनम्, सूत्रकृद्रहस्याविष्करणम्, इत्येतत् सर्वं मीमांसाभाष्ये सुसमीचीनतया दृश्यते, ललितमधुरा सुश्लिष्टपदा प्रसन्ना गम्भीरा च मीमांसाभाष्यशैली। विवक्षितार्थपाटवे यदि नाद्वितीयत्वं मीमांसाभाष्यस्य तर्हि तत् पातञ्जलेन महाभाष्येण। भाषायां स्वातन्त्र्यस्य व्युत्पत्तिविशदिम्नो वा इदं लक्षणं यत् अभिधीयमानं प्रायस्सर्वं न्यायरूपं भवति। तादृशन्यायजटिलमिदं मीमांसाभाष्यम्। भाष्येऽस्मिन् तत्र तत्र लोकव्यवहारनुकूलानां योग्यानां न्यायानां विचाराः ये वैदिकविधीनामपि अनुरूपाः दृश्यन्ते। तदिदं मीमांसाभाष्यं तृतीयाध्याये तुरीये पादे दशमादीनां षण्णां सूत्राणां नोपलभ्यते। तत्र **तन्त्रवार्तिके** बह्वीरुत्प्रेक्षाः दृश्यन्ते-अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि। तत्र व्याख्यातारो विवदन्ते। केचिदाहुः विस्मृतानि। लिखितः ग्रन्थः प्रलीन इत्यपरे। फलगुत्वात् उपेक्षितानीत्यन्ये। अनार्षेयत्वादित्यपरे। वृत्यन्तरकारैस्तु सर्वैर्व्याख्यातानि''। मण्डनाचार्यैरपि **मीमांसानुक्रमणिकायां** अव्याख्यतत्वात् भाष्येण तानि सूत्राणि न परिगणितानि। भाष्येऽस्मिन् पाणिनिः कात्यायनः यास्कः पिङ्गलः बोधायनः, आपस्तम्बः मनुरित्येते निर्दिष्टाः। भगवच्छब्देन उपवर्षोऽपि सबहुमानं निर्दिष्टः। भाष्यस्यास्य कर्त्तुः **शबरस्वामिनः** पूर्वं **आदित्यसेन** इति नामासीत्। जैनाना-मुत्पीडनादात्मानं रिरक्षिषुरयम् अरण्यचारी भूत्वा शबरस्वामीति नाम लेभे इति कथापि प्रसिद्धा। अपराख्यायिका तु शबरस्वामिनं विक्रमादित्यनृपतिपितृतया अङ्गीकुरुते-श्लोकश्चात्र श्रूयते-''ब्राह्मण्यामभवत् वराहमिहिरो ज्योविर्विदामग्रणीः राजा भतृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्। वैश्यायां हरिचन्द्र वैद्यतिलकः जातश्च शङ्कुः कृती शूद्रायाममरः षडेव शवरस्वामिद्विजस्यात्मजाः॥'' इति। यदीदं पद्यं तथ्यं तर्हि वराहमिहिरकालात् विक्रमादित्यकालाच्च किञ्चित् पूर्वतन (AD 240) इति विमर्शकाः।

मीमांसासूत्राणां व्याख्या **उपवर्षभर्तृमित्रभवदासा**दिभिः कृता आसीदिति ज्ञातुं पार्यते। मीमांसाभाष्ये शबरस्वमिना भगवानुपवर्ष इति निर्देशः कृतः। वृद्धानां समति दर्शनायेति उपवर्षग्रहणमिति **तन्त्रवार्तिके** (1-1-5)। एवं **शाङ्करसूत्रभाष्ये** (1-3-28, 3-3-53) उपवर्षो उल्लिखितः। ततश्च पूर्वोत्तरमीमांसायां विंशतिलक्षण्यां उपवर्षवृत्तिरासीदिति अनुमातुं शक्यते, ग्रन्थस्यालाभात्। एवं भवदासीया वृत्तिरपि मीमांसासूत्रोपरि आसीदिति, यत्र 'अथात' इत्यैकपद्यं स्वीकृतमिति **श्लोकवार्तिकात्** 1-1-1-63, 1-1-1/33 **न्यायरत्नाकराच्च** ज्ञातुं पार्यते। एवं भर्तृमित्र कृतापि काचन मीमांसासूत्रवृत्तिरासीत् या वार्तिककारेण न मीमांसासिद्धान्तसंवादिनीति निराकृता इत्यपि ''प्रायेणैव हि मीमांसा लोके लोकायती कृता। तां आस्तिकपथे कर्तुमयं यत्नः कृतो मया'' इति **श्लोकवार्तिकात्** तस्य व्याख्याया **न्यायरत्नाकराच्च** ज्ञातुं पार्यते। बौद्धजैनादिभ्यः मीमांसादर्शनं रक्षितुं वैदिकमतस्थापनाय प्रवृत्तेषु बहुषु मीमांसकग्रन्थेषु **श्लोकवार्तिकं** सर्वोत्तमं व्याख्यानम्। मीमांसाभाष्यस्य वार्तिकरचनाव्याजेन मतान्तरीयसिद्धान्ताः निपुणया विवेचनपट्व्या विमर्शनैकस्वभावया शैल्या खण्डिता विद्यन्ते। वृत्तिकारमतपरिशीलनम्, निरालम्बनवाद शून्यवाद चित्राक्षेपवाद सम्बन्धाक्षेपवाद स्फोटवाद अपोहवाद वनवाद आत्मवादादिषु मतान्तरखण्डनं परिशीलनञ्च ग्रन्थस्यास्य मुख्यो विषयः। श्लोकबद्धतया अस्य श्लोकवार्तिकमिति सार्थकं नाम। इदं श्लोकवार्तिकं प्रथमाध्यायस्य प्रथमपादपर्यन्तस्यैव। प्रथमाध्ययस्य द्वितयपादादारभ्य या व्याख्या सा तन्त्रवार्तिकमिति व्यापदिश्यते या तृतीयाध्यायसमाप्तिपर्यन्ता भवति। चतुर्थादारभ्य द्वादशाध्यायान्तव्याख्या टुपटीकेति समाख्यायते। अस्य व्याख्यात्रयस्यापि कर्ता सुब्रह्मण्यावतार इति प्रसिद्धः प्रच्छन्नवेषधारी भूत्वा बौद्धाचार्येभ्य अधीतबौद्धसिद्धान्तः वादकौशलेन खण्डितबौद्धसिद्धान्तः, गुरुद्रोहरूपपापप्रायश्चित्ताय तुषाग्नौ प्रविष्टः शङ्कराचार्यसमकालीन जन्मना द्रविडदेशीयः बिहारवासी उव्वेकभट्टमण्डनयोर्गुरुः बौद्धाचार्यधर्मकीर्तिसामयिकः तुतातभट्ट इत्यपरनामा **कुमरिलभट्टः**, यस्य जीवनकालः AD 700 इति विमर्शकः। सर्वदर्शनकौमुद्यां बृहट्टीका-मध्यमटीकेति टीकाद्वयमपि

कुमरिलभट्टकृतं भाष्यव्याख्यानमासीत् इति विद्यते। तस्माच्चोद्धरणानि अनन्तरकालीनेषु न्याय सुधादिषु उपलभ्यन्त इति च। परन्तु ग्रन्थद्वयं नेदानीमुपलभ्यते। **श्लोकवार्तिकव्याख्याः – उंवेकभट्टा**परनामधेयेन भवभूतिना कुमरिलभट्टशिष्येण कृता श्लोकवार्तिक व्याख्या **तात्पर्यटीका**नाम्नी मद्रासविश्वविद्यालये मुद्रिता। अस्य व्याख्यातुः विश्वरूप इति नामान्तरमिति ब्रह्मसिद्धिकारमडनोंवेकयोरैक्यमिति च केचन। यथा तथा वा भवतु। निबन्धनकार इति प्रसिद्धोऽप्ययमेव। अनेन भावनाविवेक व्याख्यापि कृता। अस्य काल AD 620-750 इति स्वीक्रियते। **न्यायरत्नाक**राख्या अपरा श्लोकवार्तिकव्याख्या मैथिलेन शास्त्रदीपिकादिकर्त्रा यज्ञात्मसूनुना **पार्थसारथिमिश्रेण** कृता विद्यते या वाराणस्यां मुद्रिता। पार्थसारथिमिश्रकालः मीमांसान्यायमालाकर्तुः माधवाचार्यात् पूर्वतनः न्यायरत्नकर्तृ रामानुजाचार्यात् परतनः AD 1100 इति निश्चितः। सेश्वरमीमांसायां वेदान्तदेशिकेन निर्दिष्टेन सुचरितमिश्रेण कृता काचन श्लोकवार्तिकव्याक्या **काशिका**ख्या तिरुवनन्तपुरे मुद्रिता सुचरिमिश्रकालः AD 1000-1100। केरलीयेन ऋषिपुत्रतृतीयेन **परमेश्वरतृतीयेन** कृता काचन श्लोकवार्तिक**काशिकाव्याख्या** अमुद्रिता मद्रयुरीकोशागारे विद्यते। मीमांसासूत्रार्थसंग्रहेऽपि निर्दिष्टाः। अस्य समयः AD 1300-1500 इति, ऊह्यते। सोऽयं तृतीयपरमेश्वरः स्वमातुलात् वासुदेवात् प्राप्तविद्यः शिष्यश्च। भट्टपुत्रेण **जयमिश्रेण** (AD 1100) कृता काचन श्लोकवार्तिकव्याख्या **शर्करिका**ख्या आकृतिवाद अपोहवाद वनवाद सम्बन्धाक्षेपपरिहारवादानां परं लभ्यते प्रकाशिता च। जयमिश्रोऽयं स्याद्वादरत्नाकरे निर्दिष्टश्च। दिनकरभट्टपुत्रेण गागाभट्टेन कृता काचन **शिवार्कोदय** नाम्नी श्लोकवार्तिकानुबन्धरूपा व्याख्या गागाभट्टेन कृतायां कुसुमाञ्जल्या-ख्यायां सूत्रवृत्तौ भाट्टचिन्तामणौ च निर्दिष्टा न लभ्यते च। गागाभट्टसमयस्तु AD 1630.

**तन्त्रवार्तिकम्**-शाबरभाष्यस्य प्रथमाध्यायद्वितीयपादप्रभृति तृतीयाध्यायचतुर्थ-पादसमाप्तिपर्यन्तस्य विस्तृतं व्याख्यानं तन्त्रवार्तिकमित्युच्यते। इदन्तु व्यतिषङ्गेण गद्यपद्यमिश्रितम्। कुमरिलभट्टस्य पाण्डित्यप्रकर्षेण ग्रन्थेऽस्मिन् बौद्धसिद्धान्तानां विशिष्य दिङ्नागस्य प्रमाणसमुच्चयस्य प्रखरा समीक्षा कृता। मीमांसादर्शनस्य मुख्यतमः सिद्धान्तः अतिवैदुष्यपाटवेन विशदीकृतः। मीमांसादर्शनस्य मूलं वैदिकलौकिकानुभवाश्रित प्रत्यक्षानुमानमिति तदेव मीमांसादर्शनस्य मूलं प्रधानं प्रमाणमिति कथनं मीमांसादर्शनस्य श्रेष्ठतां आपादयति। एवं प्रथमाध्यायस्य तृतीयपादे अद्यत्वेऽपि अहिच्छत्रमधुरा-निवासिब्राह्मणीनां सुरापानम्, भार्यापत्यमित्रसहभोजनादि उदीच्यानाम्, मित्रस्वजनो-च्छिष्टस्पृष्टभोजनं मातुलकन्योद्वाहः दाक्षिणात्यानम्, इत्यादि प्रसङ्गात् कथनं तत्कालिकस्य सामाजिकाचारस्य प्रकृष्टमुदाहरणं भवति। एवं आर्यम्लेच्छाधिकरणे क्रियमाणो विचारः भाषावैज्ञानिकानां अतीवोपकारकः दाक्षिणात्यद्राविडभाषाज्ञानपरिचयस्य च उत्कृष्टमुदाहरणं च भवति। किञ्च तन्त्रवार्तिके न केवलं भाष्यार्थ एव विवृतः परन्तु भाष्येऽनुक्तानामपि भूयसां विषयाणां सप्रपञ्चं सोपपत्तिकञ्च समर्थनाय नान्तरीयक एव संवृत्तः प्रबन्धस्य बहुलीभावः। यथा-स्मृत्यधिकारणे भाष्ये '' औदुम्बरी सर्वाविष्टयितव्या'' इत्यादिस्मृतीनां '' '' औदुम्बरीं स्पृष्ट्वा उद्गायेत् '' इति प्रत्यक्षश्रुति विरोधात् मूलश्रुत्यनुमाने

जिज्ञासानुदयाच्च स्वरूपतोऽप्रामाण्यमङ्गीकर्तव्यमित्याशयिष्ट शाबरभाष्यम्। तच्च स्वरूपतोऽप्रमाण्यमनधिगताबाधितार्थाबोधकत्वरूपम्। तन्त्रवार्तिकन्तु यावत् श्रुतिदर्शनं तासां स्मृतीनां अननुष्ठापकत्वरूपमप्रामाण्यं न पुनरनधिगतार्थाबोधकत्वरूपमप्रामाण्यमिति व्याजहार। विरोधे त्वनपेक्षमिति सूत्रगतानपेक्षपदस्य सामान्यतोऽप्रमाणार्थत्वादननुष्ठापकत्वरूपाप्रामाण्यविवक्षयापि निर्वाहे सर्वथा अप्रामाण्यं स्मृतीनां नारोचिष्ट तन्त्रवार्तिककृते। एवं प्राचीननैयायिका इव शाबरं भाष्यं अपि सिषाधयिषाया अनुमितिजनकत्वमभिमन्वानं सत् जिज्ञासाया अनुमानाङ्गत्वमूरीकृत्य प्रत्यक्षश्रुतौ जाग्रत्यां निराकाङ्क्षतया जिज्ञासाभावात् अनुमानमेव न प्रवर्तत इत्यज्ञातमूलकस्मृतेः सर्वथैवाप्राण्यम् अङ्ग्यकार्षीत्। परं वार्तिकन्तु घनगर्जितेन मेघानुमानादौ व्यभिचारदर्शनात् अनुमित्साया अनुमितिजनकत्वं प्रत्याचक्षत् मूलभूतां श्रुतिमनुमिमानं तस्याः सर्वथा अप्रामाण्यमसहिष्णु अननुष्ठापकत्वरूपमप्रामाण्यं व्यवातिष्ठिपत्। वार्तिकं भाष्यकृतो मतं तत्र तत्र व्युदस्यतीति कश्चनापवादः। सोऽपि आत्मानं न लभते। यतः छात्रबुद्धिवैशद्याय अभ्युच्चयवादेन अर्थान्तरोपवर्णनं न खण्डनम् अपितु मण्डनमेव। वस्तुतः निष्पक्षपातं प्रबलया युक्तिधारया कमप्यर्थं निर्णयन् ग्रन्थकारो व्याख्याकारो वा कथमपि शिष्टमर्यादां न अतिलङ्घयेत् प्रत्युतोपकुर्यादेव। एषा दार्शनिकग्रन्थसरणिः। **तन्त्रवार्तिकव्याख्याः - तौताततमततिलका**ख्या काचन तन्त्रवार्तिकव्याख्या गोवर्धनसङ्ज्ञोकयोः पुत्रेण बालवलभीभुजग इत्यपर नाम्ना प्रसिद्धेन सवर्णगोत्रजेन सामवेदीयकौथुमीशाख्याध्येत्रा भवदेवभट्टेन (AD 1100) कृता, या च मुद्रिता। भट्टमाधवपुत्रेण सोमेश्वरभट्टेन कृता **न्यायसुधा-राणक-सर्वानवद्यङ्करणी-सर्वोपकारिणी**त्यादिनाम्ना प्रसिद्धापि राणकनाम्नातिप्रसिद्धा काचन तन्त्रवार्तिकव्याख्या मुद्रिता। राघवसोमयाजिवंशजेन तिरुमलाचार्यपुत्रेण अद्वैतविद्याचार्य-महोपाध्याय इति प्रसिद्धेन आन्ध्रजेन तर्कसंग्रह ब्रह्मसूत्रव्याख्यादिकर्त्रा अन्नम्भट्टेन कृता न्यायसुधाव्याख्या राणकोज्जीविनीति प्रसिद्धा अमुद्रिता हस्तलिखितग्रन्थागारेषु लभ्यते। एनमधिकृत्य मदीये अ**द्वैतवेदान्तसाहित्येति**हासे दर्शनमञ्जर्याञ्च अधिकं द्रष्टव्यम्। मीमांसासूत्रार्थसंग्रहकर्त्रा परमेश्वरेण निर्दिष्टेन अजिताख्यनदीतरवासिना बंगीयेन कृता काचन

तन्त्रवार्तिकनिबन्धनापराभिधा **अजिताख्या** तन्त्रवार्तिकव्याख्या मद्रासपुस्तकालयेषु अमुद्रिता लभ्यते। केचन भागाः मुद्रिताश्च। अस्या रचयिता **परितोषमिश्रः** त्रयोदश (AD 1250) शतकीयः। तृतीयपरमेश्वर ऋषिपुत्रपरमेश्वरेण मीमांसासूत्रसारसंग्रहे निर्दिष्टेन सूर्यनारायणमिश्रपुत्रेण **अनन्तनारायणमिश्रेण** अजिताचार्य इति प्रसिद्धेन कृता **विजयाख्या** अजिताव्याख्या निबन्धनापराभिधा अमुद्रिता मद्रासवरोडापुस्तकालयेषु लभ्यते। शालमलीग्रामवासिना न्यायसुधाकर्तुः सोमेश्वरभट्टस्य पुत्रेण त्रयोदशशतकीयेन (AD 1230-1300) **गङ्गाधरमिश्रेण** कृता काचन **तन्त्रवार्तिकविवरणाप**रामिधा **न्यायविवरणाख्या** तन्त्रवार्तिकव्याख्या अमुद्रिता मद्रासपुस्तकालयेषु लभ्यते। रामकृष्ण–भट्टपुत्रेण शङ्करभभट्टभ्रात्रा **कमलाकरभट्टेन दादूभट्ट** इति प्रसिद्धेन षोडशशतकीयेन (AD 1590-1660) कृता काचन तन्त्रवार्तिकव्याख्या **भावार्थाख्या** राणकखण्डनपरा अमुद्रिता बरोडामद्रासपुस्तकालयेषु लभ्यते। ऋषिपुत्र**नारायणभट्टप्रथ**मेन षोडश शतकीयेन (AD 1560-1656) कृता काचन **निबन्धना**ख्या तन्त्रवार्तिकव्याख्या मद्रासपुस्तकालये लभ्यते। सप्तदशशतकीयेन (AD 1610-1670) **कवीन्द्राचार्येण** कृता काचन तन्त्रवार्तिक**व्याख्या** अमुद्रितास्तीति कवीन्द्राचार्यसूच्यां (Gos. 17) दृश्यते। तर्कसंग्रहादिकर्त्रा **अन्नम्भट्टेन** कृता काचन तन्त्रवार्तिकस्य स्वतन्त्रव्याख्या **सुबोधिनी**नाम्नी मद्रास पुस्तकालयेषु लभ्यते या कल्कत्ता प्राच्यभाषाशोधपत्रिाकायः द्वितीयभागे (pp. 120-34) अंशतः प्रकाशिता च। **अव्ययानुभव**–मदादेवाश्रमाख्येन अपरा कृता काचन तन्त्रवार्तिकव्यारव्या **तन्त्रचिन्तामण्यपरा**भिधा अमुद्रिता बरोडापुस्तकालये लभ्यते। ब्ररोडापुस्तकालये सुचरितमिश्रेण कृता काचन तन्त्रवार्तिकव्याख्या **काशिकाख्या** अमुद्रिता दृश्यते, एवं पूना पुस्तकालयेऽपि काशिकायाः व्याख्या **तन्त्रकौमुदीनाम्नी** **गागाभट्टेन** कृतेति दृश्यते। परन्तु श्लोकवार्तिकव्याख्या स्यादिति संशयः। प्रकाशनावसरे निर्णयः कार्यः। **सरस्वतीगिरि**मुनिकृता **न्यायदीपिका**ख्या तन्त्रवार्तिकव्याख्या बरोडायाम्, श्रीपादभट्ट अथवा श्रीपादमिश्रेण काचन तन्त्रवार्ति **कटीका** उज्जैनसूच्यां दृश्यते। एवमन्याश्च **पार्थसारथिमि**श्रकृत–मण्डनमिश्रकृत–गो**पालभट्ट** कृताश्च

तन्त्रवार्तिकव्याख्यास्सन्तीति तत्र विमर्शका लिखन्ति। तासां प्राप्तिस्थानादिकं सम्पादनावसरे सम्पादयितुः कार्यमिति वक्तव्यम्।

**टुप्टीका**-शाबरभाष्यस्य तृतीयाध्याय पञ्चमपादप्रभृति द्वादशान्ताध्यायस्य परिमितपद्यं गच्छद्गच्छद् व्याख्यानं टुपटीकाभिधानम्, व्याख्यैषा टिप्पणीरूपा संग्रहरूपा चेति टुप्टीका-संग्रहटीकेति चाख्यायते। अनेनैव नाम्ना **बृहट्टीका-मध्यमटी**केति च शाबरभाष्यस्य कुमारिलभट्टकृते आस्तामिति केषाञ्चिदभिप्रायः। **टुप्टीकाव्याख्याः** - यज्ञात्मनः पुत्रेण शिष्येण शास्त्रदीपिकादिकर्त्रा पार्थसारथिमिश्रेण कृता काचन **तन्त्ररत्ना-भिधा** व्याख्या मुद्रिता। गोविन्ददीक्षितपुत्रेण तञ्जपुरनायकवंशजराज्ञां अमात्येन यज्ञनारायणदीक्षितानुजेन शिष्येण राजचूडामणि-नीलकण्ठदीक्षितयोः गुरुणा वेङ्कटेश्वरदीक्षितेन (AD 1600) षोडशशतकीयेन कृता काचन **वार्तिकाभरणाख्या**

टुप्टीकाव्याख्या अमुद्रिता सरस्वतीमहालयपुस्तकालये लभ्यते लालबहदूरशास्त्री विद्यापीठेन देहलीनगरे 1984 मुद्रिता च। वार्तिकाभरणस्यापि काचन व्याख्या **तन्त्रशिखामण्यभि**धा नीलकण्ठदीक्षितसामयिकेन रत्नखेटश्रीनिवासदीक्षितकामाक्ष्योः पुत्रेण सत्यमङ्गलग्रामवासिना विश्वामित्रगोत्रजेन अर्धनारीश्वरदीक्षितानुजेन शिष्येण च सप्तदशशतकवासिना (AD 1637) रुक्मिणीकल्याणादिकर्त्रा **राजचूडामणि**दीक्षितेन कृता अमुद्रिता विद्यते। एवं शुद्धानन्दशिष्येण **उत्तमश्लोकतीर्थेन** कृता काचन टुपटीकाव्याख्या **लघुन्यायसुधाख्या** अमुद्रिता तञ्जपुरपुस्तकालये लभ्यते। लालबहादूर शास्त्रिविद्यापीठेन देहलीनगरे 1984 मुद्रिता च।

देवेन्द्रसरस्वतीत्यपरनाम्ना नारायणामृतपूज्यपादशिष्येण **गोविन्दामृतमुनिना** कृता काचन **विवरणा**ख्या शाबर भाष्यव्याख्या प्रथमाध्याय द्वितीयपादादारब्धा अमुद्रिता मद्रासपुस्तकालयेषु लभ्यते। भाट्टमतानुयायिनीयं व्याख्या।

शाबरभाष्यव्याख्या-**बृहती**-कुमरिलभट्टेन समानं स्थानं वहता, मीमांसादर्शने प्रस्थानस्य नूतनस्य आविष्कर्त्ता, कुमरिलभट्टशिष्य इति सांप्रदायिकैः स्वीकृतेन यत्र तत्र कुमरिलसिद्धान्तविमर्शनपरेण विघ्नेश्वरावतारतया प्रसिद्धेन प्रभाकरमिश्रेण कृता शाबर भाष्यव्याख्या बृहतीनाम्नी मद्रासविश्वविद्यालये मुद्रिता। यस्यां जीवस्वरूपनिर्णय-अभिहितान्वयवाद-अभावस्वरूप-अर्थापत्ति निरूपणादिस्थलेषु स्वमतं भाट्टमतात् भिन्नमेव

प्रतिपादितं शाबरभाष्यव्याख्याप्रसंगात् येन गुरुमतमिति प्राभाकर प्रस्थानमिति च नवीनप्रस्थानस्य वीजावापः कृतः। बृहत्याः **निबन्धन** मिति नामान्तरम्। अनेनैव लध्वी-त्यपिनाम्ना शाबरभाष्यस्य व्याख्या कृता या न लभ्यते। प्रभाकरः सप्तमशतकीय (AD 650-720) इति विमर्शः। **बृहती**व्याख्याः - पञ्चिकापराभिधा ऋजुविमलाख्या बृहतीव्याख्या प्रभाकरस्य साक्षाच्छिष्येणेति प्रसिद्धेन शालिकनाथेन (AD 720) कृता रामूला मुद्रिता मद्रासनगरे। शाबरभाष्यस्य लघ्वीनाम्नी व्याख्यापि प्रभाकरमिश्रेण कृतेति ज्ञायते परन्तु अस्या मातृका तु न लभ्यते, परन्तु अस्या व्याख्यायास्सत्वेन मूलमातृका आसीदिति ऊह्यते। लध्व्या अस्याः विवरणमित्यपि नामान्तरम्। शालिकनाथेन कृता लध्वी-अथवा विवरणाख्या व्याख्या दीपशिखाख्यया व्याख्यया शालिकनाथेन व्याख्याता या मद्रास-अडयारपुस्तकालये लभ्यते। व्याख्या इयं शिथिला आद्यन्तरहिता चेति कारणात् व्याख्याद्वयसत्वे निश्चिततया किमपि वक्तुं न शक्यते, केवलं परम्परावचनमेव प्रमाणं भवति। एवं **शालिकनाथेन** कृतं **मीमांसासूत्रभाष्यपरिशिष्ट**मिति ग्रन्थोऽपि अमुद्रित अडयारपुस्तकालयेऽस्ति। **मद्रासविश्वविद्यालयप्रकाशितबृहती व्याख्यया** अंशतः मीमांसासूत्रभाष्यपरिशिष्टम, ऋजुविमलासहितं मुद्रितञ्च। प्रभाकरमतानुयायिना अर्थवादादिविचारकर्त्रा तिरुप्पार्कडल (क्षीरसमुद्र) वासिना शास्त्रदीपिकाव्याख्याम-यूखमालिकायाम्, (205-509), शास्त्रदीपिकाव्याख्यान्यायमञ्जर्याञ्च निर्दिष्टेन AD 1600 षोडशतकात् पूर्वतनेन **क्षीरसमुद्रवासि**ना कृता काचन भाष्यप्रदीपाख्या शाबर भाष्याव्याख्या अडयार पुस्तकालयेऽमुद्रिता विद्यते। प्राभाकरमतमप्यनुसरता गोविन्दामृतमुनिना कृता काचन **भाष्यविवरणा**ख्या व्याख्या अडयार पुस्तकालये लभ्यते। **ग्रन्थयोजनाख्या** काचन शावरभाष्यव्याख्या अज्ञातकर्तृनाम्नी तर्कपादस्य अडयारे लभ्यते।

**सङ्कर्षकाण्डम्**–जैमिनिकृतसूत्रणां द्वादशाध्यायी तन्त्रमिति तन्त्रकाण्डमिति, पश्चात्तनानि चतुरध्यायीसूत्राणि सङ्कर्षकाण्डमिति सङ्कर्ष इति व्यवहार:। शाबरभाष्ये संकर्षे वक्ष्यते (10-4-32) इत्यादिप्रमाणात् तन्त्रकाण्डस्य संकर्षकाण्डस्य च रचयिता जैमिनिरेवेति निर्णय:। धर्मविचारार्थं द्वादशलक्षणीं कृत्वा तत्रानुक्तान् कांश्तिन् न्यायान् आलक्ष्य तत्संग्रहार्थं द्वादशलक्षणीशेषं संकर्षकाण्डं कृतवान् जैमिनिरिति ज्ञायते। तत्र द्वादशलक्षण्यामिव न्याया: विषयव्यवस्थामाश्रित्य लक्षणभेदेन पादभेदेन च न प्रतिपाद्यन्ते, किन्तु संकीर्णतया यथासम्भवं प्रदर्श्यन्ते। अत एव संकर्षकाण्डमिति व्यह्रियते। अत अधिकरणेषु परस्परं सङ्गतिप्रदर्शनं च न विद्यते। क्वचित् देवताविचारेण अस्य देवताकाण्डमिति अभियुक्तानां व्यवहार: प्रवर्तते। सङ्कृष्यने कर्मकाण्डस्थमेव अवशिष्टं कर्म सङ्क्षिप्योच्यते इति **संकर्ष:** देवताकाण्डम् इति व्यहारोऽपि तत्र तत्र अद्वैतग्रन्थे दृश्यते। विशिष्टाद्वैतिभिरपि देवताकाण्डं कर्मकाण्डशेषतया परिगृहीतमिति स्वीक्रियते। तत्त्वरत्नाकरकर्तु: पराशरभट्टस्य वचनात् देवताकाण्डस्य कर्ता न जैमिनि: परन्तु काशकृत्स्न इति ज्ञायते। वृत्तिकारबोधायनस्तु जैमिनिरित्याह ''वृत्तिग्रन्थे तु जैमिन्युपर–चिततया षोडशाध्याय्युपात्ता। संकर्ष: काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्ति:' इति अधिकरणसारावल्यामपि जौमिनिकृतत्वमेव संकर्षकाण्डस्य स्वीकृतम्। **संकर्षकाण्डस्य व्याख्या:** – बौधायनश्रौतसूत्र-आश्वलायनगृहयसूत्राणां व्याख्यात्रा द्वादशलक्षण्या अपि अलब्धभाष्यकार इति प्रसिद्धेन देवस्वामिना (AD 1050) एकादशशतकात्

पूर्वतनेन कृतं **संकर्षकाण्डभाष्यं** मद्रास-विश्वविद्यालये मुद्रितं प्रकाशितञ्च। संकर्षकाण्डव्याख्या भाट्टदीपिका अथवा **भाट्टचन्द्रिका**पराख्या व्याख्या गम्भीर-रायदीक्षितपुत्रेण सखारामदीक्षितभ्रात्रा नृसिंहशिवदत्तशुक्लयोः शिष्येण भास्करविलासाख्य ग्रन्थकर्तुः जगन्नाथस्य गुरुणा संन्यासदीक्षास्वीकारानन्तरं **भासुरानन्द** इति प्रसिद्धेन शाक्तग्रन्थानां वरिवस्यारहस्यादिकर्त्रा **भास्कर रायदीक्षितेन** (AD 1750) अष्टादश-तकीयेन कृता वाराणस्यां मुद्रिता। अत्र उदाहृतवाक्यानि देवस्वामिभाष्ये दृश्यन्ते। द्वादशलक्षण्यां खण्डदेवकृतभाट्टदीपिकाशैलीमनुसृत्य भाट्टचन्द्रिकेयं रचितेति वक्तुं शक्यते। एवं **राजचूडा**मणिदीक्षितेन (AD 1580-1650) कृता काचन **न्यायमुक्ता-वल्याख्या** संकर्षकाण्डव्याख्या तदीये काव्यदर्पणे निर्दिष्टा। गोविन्दोपाध्यायेन कृता अन्या **व्याख्या** हेमाद्रिपरिशेषखण्डे निर्दिष्टा। इदं व्याख्यानद्वयमपीदानीं न लभ्यते।

इतः परं अधिकरणग्रन्थाः सूत्रवृत्तिग्रन्थाः प्रकरणग्रन्थाः वादप्रधानाः प्रकरणग्रन्थाश्चेति मीमांसाग्रन्थाः वर्णमालाक्रमेण विव्रीयन्ते। यद्यपि आधुनिकैः पण्डितैः विमर्शकैश्च संस्कृतेतरभाषासु विमर्शप्रधानाः व्याख्याप्रधानाः वृत्तिरूपाश्च बहवो ग्रन्थाः प्रकाशिता दृश्यन्ते तथापि तैरस्माकं नातीवोपयोग इति संस्कृतभाषामया मूलग्रन्था एव सर्वेऽत्र निर्दिश्यन्ते।

१. **अङ्गत्वनिरुक्तिः** – षट्प्रकरणात्मकः नव्यन्यायभाषाशैलीनिबद्धोऽयं ग्रन्थः कुमारिलमतरीत्या अङ्गत्वलक्षणं परिष्करोति। भाट्टदीपिकां क्वचित् खण्डयति अनेकत्र अनुसरति च। ग्रन्थोऽयं सप्तदशशतकीयेन (AD 1600) **मुरारिणा** कृतः। आनन्दाश्रमे मुद्रितश्च।

२. **अतिदेशलक्षणविचारः** – यःपदार्थो यादृशोपकारकद्वारा यदङ्गत्वेनावधारित-स्तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारकद्वारैव अन्याङ्गताबोधकं प्रमाणम-

**तिदेश** इति लक्षणं शास्त्रदीपिका भाट्टदीपिकाद्युक्तयुक्तिविचारप्रदर्शनपूर्वकं वर्णयति। ग्रन्योऽयं अप्पय्य-दीक्षितवंशजेन नारायणदीक्षितपुत्रेण नीलकण्ठदीक्षितानुजेन दुरूहशिक्षा-तन्त्रसिद्धान्तदीपिकादिकर्त्रा **तृतीयाप्य्यप्यदीक्षितेन** सप्तदशशतकीयेन कृत अमुद्रितश्च।

३. **अधिकरणकौमुदी**-अधिकरणनिरूपणमित्यपरनामा अयं ग्रन्थः'' अधिकरण-शब्दार्थं अधिकृत्य क्रियतेऽर्थविचारो यस्मिन् तदधिकरणं-मीमांसासिद्धान्त इति व्युत्पत्तिप्रदर्शनपूर्वकं मीमांसासिद्धान्तकौमुदीत्यपरनाम आत्मनो बोधयति। अज्ञातकालेन **रामकृष्णभट्टे**न कृतोऽयं ग्रन्थः। पूर्वमीमांसासूत्रभाष्यगतान् अर्थान् वर्णयति। ग्रन्थोऽयं चौखम्बायां मुद्रितश्च।

४. **अधिकरणकौमुदी**-मीमांसासूत्रभाष्याधिकरणार्थसंग्राहकोऽयं ग्रन्थः सप्तकौमुदीकार इति प्रसिद्धेन अधिकरणमालाकारगोविन्दठक्कुरपुत्रेण सोमभट्टशिष्येण मिथिलावासिना मल्लदेवनरनारायणभूपतिना समादृतेन षोडश शतक (AD 1490-1560) वासिना **देवनाथठक्कुरेण** कृत हरिदाससंस्कृतमालायां मुद्रितः।

५. **अधिकरणमाला**-अधिकरणार्थसंग्राहकः, विचारपरश्चायं ग्रन्थः महाराष्ट्रविप्रेण वेंकटेशसूरिपुत्रेण कोल्हापुरवासिना **रामचन्द्रेण** कृतः अमुद्रित मद्रास तञ्जावूर पुस्तकालयेषु लभ्यते।

६. **अधिकरणमाला**-अधिकरणार्थसंग्राहकोऽयं ग्रन्थः मिथिलावासिना वत्सगोत्रजेन देवनाथठक्कुरादिपुत्राष्टकपित्रा भवानन्दराजेन समादृतेन पंचदशशतकीयेन (AD 1500) **देवनाथठक्कु**रेण कृत अमुद्रित राजेन्द्रलालासूच्यां दृश्यते।

७. **अधिकरणश्लोकार्थदीपिका**-अधिकरणश्लोकः, अधिकरणार्थसंग्रहः, इत्यपरनामायं ग्रन्थः दीपिकेति व्याख्याया नाम। सव्याख्योऽयं ग्रन्थः तर्कपादीयाधिकरण-विचारपरः शालिकनाथं भवनाथञ्च प्रमाणयन् प्राभाकरमतानुयायी **उदयपूज्यपाद**कृत अमुद्रितः मद्रास पुस्तकालयेऽस्ति।

८. **अधिकरणादर्शः** -सौत्रक्रमं त्यक्त्वा आधानाहुतियज्ञसम्बद्धानां अधिकरणानां अर्थान् विशिष्य प्रतिपादयन्, अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्य-पशुसोमाख्यान्

पञ्चविधयज्ञान् च वर्णयन् अयं ग्रन्थः अमुद्रितः परिच्छेदद्वयान्तं अडयरपुस्तकालये लभ्यते। अनन्तदेवद्वितीयस्य पौत्रः बालदेवस्य पुत्रः मीमंसान्यायप्रकाशकर्तृ-आपदेव वंशजः **बाबादेवः** सप्तदशशतकवासी कर्ता (AD 1650) इति ज्ञायते।

९. **अध्वरमीमांसाकुतूहलवृत्तिः** -भाट्टसम्प्रदयानुसारी मीमांसासूत्राणां भाष्य-वार्तिकोक्तानां अर्थानां विचारपरः स्वतन्त्रव्याख्यारूपः वृत्तिग्रन्थोऽयं श्रीरङ्गस्य वाणीविला-समुद्रणालये चौखाम्बायां च मुद्रितः। अस्य कर्ता महादेवबाजपेयी-अन्नपूर्णाम्बयोः पुत्रः भ्रातुः विश्वेश्वरबाजपेयिनः प्राप्तविद्यः वैयाकरणसिद्धान्तकौमुदीव्याख्याबालमनोरमाकारः अष्टादशशतकीयः (AD 1750) **वासुदेवदीक्षितः**।

१०. **अमृतबिन्दुः**- नियोगस्य प्राधान्यं प्रकरणपञ्चिका-विवरण-निबन्धनादि-ग्रन्थप्रमाणपुरस्सरं साधयन्नयं प्राभाकरमतानुयायी प्रकरणग्रन्थः अमुद्रित अडयार-पुस्तकालये लभ्यते। जयन्तभट्टभ्राता गुणरतिपुत्रः मिथिलावासी नयविवेकदीपिकायां वरदराजेन मुरारिमिश्रद्वितीयेन च निर्दिष्टोऽयं प्रकरणग्रन्थकर्ता न्यायरत्नाकरस्यापि कर्ता **चन्द्राचार्यः** शालिकनाथसामायिकः नवमशतकीयः (AD 900) स्यादिति सम्भाव्यते।

११. **अरुणाधिकरणसरणिविवरणी**-अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीति वाक्ये अरुणापदस्य गुणमात्रवाचित्वं न वेति मीमांसासिद्धान्तं श्रीभाष्यकारीयानन्दमयाधिकरणवाक्येन प्रमाणयन्नयं नव्यन्यायशैलीबद्धः परिष्कारप्रधानोऽयं प्रकरणग्रन्थः अमुद्रितः अरुणाधिकरणमञ्जरी अरुणाधिकरणशिक्षणा-परनामा मद्रासपुस्तकालयेषु लभ्यते। अस्य कर्ता श्रीनिवासताताचार्यपुत्रः षडमर्षणगोत्रजः श्रीनिवासदीक्षितान्नयाचार्ययोः शिष्यः **श्रीनिवासाचार्यः** अष्टादशशतकीयः (AD 1770) इति भाति।

१२. **अरुणाधिकरणभङ्गः** -तन्त्रविलासान्तर्गतोऽयं ग्रन्थः अरुणया एकहा यन्या पिङ्गाक्ष्या सोमं क्रीणाति इति वाक्ये अमूर्तस्य करणत्वासम्भवात् क्रियासम्बन्धा भावमापाद्य प्राकरणिकद्रव्यसम्बन्धमापाद्य मीमांसादर्शनोक्तं सिद्धान्तं परिशीलयति।

भाट्टसम्प्रदायपरामर्शकोऽयं ग्रन्थः अमुद्रित अडयारतञ्जपुरपुस्तकालये लभ्यते। अस्य रचयिता तिम्मयार्यपुत्रः श्रीनिवासोपाध्यायशिष्यः **लक्ष्मणपण्डितः**।

१३. **अर्थवादादिविचारः** -अर्थवादस्मृतिप्रामाण्यनामधेयजातिशक्तिवादान् क्रोडपत्रशैल्यां परिशीलयन्नयं ग्रन्थः अमुद्रित अडयारपुस्तकालये भागशः भारतीविद्या भवनपत्रिकायाञ्च मुद्रितः प्रकाशितश्च। अस्य कर्ता **क्षीरसमुद्रवासी**।

१४. **अर्थसङ्ग्रहः** -इदानीं अध्ययनाध्यापनक्रमे परिचितोऽयं ग्रन्थः मीमांसादर्शन-गतसिद्धान्तान् विधिभेदान् श्रुतिलिङ्गादिशास्त्रीयप्रमाणानि भावनाः, अपौरुषेयत्ववादञ्च विशदयन् मीमांसादर्शनजिज्ञासूनां परमोपकारकः व्युत्पादकश्च राजते। मुद्रितोऽय-ग्रन्थः। अस्य रचयिता न्यायवैशेषिकमीमांसापण्डितः मुद्गलभट्टपुत्रः लौगाक्षिरित्युपनामा दक्षिणदेशीयः सप्तदशशतकीयः तर्ककौमुदीकर्ता **भास्करभट्ट** इति ज्ञायते। अधिक मेनमधिकृत्य मदीयायां दर्शनमञ्जर्यां द्रष्टव्यम्॥

१५. अर्थसङ्ग्रहव्याख्या-**अमला** ताराचरणतर्करत्नपुत्रेण शिवचन्द्रसार्वभौमशिष्येण एकोनविंशतिशतकीयेन (AD 1900) **प्रमथनाथतर्क** भूषणेन कृतेयं व्याख्या कलिकत्तानगरे मुद्रिता।

१६. अर्थसंग्रहव्याख्या-**अर्थकौमुदी**-कौमुदीत्यपरनाम्नीयं व्याख्या अतीव जिज्ञसूनामुपकारिणी व्याख्याव्याजात् उद्ग्रन्थस्थसिद्धान्तानां प्रतिपादयन्ती मूलार्थ प्रतिपादने अनितरसाधारणीं शैलीमाश्रयन्ती पश्चात्तनानां व्याख्यानां आधारशिला भूत्वा व्युत्पदिका दृश्यते। ग्रन्थोऽयं बहुत्र मुद्रितः, विशेषतश्च अध्यापनसमूहस्य उपकारको भवति। अस्याःकर्ता दक्षिणदेशीयः गोपालेन्द्रसरस्वतीप्रशिष्यः सदाशिवेन्द्रसरस्वतीशिष्यः **रामेश्वरशिवयोगी** अष्टादशशतकीयः (AD 1800)।

१७. अर्थसंग्रहव्याख्या-**अर्थप्रतिपादिका**-व्याख्येयं नवद्वीपवासिना कमला-केशवयोः पुत्रेण कृष्णनाथपञ्चानेन (AD 1898) काले कलकत्तायां प्रकाशिता।

१८. अर्थसंग्रहव्याख्या-**अर्थालोकः** -मन्दाधिकारिणां व्युत्पत्तिमापादयन्ती सुलभसंस्कृतभाषामयी मूलार्थावबोधने बहु उपकरोतीयं व्याख्या। अस्य रचयिता

साहित्यमीमांसाशास्त्रेषु पण्डितोत्तमः चिन्नस्वामिशास्त्रिशिष्यः गरुप्रसादादवाप्तगौरवः कृष्णनाथलक्ष्म्योः पुत्रः काञ्चीमण्डलान्तर्गतपैलाशूरग्रामाभिजनः बहूनां मीमांसा-ग्रन्थानां सम्पादयिता पाण्डित्यसौहार्दसौभाग्यसम्पत्तिपूर्णः वाराणसीवासी विंशतिशतकीयः (AD 1908) **पट्टाभिरामशास्त्री**।

१९. अर्थसंग्रहव्याख्या-**टीका** अर्थसंग्रहटीकाभिधानोऽयं ग्रन्थः बहुग्रन्थसम्पादयित्रा व्याख्यात्रा कलकत्तावासिना **जीवानन्दविद्या**सागरेण एकोनविंशतिशतकीयेन कृतः कलकत्तायां मुद्रितश्च।

२०. अर्थसंग्रहव्याख्या-**तन्त्रप्रकाशिका**। व्याख्याव्याजेन मीमांसासिद्धान्तान् प्रतिपादनपरेयं व्याख्या कुप्पुस्वामिशास्त्रिशिष्येण तिरूपतिकलशालाप्राध्यापकेन मीमांसा-पण्डितेन दक्षिणदेशवासिना **ताताचार्यशि**रोमणिना कृता उद्यानपत्रिकायां प्रकाशिता।

२१. **अर्पणमीमांसा**-भगवद्गीतोक्तस्य "तत्कुरुष्व मदर्पणम्" वाक्यस्य मीमांसा-सिद्धान्तप्रतिपादनसरण्या अर्थान् अन्योक्तांश्च परिशीलयन्नयं ग्रन्थ अमुद्रित अडयार-पुस्तकालये लभ्यते। अस्य कर्ता पूर्वोक्त **अधिकरणादर्श**कर्ता **बाबादेवः**।

**उपक्रमपराक्रमः** -सर्वेषां वैदिकवाक्यानां तत्र तत्रार्थे तात्पर्यनिर्णयाय उपयोगीनि लिङ्गानि शब्दनिष्टं अर्थनिष्ठञ्चेति द्वेधा विभज्यन्ते। तयोः उपक्रमोपसंहारौ अभ्यासः अर्थवादश्चेति त्रयं शब्दनिष्ठं लिङ्गमिति, अपूर्वफलोपपत्तयः अर्थनिष्ठं लिङ्गमित्युच्यते। तत्रोपक्रमोपसंहारयोरेकार्थनिष्टत्वस्यैकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वम्, एकस्य वाक्यस्य अनेकत्र तात्पर्यनिर्णये सति संशयोद्‌बोधात् अनेकत्र तात्पर्यं त्यक्त्वा यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं स एव तात्पर्यविषय इति निर्णयः इति पूर्वोत्तरमीमांसा-दर्शनसिद्धान्तः। तत्रोपक्रमोपसंहारयोः विरोधे उपक्रमस्यैव प्राबल्यं मीमांससूत्राधिकरणानि वहूनि उदाहृत्य साधयत्ययं ग्रन्थः। अन्यैर्मतान्तरवादिभिः उपसंहारस्य प्राबल्यमुक्तं खण्डयतीव दृश्यते। उपक्रमोपसंहारबलाबलव्यत्ययो यवनगुरूपदिष्टशौचमुख-प्रक्षालनपौर्वापर्यव्यत्यासवत् उपेक्षणीय इति च वदति। द्वैतमताचार्येण विजयीन्द्रभिक्षुणा कृतं उपसंहारविजयं खण्डयतीव भाति। मुद्रितोऽयं ग्रन्थः वाराणस्यां अन्यत्र च। अस्य

रचयिता चतुरधिकशतग्रन्थप्रणेता विधिरसायनादिकर्ता भारद्वाजगोत्रजः रङ्गराजाध्वरिपुत्रः प्रसिद्धः AD 1520-1593 कालवासी **अप्पय्यदीक्षित**प्रथमः। एनधिकृत्याधिकं मदीयात् अद्वैतवेदान्तसाहित्यात् ज्ञातुं शक्यम्।

२२. **उपसंहारविजयः** –उपक्रमोपसंहारयोः उपसंहारस्यैव प्राबल्यं वर्णयन्नयं ग्रन्थः उपक्रमपराक्रमं खण्डयतीव भाति। ग्रन्थकर्तायं सुरेन्द्रतीर्थशिष्यः अप्पय्यदीक्षित-सामयिकः विजयीन्द्रतीर्थ इत्यपरनामा **विजयीन्द्रभिक्षु**र्द्वैतमतावलम्बी षोडशशतकीयः (AD 1574) ।

२३. **कल्पकलिका**– मीमांसासूत्रशाबरभाष्यतर्कपादस्य व्याख्यात्मकोऽयं ग्रन्थः हरिहरकृपालुद्विवेदिना कल्कत्तायां मुद्रितः।

२४. **कौमारिलमतोपन्यासः** –ग्रन्थोऽयं श्लोकवार्तिकतन्त्रवार्तिकादिग्रन्थस्थान् भाट्टसम्मतान् सिद्धान्तान् सुविशदं संक्षिप्य प्रतिपादयन् जिज्ञासूनां उपकरोति। ग्रन्थोऽयं मानमेयोदयस्य मेयभागलेखकेन सुब्रह्मण्यशिष्येण **नारायणपण्डितेन** सप्तदशशतकीयेन (AD 1700) कृतः अनन्तशयने मुद्रितश्च।

२५. **चित्रपटः** –मीमांसाधिकरणार्थान् संक्षेपतः श्लोकरूपेण प्रतिपादयन्नयं ग्रन्थः अष्टमाध्यायप्रथमपादपर्यन्तं जर्नलआफओरियण्टलरिसर्चपत्रिकायां मद्रासनगरे मुद्रितः। अस्य रचयिता प्रसिद्धः **अप्पय्यदीक्षित**प्रथमः। अस्य मीमांसासिद्धान्तार्था पूर्वमीमांसाकारिका इति नामान्तरम्।

२६. **जैमिनीयन्यायमाला**–मीमांसाभाष्यटीकादीनां बहुत्वात् दुरवगाहत्वात् अतिविस्तृतत्वाच्च मीमांसा सागरसमा बभूव। अनेन न्यायमालग्रन्थेन बहुत्वदुरवगाह-त्वरहितेन बालानां क्रीडार्थं निर्मितया नाभिदध्न्या पुष्करिण्या समा भूत्वा जिज्ञासूनां सुलभावगाहा भवति। प्रत्यध्यायं प्रतिपादं प्रत्यधिकरणञ्च भाट्ट-प्राभाकरसम्प्रदायगतान् अर्थान् संक्षिपन् मीमांसादर्शने उत्तमं स्थानं वहति। मुद्रितोऽयं ग्रन्थ आनन्दाश्रमे। अस्य रचयिता विजयनगरभूपतेः बुक्कण-बुक्कस्य अमात्यः मायणश्रीमत्योः पुत्रः सायण-भोगनाथयोः भ्राता त्रयोदश शतकीयः (AD 1297-1388) **माधवाचार्यः**।

२७. **जैमिनीयन्यायमालाविस्तर:** –पद्यबद्धाया: न्यायमालाया: व्याख्या गद्यशैल्यां रचिता, तस्यैव न्यायमालाविस्तर इति नाम। मुद्रितोऽयंग्रन्थ आनन्दाश्रमे। "तां **प्रशस्य** समामध्ये वीरश्रीबुक्कभूपति:। कुरु विस्तरमस्यास्त्वमिति माधवमादिशत्"। ततश्च मूलकर्ता **माधव** एवास्या: व्याख्याया अपि कर्ता इति ज्ञायते। परन्तु सरस्वतीमहालय-स्थादर्शपुस्तके न्यायमालाविस्तरकर्ता **भट्टमाधव:** –**माधवभट्ट** इति त्रिकाण्डमीमांसा-मण्डन: प्रतिवसन्तसोमयाजीति विशेषणैर्विशेषित:। ततश्च न्याय सुधाकर्तुस्सोमेश्वरस्य पिता माधवभट्टो वा विस्तरस्य कर्ता इति संशयोत्पत्तिस्स्वाभाविकी।

२८. **तत्त्वबिन्दु:** –दर्शनान्तरसिद्धान्तपरिशीलनपरोऽयं ग्रन्थ: सत्कार्यवाद-असत्कार्यवादख्यातिवादक्षणभङ्गवादादीन् परिशीलयन् स्फोटसिद्धान्तम् प्राभाकर-सिद्धान्तम्, विशिष्याभिहितान्वयवादम्, च परिशीलयन् शाब्दबोधपदार्थवाक्यार्थविचारं मीमांसकरीत्या विशदयति। मुद्रितोऽयं ग्रन्थ: अणामलैविश्वविद्यालये। अस्य कर्ता षड्दर्शिनीटीकाकार: सर्वतन्त्रस्वतन्त्र: भामतीत्यादिग्रन्थनिर्माता त्रिलोचनगुरूशिष्य: नवमशतकीय (AD 900) **वाचस्पतिमिश्र:**। एनमधिकृत्याधिकं मदीयेऽद्वैत वेदान्तसाहित्येतिहासे, दर्शनमञ्जर्या: प्रथमभागे च द्रष्टव्यम्।

२९. **तत्त्वबिन्दुव्याख्या–तत्त्वविभावना**। व्याख्येयं मूलग्रन्थस्य प्रौढस्य भावावबोधनेऽतीवोपकरोति। मुद्रितेयं व्याख्या समूला अण्णामलैविश्वविद्यालये। अस्या: कर्ता केरलीय: ऋषिगोपालिकापुत्र: पञ्चदशशतकीय: (AD 1500) **द्वितीय परमेश्वर:** ऋषिपुत्रपरमेश्वर इति प्रसिद्धश्च।

३०. **तन्त्रदर्पणम्**–(अण्णामणीयम्) शाबरभाष्यवार्तिकशास्त्रदीपिकाद्युक्तान् सूत्रार्थान् वर्णयन्नयं स्वतन्त्र: सूत्रवृत्तिग्रन्थ अमुद्रित अडयारतञ्जपुरमैसूरपुस्तकालयेषु लभ्यते। अस्य रचयिता प्रयागक्षेत्रीय रामबुधपुत्र: जन्मना दक्षिणदेशीय: तञ्जपुरीसमीपस्थ पेरलग्रामाभिजन: **अण्णाशास्त्री**ति ज्ञायते।

३१. **तन्त्रनीतिलहरी**–भाट्टप्राभाकरमतानुयायिनीयं सूत्रवृत्ति:। वार्तिकं शास्त्रदीपिकाम् मीमांसानयविवेकञ्चानुसृत्य जैमिनिसूत्राणां वृत्तिं करोति। अमुद्रितोऽयं ग्रन्थ:

अडयारपुस्तकालये लभ्यते। अस्य कर्ता तिरूमलैनल्लान् चक्रवर्तिवंशजः श्रीवत्सगोत्रजः रधुनाथाध्वरिपुत्रः वेदान्ताचार्यस्यानुजः पितुः ज्येष्ठभ्रातुश्च शिष्यः एकोनविंशतिशतकीयः (AD 1850) दक्षिणदेशीयकोटाण्डिपट्टिग्रामजः **रामानुजाचार्यः** रामानुजदासापरनामा।

३२. **तन्त्ररहस्यम्**-प्राभाकरसिद्धान्तानुयायी ग्रन्थोऽयं प्राभाकरसिद्धान्तजिज्ञासूनां सुलभतया प्रमाणप्रमेयादिविचारान् प्राभाकरमौलिकसिद्धान्तान् तत्तत्प्रमाणप्रदर्शन-पूर्वकं विशदयत् अत्युत्तमप्रकरणग्रन्थयोग्यतां लभते। अस्य कर्ता धर्मपुरीग्रामाभिजनः गोदावरीतीरवासी केरलीयस्य प्राभाकरसिद्धान्तपण्डितस्य जातवेदोयज्वनः शिष्यः वेङ्कटाद्रिगुरुशिष्यश्च पञ्चदशषोडशशतकमध्यवासी (AD 1500-1600) नायकरत्नकर्ता **रामानुजाचार्यः**। मुद्रितोऽयं ग्रन्थः गैक्वार्ड ओरियण्डसीरीज २४ बरोडायाम्।

३३. **तन्त्रविलासः** -अधिकरणार्थसंग्राहकोऽयं ग्रन्थः गुणकामाधिकरणा-दिषण्णामधिकरणानां पूर्वाचार्योक्तमर्थं परिशीलयति, अमुद्रितश्च अडयारमद्रासमैसूर पुरतकालयेषु लभ्यते। कर्ता चास्य ग्रान्थस्य तिम्मयार्यगौर्यम्बयोः पुत्रः श्रीनिवासोपाध्याय शिष्यः **लक्ष्मणपण्डितः**। अय्यण्णाचार्यं निर्दिशन्नयं सामयिको वा पश्चात्तनो वा (AD 1700-1800) भवति।

३४. **तन्त्रशिखामणिः** -सूत्राणां अर्थं भाष्यवार्तिकानुसारिणं वर्णयन् वेङ्कटेश्वरदीक्षित-कृतवार्तिकाभरणाध्येतृणां सुलभज्ञानाय च रचितोऽयं वृत्तिग्रन्थः अमुद्रितः सरस्वतीमहालये लभ्यते। अस्य कर्ता रत्नखेटश्रीनिवासदीक्षितकामाक्ष्योः पुत्रः अर्धनारीश्वरदीक्षितशिष्यः काव्यदर्पणरुक्मिणीकल्याणकर्पूरवर्तिकादिकर्ता **राजचूडामणि** दीक्षितस्सप्तदशशतकीयः (AD 1637)।

३५. **तन्त्रसिद्धान्तदीपिका**-प्रथमाप्यय्यदीक्षितग्रन्थोपरि उत्पन्नानां दूषणानां खण्डनपरोऽयं ग्रन्थ अमुद्रित सरस्वतीमहालये लभ्यते। अस्य कर्ता प्रसिद्धाप्रथमाप्पय्य-दीक्षितवंशजः अलङ्कारतिलकनिर्मातुरप्पय्यदीक्षितद्वितीयस्य भूमीदेव्याश्च पुत्रः आच्चान्दीक्षितप्रपौत्रः प्रसिद्धनीलकण्ठदीक्षितस्य अनुजः चिन्नप्पय्य इति प्रसिद्धः दुरूहशिक्षाकर्ता **तृतीयाप्पय्यदीक्षित** स्सप्तदशशतकीयः (AD 1600)

३६. **तन्त्रसिद्धान्तरत्नावली**-दक्षिणदेशीयेन वाराणसीहिन्दुविश्वविद्यालय-प्राध्यापकेन मीमांसादर्शनतत्त्वज्ञेन रघुनाथ-अन्नपूर्णाम्बयोः पुत्रेण वाधूलगोत्रजेन चिन्नस्वामिशास्त्रीत्यपरनामधेयेन **वेङ्कटेश्वरशास्त्रिणा** (AD 1945) काले रचितोऽयं तन्त्रसिद्धान्तरत्नावल्याख्यः ग्रन्थः मीमांसादर्शनप्रविविक्षूणां महोपकारकः मीमांसादर्शनगत सर्वसिद्धान्तानां सुलभशैल्या प्रतिपादकः अत्युत्तमः प्रकरणग्रन्थः मुद्रितः प्रकाशितश्च।

३७. **तन्त्रसिद्धान्तसंग्रहः**-मीमांसासूत्रवृत्तिग्रन्थोऽयं भाट्टानुयायी सप्तमाष्टमाध्याययोः परं अमुद्रित मद्रास पुस्तकालये लभ्यते। श्रीनिवास-अलमेलुमङ्गयोः पुत्रःशास्त्रदीपिका व्यख्यातृ सूर्यनरायणपौत्रः **गरुडध्वजः**।

३८. **तन्त्र सिद्धान्त संग्रहः** - महिषशतककर्तुः प्रथमवाञ्छेश्वरस्य अथवा महिष-शतक-व्यख्यातुः प्रथमवाञ्छेश्वरप्रपौत्रस्य **वाञ्छेश्वरस्य** (AD 1816) **शिष्येण** रधुनाथ-कृष्णशिष्येण कृतोऽयम् अमुद्रितः सरस्वतीमहलये लभ्यते।

३९. **त्रिपादी नीति नयनम्** प्रथमाध्यायस्य द्वितीय तृतीय चतुर्थपादाधिकरणानां विश्लेषणात्मकोऽयं ग्रन्थः **मुरारिमिश्र**द्वितीयेन (AD 1150-1220) रचितः। केचन भागाः जर्नल आफ ओरियण्टल पत्रिकायाः द्वितीये चतुर्थे च भागे प्रकाशिताः। अन्ये च केचन भागाः अनालस् आफ बन्दरगार रिसर्चपत्रिकायाः दशमे प्रकाशिताः। सम्पूर्णस्तु न लभ्यते। एवं **एकादशाध्ययाधिकरणविचारपरः** ग्रन्थः तन्त्राबापौ अधिवृत्य विमृशति। एनमधिकृत्यस्मामिः पूर्वं वक्तव्यमधिकं वर्णितम्।

४०. **दुरूहशिक्षा**-प्रथमप्पय्यदीक्षितेन कृते विधिरसायने विधिदर्पण-शास्त्रदीपिकाव्याख्यामयूखमालिका-मीमांसकौस्तुभ भाट्टदीपिकादिभिः उद्भावितानां दूषणानां खण्डनं कृत्वा केषाञ्चित् समाधानं दत्वा विधिरसायनं मण्डयत्ययं ग्रन्थः। अस्य कर्ता पूर्वोक्तः तन्त्रसिद्धान्तदीपिकाकार **तृतीयाप्पय्य**दीक्षितः।

४१. **धर्ममीमांसा परिभाषा** - राजेन्द्रलालसूच्यां दृश्यते। अस्य कर्ता रङ्ग राजदीक्षितपुत्र अप्पय्यदीक्षित इति परं ज्ञायते।

४२. **धर्ममीमांसासंग्रहः** – तन्त्रचूडामणिरित्यपरनामा ग्रन्थोऽयं प्रथमध्यायाधिकरणार्थसंग्राहकः। अमुद्रितोऽयं अनन्तशयनराजकीय पुस्तकालये गङ्गानाथसूच्यां च दृश्यते। कर्ता चास्य रामाचार्यपुत्रः **कृष्णदेवः**।

४३. **नयतत्वसंग्रहः** – प्राभाकरमतानुयायी सूत्रव्याख्यारूपोऽयं ग्रन्थः तर्कपादान्तः वेदप्रामाणधिकरणपर्यन्तं प्रत्यक्ष प्रमाण निरलम्बनवाद अनुमान विषयान् परिशीलयन्नमुद्रित अनन्तशयनअडयारमद्रास पुस्तकालयेषु लभ्यते। अस्य रचयिता नीतितत्त्वाविर्भावव्याख्यायां परमेश्वर द्वितीयेन निर्दिष्टः (AD 1500-1600) **भट्टविष्णुः** तस्मात् पूर्वतनः। यद्ययं भट्टविष्णुः पञ्चपादिकऋजुविदरणकर्ता **विष्णु भट्टः** स्यात् तर्हि AD 1200-1300 अस्य कलः। अधिकं मदीये **अद्वैत वेदान्तसाहित्येतिहासे** द्रष्टव्यम्।

४४. **नयविवेकः** – वाचस्पतिमिश्रश्रीकरउम्वेकशालिकनाथमहोदधि विवरण-निबन्धनदीपशिखादीन् प्राचीनान् ग्रन्थान् निर्दिशन्नयं प्राभाकरप्रस्थानानुयायी सूत्र गतार्थसंग्राहकः स्वतन्त्रो वृत्तिग्रन्थः। तर्कपादः परं मद्रासविश्वविद्यालयमालायां मुद्रितः। अपरभागाः अनाद्यनन्ताः बहुत्रोपलभ्यन्ते। शाब्दनिर्णयदीपिकायां आनन्दबोधेन (AD 1200) निर्दिष्टोऽयं ग्रन्थकर्ता भवनाथः तत पूर्वतन (AD 1100) इति ज्ञायते।

४५. **नयविवेकव्याख्या** – विवेकतत्त्वम्। नयविवेकशैलीं सुलभतया ज्ञात्वा मूलार्थसम्पादने व्याख्येयं बहु उपकरोति। तर्कपादान्तं मद्रासविश्वविद्यालयमालायां प्रकाशितस्यास्यं ग्रन्थस्य कर्ता द्वितीयपरमश्वरेण तत्त्वविभावनायां निर्दिष्टः चतुर्दश-शतकवासी AD 1400 **रविदेव** इति परं वक्तुं शक्यते।

४६. **नयविवेकव्याख्या** – नयविवेकदीपिका अस्याः व्याख्याया आशयानुरोधेन प्राभाकरस्य प्रथमा कृतिः लघ्वी (विवरणम्) अनन्तरं बृहतीं (निबन्धनम्) चेति ज्ञायते। श्रीकरम् शालिकनाथम् प्रमाणयन्तीयं व्याख्या अमुद्रिता बहुत्र विशिष्य सरस्वतीमहालय अनन्तशयन वाराणसीसरस्वतीभवन अडयार मद्रासपुस्तकालयेषु लभ्यते अस्य कर्ता प्रणता र्तिहराचार्यप्रपौत्रः देवराजपौत्रः रङ्गराजाध्वरिपुत्रः किडाम्बी कुलजः आत्रेयगोत्रजः

सुदर्शनगुरोश्शिष्य: वैद्ये ज्योतिषे व्याकरणे च निष्पन्न: प्राभाकरमतविशेषज्ञ: **वरदराज:** षोडश शतकीय: (AD 1600) स्यादिति विभाव्यते।

४७. **नयविवेकदीपिका**-सौन्दर्यलहरीव्याख्यातु: लक्ष्मीधरस्य पित्रा **विश्वनाथभट्टारके**न कृतेयं व्याख्या अमुद्रिता R.A. सूच्यां सौन्दर्यलहरीव्याख्या-लक्ष्मीधराया: अन्तिमपुष्पिकायाञ्च निर्दिष्टा।

४८. **नयविवेकभूषणम्**-विश्वनाथभट्टारकस्य पुत्रेण सौन्दर्यलहरीव्याख्यात्रा लोल्लकुल**लक्ष्मीधरेण** कृतेयं नयविवेकव्याख्या R.A. शास्त्रि सूच्यां सौन्दर्य लहरीव्याख्याल**क्ष्मीधरा**या: ग्रन्थान्तपुष्पिकायाञ्च दृश्यते।

४९. **नयविवेकालङ्कार:** -माधवयोगिदासशिष्येण **दामोदरशास्त्रिणा** कृतेयं व्याख्या वाराणसीसस्वतीभवनपुस्तकालये मैसूर पुस्तकालये च लभ्यते।

५०. **नयविवेकव्याख्या**-पञ्चिका शङ्करदीपिकेत्यपरनामायं ग्रन्थ: यज्ञ पण्डितपुत्रेण **शङ्कर**पण्डितेन कृता मैसूर-सरस्वतीभवनवाराणसीशृंगगिरिपुस्तकालयेषु वर्तते। अन्या काचन **नयविवेकव्याख्या** कर्तृनामधेयरहिता अनन्तशयनराजकीयपुस्तकालयेषु लभ्यते।

५१. **नित्यकाम्यविवेक:** - प्राभाकरभाट्टमतरीत्या नित्यकाम्यकर्मणां विश्लेषण-परोऽयं ग्रन्थ: अमुद्रित: अडयार पुस्तकालये लभ्यते। अस्य रचयिता **वेङ्कटाराम:**॥

५२. **नीतितत्त्वाविर्भाव:** -भाट्टमतानुयायी प्रकरणग्रन्थोऽयं श्लोकवार्तिक तन्त्रवार्तिकगतान् अर्थान् प्रयुक्तिनिर्णयाद्यै: भेदाभेदनिरसान्तैरेकविंशतिप्रकरणै: अध्ययनवादादिभि: वेदापौरुषेयत्ववादान्तै: चतुश्चतुत्वारिंशद्वादैश्च संगृह्य वर्णयति। मुद्रितोऽयं ग्रन्थ: निरुवनन्तपुरग्रन्थमालायाम्। प्रबन्धकर्ता चास्य श्रीधरपुत्र: केरलीय: द्वितीयऋषिपुत्रपरमेश्वरेण व्याख्यात: AD 1200-1300 चतुर्दशशतकवासी **चिदानन्दपण्डित:**।

५३. **नीतितत्त्वाविर्भावव्याख्या** - तत्त्वबिन्दुव्याख्याया: तत्त्वविभावनाया: कर्त्रा पूर्वोक्तेन ऋषि-गोपालिकापुत्रेण **द्वितीयपरमेश्वरेण** कृतेयं व्याख्या अमुद्रिता अडयारपुस्तकाले लभ्यते।

५४. **नीतितत्त्वाविर्भावव्याख्या - मननम्** । **मुकुन्दानन्द**यतिना कृतेयं व्याख्या अडयारसरस्वतीमहालयादिपुस्तकालयेषु लभ्यते।

५५. **नीतितत्त्वाविर्भावटीका** - मङ्गलटीक। अमुद्रितेयं टीका **नीलकण्ठ** कृता अनन्तशयन अडयार पुस्तकालयलभ्या।

५६. **न्यायपद्मम्** - सोमेन यजेतेति वाक्यं यागविधायकम्, अथवा द्रव्यविधायक-मिति विचारपरोऽयं ग्रन्थः अमुद्रितः अडयारपुस्तकालये मद्रासपुस्तकालये च लभ्यते। मीमांसामकरन्द विश्वगुणादर्शचम्प्वादिकर्ता आत्रेयगोत्रजः रघुनाथदीक्षितपुत्रः अप्पयार्यपौत्रः ताताचार्यभागिनेयः नीलकण्ठदीक्षितसामयिकः काञ्चीमण्डलान्तर्गत - अरशाणिप्पालै ग्रामवास्तव्य स्सप्तदश शतकीयः (AD 1700) **वेङ्कटाध्वरी** अस्य कर्ता।

५७. **न्यायबिन्दुः** - अधिकरणार्थसंग्राहकोऽयं सूत्रवृत्तिग्रन्यः सम्पूर्णः मुद्रितो लभ्यते। सूत्रार्थबोधनानुकूलोऽयं ग्रन्थ भाट्टमतानुयायी। भट्टवैद्यनाथः शास्त्रीदीपिका काव्यप्रकाशादीनां व्याख्याता न्यायबिन्दोः कर्ता। अस्य उदाहरणचन्द्रिकाख्यकाव्य-प्रदीपव्याख्याकालः AD 1684 इति दृश्यते। ततश्चायं सप्तदशशतकीयः।

५८. **न्यायरत्नमाला** - गद्यपद्यात्मकः भाट्टमतानुयायी प्राभाकरमतखण्डनपरः मीमांसाप्रकरणग्रन्थः। प्रयुक्तिस्वतःप्रामाण्यविधिव्याप्तिवाक्यार्थनित्यकाम्यविवेक अङ्गत्वाद्यैस्सप्तभिः परिच्छेदैः पूर्णोऽयं ग्रन्थंः बहुत्र मुद्रितः। अस्य रचयिता शास्त्र-दीपिकाकारः यज्ञात्मसूरिपुत्रः शिष्यश्च एकादशद्वादशशतकवर्ती (AD 1050-1120) **पार्थसारथिमिश्रः**।

५९. **न्यायरत्नमालाव्याख्या** - नायकरत्नम्। न्यायरत्नमित्यपरनामायं ग्रन्थः तन्त्ररहस्यकर्त्रा गोदावरीतीरधर्मपुरीवासिना जातवेदगुरुवेङ्कटाद्रिगुरुशिष्येण **रामानुजा-चार्येण** कृता बरोडा गैक्वार्ड ग्रन्थमालायां मुद्रितः।

६०. **न्यायरत्नमालाप्रमेयोपन्यासः** - शम्भुदेवपुत्र **विश्वनाथदेवे**न कृतोऽयं पञ्जाप् विश्वविद्यालयसूच्यां दृश्यते।

६१. **न्यायरत्नाकरः** -प्रकरणपञ्चिकां श्रीकराचार्यं च निर्दिशन्नयं प्राभाकरमतानुयायी सूत्रवृत्तिग्रन्थः सुलभशैल्यां लिखित अमुद्रितश्च नेपाल पुस्तकालय सूच्यां दृश्यते। **नयरत्नाकर** इत्यापि नामान्तरं दृश्यते। अस्य रचयिता पूर्वोक्तः अमृतबिन्दुकारः (AD 1100) एकादशशतकात् प्राक्तनः **चन्द्राचार्यः**।

६२. **न्यायरहस्यम्**-जैमिनिसूत्रवृत्तिरूपोऽयं ग्रन्थंः तन्त्रवार्तिकव्याख्या भावार्थकर्तुः दादूभट्टस्य पुत्रेण अनन्तभट्टेन षोडशशतकीयेन (AD 1600) कृत अमुद्रितः वाराणसीसरस्वतीभवनपुरस्तकालये लभ्यते।

६३. **न्यायाध्वदीपिका**-मीमांसासूत्रवृत्तिग्रन्थोऽयं अमुद्रितः विट्ठालाचार्यापरनाम्ना सुरेन्द्रतीर्थशिष्येण उपसंहारविजयकर्त्रा विजयीन्द्रभिक्षुणा (AD 1600) कृत अडयार मद्रास मैसूर पुस्तकालयेषु लभ्येत।

६४. **न्यायामोदः** -मीमांसासूत्रवृत्तिग्रन्थोऽयममुद्रितः सरस्वतीमहालये लभ्यते। कर्ताचास्य सिद्धान्तसिद्धाञ्जनकर्ता बालकृष्णानन्द इत्यपरनामा राघवेन्द्र सरस्वतीशिष्यः **कृष्णानन्दः**। एनमधिकृत्य मदीये अद्वैतवेदान्तसाहित्ये द्रष्टव्यम्।

६५. **न्यायावलिदीधितिः** -मीमांसासूत्रदीधितिरित्यपरनामायं ग्रन्थः विश्वेश्वरप्रशिष्येण अद्वयशिष्येण **राघवानन्दसरस्व**त्या कृत अमुद्रित अनन्तशयन विश्वविद्यालयपुस्तकालयेऽस्ति।

६६. **पक्षपञ्चकनिरूपणम्**-शास्त्रदीपिकायाः प्रथमाध्यायद्वितीयपाद-प्रथमसूत्रविवरणावसरे यत् वाक्यं दृश्यते- ''सिद्धप्रमाणभावं चोदनांशे वेदं त्रेधा विभज्य किं तावन्मात्रस्यैव प्रामाण्यमुत सकलस्येति'' तस्य अर्थविचारावसरे पितृपुत्रयोः - रामानुजाचार्य-तत्पुत्रयोः पक्षभेदास्सञ्जताः। तत्र पित्रा पक्षपञ्चसाधिका युक्तय अत्र ग्रन्थे प्रतिपाद्यन्ते। अमुद्रितोऽयं ग्रन्थः अडयार पुस्तकालये विद्यते। अस्य कर्ता चक्रवर्ति कुलजः वेदान्ताचार्यशिष्यः तन्त्रनीतिलहरीकारः पूर्वोक्त **रामानुजाचार्यः**।

६७. **पक्षषट्कनिरूपणम्**-पूर्वोक्तशास्त्रदीपिकास्थवाक्यार्थवर्णनप्रसङ्गे स्वपित्रा अभिहितस्य पक्षपञ्चकस्य खण्डनपूर्वकं पक्षषट्कनिरूपणपरोऽयं ग्रन्थः

**रामानुजाचार्यपुत्रेण** कृत अमुद्रित अडयारपुस्तकालये लभ्यते।

६८. **पिष्ट पशु निर्णयः**। पिष्टपशूनां यागे उपयोगाय निर्णयं कुर्वन्नयं ग्रन्थः अमुद्रितः। अस्य रचयिता जयपुर-वाराणसीवासी नागोजीभट्टशिष्यः महादेवभट्टवेण्योः पुत्रः व्याकरणे लघुमञ्जूषायाः कलाख्यव्याख्याकर्ता **बालम्भट्ट** इति प्रसिद्धः अष्टादशशतकवासी **वैद्यनाथपायुगु**ण्डे।

६९. **पूर्वमीमांसाधिकरणसंक्षेपः** -अमुद्रित असम्पूर्णश्च सरस्वतीमहालये वर्तते। प्रभावलीकार**शम्भुभट्ट एव**ास्य कर्ता इति निर्णये मातृकाया न प्रबलं प्रमाण मुपलभ्यते।

७०. **पूर्वोत्तरमीमांसावादनक्षत्रमाला** - मासाग्निहोत्रवादादिभिः आनन्दाभेद-समर्थनवादन्तै सप्तविशंतिवादैः पूर्णोयं ग्रन्थः मुद्रितः। अस्य कर्ता प्रसिद्धः पूर्वोक्त प्रथमाप्यय्यदीक्षितः।

७१. **पूर्वमीमांसवादमाला** - शिष्टकोप-विरोधाद्यधिकरणानां अर्थसग्राहकोऽयं पूर्वोक्ताद् भिन्न अमुद्रित अज्ञातकर्तृकः अडयार पुस्तकालये लभ्यते।

७२. **पूर्वमीमांसाविषयसंग्रहदीपिका**-सूत्रभष्यगतान् अधिकरणविषयान् संग्रहेण प्रत्यध्यायं निरूपयन्नयं ग्रन्थः विधिरसायनं निर्दिशन् जर्नल आफ ओरियण्टल पत्रिकायां मुद्रितः। अस्य प्रसिद्धः **प्रथमाप्पय्यदीक्षितः** कर्ता।

७३. **पूर्वमीमांसासूत्रव्याख्या** - सूत्रवृत्तिग्रन्थोऽयं तत्वानुसन्धानाद्यनेकाद्वैत ग्रन्थकर्त्रा वेदान्तीमहादेवसरस्वतीत्यपरनाम्ना कामकोटिपीठाधिपतिना **महादेव वेदान्तिना** षोडशसप्तदशशतकीयेन (AD 1600-1700) कृता। अधिकं मदीयाद्वैतवेदान्तसाहित्याद् ज्ञेयम्।

७४. **प्रकरणपञ्चिका**-शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् इति प्रसिध्या शास्त्रतत्त्वनिर्णयोपयोगिनां सुलभानां सरलानां कठिनानाञ्च समस्यानां सयुक्तिकं उपन्यासः **प्रकरणमिति** भवति। पञ्चिकाशब्दो विस्तरार्थः। तथाच शास्त्रतत्त्वनिर्णयोपयोगी संकलित सरलजटिलादिशास्त्रमात्रसाधारणसमस्याविस्तरः प्रकरणपञ्चिका नाम। ग्रन्थोऽयं

जैमिनीयमीमांसाया: प्रभाकरप्रस्थानसम्मततत्तदसाधारणविषयसंकलनात्मकतया प्रकरणपञ्चिकेत्युच्यते। शास्त्रमुखादीनि अतिदेशपारायणान्तानि चतुर्दशप्रकरणानि अत्र दृश्यन्ते। तेषु कानिचन गद्यमयानि कानिचन पद्यमयानि च। प्रभाकरसिद्धान्तस्य प्रामाणिकोऽयं ग्रन्थ:। रचयिता साक्षात्प्रभाकरशिष्य: वङ्गदेशीय: भामतीन्यायवार्तिक टीकादिषु वाचस्पतिमिश्रेण खण्डित:, वार्तिकमतं मण्डनमतञ्च खण्डयन् अयं तयो र्मध्यवर्तीति ज्ञायते। प्राभाकर: कुमारिलमण्डनाभ्यां सन्दष्ट:, मण्डनमिश्रवाचस्पतिभ्यां सन्दष्ट: **शालिकनाथ** इति तयोर्मध्यवर्ती इति AD 780-825 अष्टमनवमशतकीय इति ज्ञायते। ग्रन्थोऽयं वाराणसी हिन्दूविश्वविद्यालये मुद्रित:।

७५. **प्रकरणपञ्चिकाव्याख्या**-न्यायसिद्धि:। प्रकरणपञ्चिकाया व्याख्येयं मूलग्रन्थार्थाववोधने साहाय्यमातन्वाना प्राभाकरादिविजयार्थमापादयन्ती क्रमस्य अतिरिक्तपदार्थत्वमापादयन्ती प्राभाकरमतरीत्याव्याख्या प्रसङ्गात् पदार्थविभागं तेषां लक्षणानि च वर्णयन्ती बहु उपकरोति प्राभाकरमतसिद्धान्तजिज्ञासूनाम्। अस्या: कर्ता जयपुरवासी **नारायण** इत्येव ज्ञायते। मुद्रिताचेयं व्याख्या समूला वाराणसी हिन्दूविश्वविद्यालये।

७६. **प्रकरणसुभाषितम्**-अनाद्यनन्तयोऽयं ग्रन्थ: प्रकरणार्थविचारं करोति। अज्ञातनामा सरस्वतीमहालये अमुद्रितोऽस्ति।

७७. **प्रभाकरविजय:** -अत्युत्तम: प्राभाकरसम्प्रदायस्य रत्नभूतोऽयं प्रकरणग्रन्थ: शालिकनाथ-भवनायथद्वयं निर्दिशन् प्रयुक्तिनिर्णयादारभ्य भेदाभेदनिरासान्तै: एकविशतिभि:प्रकरणै:प्राभकरसिद्धान्तसिद्धान् अर्थान् वर्णयन् महदुपकरोति। कलकत्तायां मुद्रितश्च। कर्ताचास्य **नन्दीश्वर:** नन्दिकेश्वरो वा। AD 1220-1300 द्वादशशतकीय:।

७८. **प्राभाकरामृतवाहिनी**-प्रभाकर सिद्धान्तप्रदर्शकोऽयं ग्रन्थस्स्यादित्यूह्यते। ग्रन्थस्तु न लभ्यते। परन्तु सौन्दर्यलहरीव्याख्यायां लक्ष्मीधरायां तत्कर्त्रा लक्ष्मीधरेण तत्प्रपितामहेन **लक्ष्मणार्येन** कृतेति निर्दिश्यते।

७९. **फलवती**–जैमिनिसूत्रवृत्तिरूपोऽयं ग्रन्थः अज्ञातकर्तृनामा सरस्वती महालये लभ्यते। **उपवर्ष**:कर्तेति केषाञ्चिदाशयः। तत्र प्रबलप्रमाणाभावात् सन्देहस्यापि कारणं नास्ति। ५-१० अध्यायपर्यन्तं सरस्वतीमहालये प्रकाशितः।

८०. **फलसांकर्यखण्डनम्**। आपदेववंशजेन **अनन्तदेवेन** कृतोऽयं ग्रन्थः विधिरसायनतन्त्ररत्नादिषु परिसंख्या विधिविचारे वर्णितं फलसांकर्यवादं खण्डयति अमुद्रितश्च।

८१. **बालप्रकाशः** –द्वादशाध्यायार्थसंग्राहकोऽयं स्वतन्त्रः ग्रन्थः। संपूर्ण भाष्यवार्तिकादिगतमर्थं वर्णयन् तत्र अवान्तरभेदान् सोदाहरणं निरूपयन् मीमांसा-शास्त्रतत्त्वज्ञानामपि महदुपकरोति मुद्रितोऽयं ग्रन्थः वाराणस्याम्। अस्य कर्ता गोविन्द-भट्टप्रपौत्रः रामेश्वरपौत्रः नारायणपुत्रः नीलकण्ठभट्टपिता द्वितीयशङ्कर भट्टस्य पितामहः भट्टवंशजः शास्त्रदीपिकाव्याख्याप्रकाशविधिरसायनदूषण मीमांसासारसंग्राहकारः षोडशसप्तदशशतकीयः शङ्करभट्टः।

८२. **बालप्रकाशव्याख्या**–विश्वनाथपुत्रेण **केशवेन** कृता काचन व्याख्यास्तीति **कर्ममीमांसायां** दृश्यते।

८३. **बृहट्टीका**–बौद्धदार्शनिकेन कमलशीलेन तत्त्वसंग्रहे शास्त्रदीपिकायां श्लोकवार्तिकव्याख्यान्यायरत्नाकरे सर्वदर्शनकौमुद्याम्, प्रकरणपञ्चिकायां वार्तिककारीय-त्वेन उद्धृतानां केषाञ्चिदुद्धरणानां वार्तिकग्रन्थेष्वदर्शनाच्च बृहट्टीकेति अन्या काचन टीका कृता स्यादिति ऊह्यते।

८४. **भाट्टचिन्तामणिः**। जैमिनिसूत्राणां स्वतन्त्रव्याख्यारूपोऽयं ग्रन्थः। व्याख्याप्रसंगात् ज्ञानप्रामाण्य प्रत्यक्षेश्वरवादशक्तिवाद सृष्टिप्रलयानुमानार्थापत्ति अभावशब्दविधिभेदधा-त्वर्थाख्यातार्थ लकारार्थ कारक समास नञर्थादिविचारपरः नव्यनैयायिकशैलीनिबद्धः तर्कपादान्तः, प्रथमाध्यायद्वितीयपादादारभ्य द्वितीयाध्यायप्रथमपादे शस्त्राधिकरणपर्यन्तानि संख्येयानि कानिचिदधिकरणानि मन्त्रप्रामाण्यस्मृतिशिष्टकोपार्यप्रसिद्धिरित्यादीनि अधिकरणानि च व्याख्यातानि। मुद्रितोऽयं ग्रन्थः चौखाम्बामुद्रणालये पण्डितग्रन्थ

मालामाञ्च। अस्य रचयिता भट्टवंशजः शास्त्रदीपिकाव्याख्यातृदिनकरभट्टपुत्रः **गागाभट्ट** इत्यपरनामधेयः शिवाजीमहाराजस्य शासनकालीनः AD 1674 सप्तदशशतकीयः **विश्वेश्वरभट्टः**। कायस्थधर्मप्रदीपः कुसुमाञ्जलिरिति वृत्तिग्रन्थोऽपि अदसीयौ ग्रन्थाविति ज्ञायते। **कुसुमाञ्जलिरिति** वृत्तिग्रन्थस्तु भाट्टचिन्तामण्यां निर्दिष्टः।

८५. **भाट्टदिनकरी**–अमुद्रितोऽयं ग्रन्थः मीमांसासूत्राणां शास्त्रदीपिकावत् स्वतन्त्रव्याख्यारूपः मद्रासपुस्तकालयेषु लभ्यते। अस्य रचयिता ग्रन्थेऽस्मिन् प्राभाकरं- दूषयति कुमरिलं भूषयति। उमारामकृष्णयोः पुत्रः नारायणपौत्रः रामेश्वरप्रपौत्रः प्रथमशंकर भट्टस्य पूर्वजः कमलाकरभट्टानुजः गागाभट्टपिता शिवाजीराजसामयिकः धर्मशास्त्रग्रन्थकर्ता दिनकरभट्टः सप्तदशशतकीयः AD 1625।

८६. **भाट्टदीपिका**–नैयायिकादिशैल्या बहुतरन्यायातिदेशादिना च पूर्वोत्तरपक्ष- व्यवस्थापनपूर्वकं भाट्टसिद्धान्तरीत्या अधिकरणार्थसंग्राहकं प्रसङ्गात् मीमांसादर्शन- सारभूतान् मौलिकसिद्धान्तांश्च प्रतिपादयत् इदं ग्रन्थरत्नम् बहुत्र मुद्रितं प्रकाशितञ्च। अस्य रचयिता प्रथमाप्यय्यदीक्षितसामयिकः रुद्रदेवभट्टपुत्रः पितुरेवाधीतविद्यः शम्भुभट्टगुरुः मीमांसाकौस्तुभभाट्टरहस्यादिकर्ता आश्रमस्वीकारदनन्तरं **श्रीधरेन्द्रनामा** षोडश शतकीयः (AD 1575-1665) **खण्डदेवः**।

८७. **भाट्टदीपिकाव्याख्याः –प्रभावली**। कविमण्डनबिरूदभूषितस्य बाल- कृष्णभट्टस्य पुत्रेण खण्डदेवस्य साक्षात् शिष्येण AD 1640-1707 सप्तदशशत- कीयेन शम्भुभट्टेन कृतेयं व्याख्या शम्भुभट्टीयमिति प्रसिद्धा निर्णयसागरे मुद्रिता। बलाबलाधिकरणानन्तरं ३-३-७ व्याख्या न कर्तव्या, यतः भाट्टकौस्तुभपठनादनन्तरमेव छात्राणां सुलभावगाहस्स्यादित्याचार्येणोक्तम्। तथापि सावधानेन सुलभग्राह्यतया व्याख्या कृतानेन। अत्र सोमेश्वरभट्टपार्थसारथिमिश्राप्पय्यदीक्षितानामाशयः विमृष्टः। अनेन पूर्वमीमांसाधिकरणसंक्षेपापरनामा अधिकरणमालाख्यः ग्रन्थोऽपि रचितः अमुद्रितः सरस्वतीमहालये विद्यते।

८८. **प्रभावलीखण्डनम्**। सौन्दर्यलहरीव्याख्यायाः लक्ष्मीधराख्यायाः कर्तुर्लक्ष्मीधरपण्डितस्य पितामहेन **लक्ष्मणार्येण** कृतोऽयं ग्रन्थस्तु न लभ्यते परन्तु सौन्दर्यलहरीव्याख्यायाः लक्ष्मीधरायाःग्रन्थान्तपुष्पिकायां निर्दिष्टः।

८९. भाट्टदीपिकाव्याख्या-**भाट्टचन्द्रोदयः**। कोनमाम्बा-गम्भीररायभारत्योः पुत्रेण शिवनृसिहंगुरुशिष्येण भास्कररायेण कृतेयं व्याख्या अमुद्रिता सरस्वतीमहालयमद्रास पुस्तकालयेषु लभ्यते। दीक्षाग्रहणानन्तरं **भासुरानन्द** इति नामास्य। **संकर्षकाण्डस्यापि** भाष्यमनेन कृतम। तच्च पण्डितग्रन्थमालायां मुद्रितम्। **वादकुतूहलाख्यः** मीमांसाग्रन्थोऽपि अदसीयः। वादकुतूहले मल्लिकार्जुनसभायां स्वामिशास्त्रिणा प्रस्तुतस्य वादस्य विवरणं दृश्यते। छन्दःकौस्तुभछन्दोभास्करवरिवस्याहृदयललितासहस्रनामभाष्यादयश्च अदसीयाः प्रसिद्धाः ग्रन्थाः। अस्य कालः अष्टादशशतकम् AD 1700-1760 **मत्वर्थलक्षणापि** अदसीयः ग्रन्थः॥

९०. **भाट्टदीपिकाव्याख्या-भाट्टचिन्तामणिः**। शब्दप्रयोगविषयेऽतीवकार्पण्यमादधानायाः भाट्टदीपिकायाः प्रतिवाक्यं सावतरणं विवृण्वन् अयं ग्रन्थः मूलग्रन्थावबोधने सम्यगुपकरोति। ग्रन्थोऽयं मुद्रितः। अस्य रचयिता चोलदेशीयः वाञ्छेश्वरप्रपौत्रः माधवपौत्रः नृसिंहपुत्रः विश्वामित्रगोत्रजः आश्वलायनसूत्री शरभोजिद्वितीय (AD 1798-1832) कालिकः ईश्वरश्रीनिवाससाम्बशिवानां शिष्यः अहोबलस्य च शिष्यः महिषशतकव्याख्या ब्रह्मसूत्रार्थ चिन्तामणि दत्तकश्राद्धचिन्तामणीनां कर्ता वाञ्छेश्वरयज्वा।

९१. **भाट्टदीपिकाव्याख्या-भाट्टकल्पतरुः**। व्याख्येयं तञ्जापुरे मुद्रिता। अश्वत्थनारायणपोत्रेण रामशंकरशास्त्रिपुत्रेण शिवरामशस्त्रि शिष्येण **रामसुब्रह्मण्यशास्त्रिणा** कृता। एनमधिकृत्य मदीये अद्वैतवेदान्तसाहित्येऽधिकं द्रष्टव्यम्।

९२. **भाट्टनयोद्योतः**। गोविन्दपुरवासिना शाब्दभूषणशाब्दमञ्जर्यादिकर्त्रा सप्तदशशतकीयेन **नारायणसुधिया** कृतोऽयं ग्रन्थः भाट्टदीपिकासारभूत अमुद्रितस्सरस्वतीमहालये वर्तते।

९३. **भाट्टभाषापरीक्षा**। भाट्टमतप्रसिद्धपारिभाषिकशब्दविश्लेषणात्मकोऽयं ग्रन्थः नारायणतीर्थमुनिना विरचितः प्रकाशितः।

९४. **भाट्टपरिभाषा**। भाट्टानुंमतप्रमाणषट्कपरीक्षात्मकः ग्रन्थः। अमुद्रितः मद्रास-पुस्तकालयलभ्यः वेदान्तपरिभाषाव्याख्याप्रकाशिकातत्त्वचिन्तामणिप्रकाशसार पदमञ्जरी-व्याख्यामञ्जरीमकरन्दकारेण कौण्डिन्यगोत्रजेन त्रिवेदीनारायणपुत्रेण धर्मराजाध्वरिभातुष्पुत्रेण ऋक्शाखाध्यायिना चोलदेशीयकण्डरमणिक्यग्रामवासिना स्वपितृव्याद्धर्मराजांध्वारिणः प्राप्तविद्येन सप्तदशशतकीयेन **पेद्दादीक्षितेन** कृतः।

९५. **भाट्टरहस्यम्**। मीमांसादर्शनरीत्या शाब्दबोधविचारपरः इतरमतखण्डनपूर्वको विचारः ग्रन्थस्यास्य विषयः। भावना एव वाक्यार्थ इत्युपपाद्य भावनामुख्यविशेष्यकबोधं मीमांसाभिमतं साधयति। धात्वर्थव्यापारमुख्यविशेष्यकबोधं वैयाकरणोक्तम्, प्रथमान्तार्थ-मुख्यविशेष्यकबोधं नैयायिकोक्तं च खण्डयति। कृदन्तादिष्वपि भावनासद्भावमुपपाद्य प्रसंगात् मण्डनाचार्यपार्थसारथिमिश्रमतान् परिशीलयति। प्रथमादिविभक्त्यर्थान् विशदयति। अध्यायचतुष्टयरिमितोऽयं ग्रन्थः केवलं प्रथमपरिच्छेद एव शास्त्रमुक्तावलीमालायां काञ्चिपुरे वाराणसीहिन्दूविश्वविद्यालये च प्रकाशितः। अस्य रचयिता भाट्टदीपिका भाट्टकौस्तुभकर्ता रुद्रदेवभट्ट पुत्रः **खण्डदेव** इति ज्ञायते। एनमधिकृत्य पूर्वमेवोक्तम्।

९६. **भाट्टरहस्यव्याख्याः -भावप्रकाशिका**। व्याख्यारहितस्यास्य ग्रन्थस्य भाट्टरहस्यस्य भावप्रकाशिकाख्यां व्याख्यां लिखित्वा न्यूनता दूरीकृता। मूलग्रन्थार्थावबोधने बहु उपकुर्वन्तीयं व्याख्या जिज्ञासूनामुपकाराय भवति। व्याख्याता अपरपतञ्जलिरिति प्रसिद्धः सोमदेवीसर्वेश्वरपुत्रः पदवाक्यप्रमाणज्ञः आन्ध्रदेशीयः **पेरिसूर्यनारायणशास्त्री** विंशतिशतकीयः। (AD 1960)

९७. **भाट्टरहस्यटिप्पणी**। नाम्ना टिप्पण्यपि शैल्या व्याख्यारूपतां भजन्तीयं विद्यार्थिनां परमोपकारिणी संशयच्छेदिनी भूत्वा **विषमग्रन्थिभेदिनी**नाम लभते। टिप्पणी-कारोऽयं विंशतिशतकीयः प्राभाकरमततत्त्वज्ञः वाराणसीविश्वविद्यालयमीमांसाध्यापकः

चिन्नस्वामिशास्त्रिशिष्यः दक्षिणदेशीयकाञ्चीमण्डलान्तर्गत मण्डकलत्तूरग्रामाभिजनः **सुब्रह्मण्य-शास्त्री**।

९८. **भाट्टभास्करः**। ग्रन्थोऽयं मीमांसाकुसुमाञ्जल्यां निर्दिष्टः। अस्य कर्ता **द्वितीयशं-करभट्ट**स्सप्तदशशतकीय इति ज्ञायते।

९९. **भाट्टभास्करः**। सूत्रवृत्तिरूपोऽयं ग्रन्थ अमुद्रितः प्रथमाध्यायान्तं मद्रास पुस्तकालये लभ्यते। अस्य रचयिता न्यायप्रकाशकर्तुः आपदेवस्य अनुजः प्रथमानन्तदेवपुत्रः सप्तदशशतकीयः (AD 1600-1670) **जीवदेवः**।

१००. **भाट्टसारः**। मीमांसादर्शनसिद्धानां द्वादशाध्यायानां पादानां आशयं संक्षिप्य सुलभावगाहनमुद्बोधयन्नयं ग्रन्थः मुद्रितः। अस्य रचयिता श्रीशैललक्ष्मीकुमार-ताताचार्यवंशजः तिरुप्पुटकुलीकाञ्चीपुरादिवास्तव्यः देशिकताताचार्यपुत्रः बकुलभूषण वेङ्कटाचार्यश्रीनिवासयतिशिष्यः षट्कोटिखण्डनमण्डनकर्तुः गोपालताताचार्यपिता अष्टादशशतकीयः (AD 1875) **कृष्णताताचार्यः**।

१०१. **भाट्टसंग्रहः**। प्रत्यधिकरणं भाट्टमतरीत्यार्थसंग्राहकः ग्रन्थः। मुद्रितोऽयं ग्रन्थः। अप्पय्यदीक्षितताताचार्ययोः समकालिकस्य आनन्दतीर्थानुयायिनः विजयीन्द्रतीर्थस्य शिष्यः सुधीन्द्रगुरुपादस्यापि शिष्यः संन्यासस्वीकारात् पूर्वं वेणीवेङ्कटभट्टनामा तिम्मणभट्ट पुत्रः कनकाचलभट्टपौत्रः कृष्णभट्टप्रपौत्रः AD 1623 काले स्वीकृताश्रमः त्रिंशदुप-निषद्वेदब्राह्मणग्रन्थानां व्याख्याता मन्त्रालयपीठाधिपातिः सप्तदशशतकीयः **राधवेन्द्रयति**रस्य ग्रन्थस्य कर्ता।

१०२. **भाट्टार्कः**। मीमांसान्यायसंग्रहापरनामायं ग्रन्थः बरोडापुस्तकालये सरस्वती-भवनपुस्तकालये च मुद्रितो विद्यते। अस्य कर्ता रामेश्वरभट्टप्रपौत्रः नारायणभट्टपौत्रः शङ्करभट्टपुत्रः शङ्करभट्टभानुभट्टयोः पिता तर्कामृत-जागदीश्यादिव्याख्यातुर्गङ्गारामजडिनः बन्धुस्सप्तदशश तकीयः **नीलकण्ठभट्टः**।

१०३. **भावनाविचारः**। अज्ञातकर्तृकअमुद्रितश्चायं ग्रन्थः सरस्वतीमहालये लभ्यते।

१०४. **भावनाविवेकः**। मीमांसादर्शनजीवातुभूतं भावनावादं साधयन्नयं ग्रन्थः

वैयाकरणनैयायिकाभिमतं सिद्धान्तं प्रदूष्य भावनाविषये बहुतरलक्षणान्युपपाद्य धातूपात्त तदाहितविशेषातिरिच्यमानात्मा क्रियापदार्थो भावनापर्याय इत्यमुं सिद्धान्तं साधयति। अस्य कर्ता सांप्रदायिकैः कुमरिलशिष्यः इति, शङ्कराचार्येण पराजितसुरेश्वरनाम्ना आश्रमस्वीकारादनन्तरं प्रसिद्धः मण्डनमिश्र एवास्य कर्ता इति स्वीक्रियते। अन्ये मण्डनमिश्रात् भिन्न एवायं **मण्डनः** विधिविवेकविभ्रमविवेकमीमांसानुक्रमणी ब्रह्मसिध्यादिकर्ता इति वदन्ति। सर्वथा सप्तमाष्टमशतकीय इति सिध्यति।

१०५. **भावनाविवेकव्याख्या**-भावनाविवेकटीका-मूलग्रन्थसिद्धान्तस्थापनाय गम्भीरविचारपरा व्युत्पादिकेयं व्याख्या बहुषु स्थलेषु श्लोकवार्तिकतन्त्रवातिकभाष्येभ्यः प्रमाणमुपपादयन्तीयं व्याख्या उवेकभट्ट कृता। सव्यारव्योऽयं ग्रन्थः सरस्वतीभवन ग्रन्थमालायां मुद्रितः।

१०६. **भावनाविवेक व्याख्या-विषमग्रन्थभेदिका।** विष्णुभट्टपुत्रेण **नारायणेन** कृतेयं व्याख्या अमुद्रिता मद्रासपुस्तकालये अण्णामलैविश्वविद्यालये मुद्रिता च लभ्यते।

१०७. **भावबोधिनी**। सूत्रवृत्तिरूपोऽयं ग्रन्थः अधिकरणान्तर्गत सूत्राणां एकैकशः पदबोधं भावार्थं च विशदयन् प्रतिसूत्रपदानुसारी सुबोधः अनतिविस्तरः सुविज्ञेयार्थसंग्राहकः छात्राणां परमोपकारी मुद्रितः। ग्रन्थस्यास्य रचयिता आश्रमस्वीकारात् पूर्वं **नरहरिशास्त्रीति** प्रसिद्धः करवीरशङ्करपीठाधिपतिः **विद्याशंकरभारतिः** विंशतिशतकीय (AD 1937) इति ज्ञायते।

१०८. **भाष्यव्याख्याप्रभा**। शाबरभाष्यस्य प्रथमस्य तर्कपादस्य स्वतन्त्रव्याख्यारूपोऽयं ग्रन्थः आनन्दात्रश्रमे मुद्रितः। व्याख्येयं प्रभानाम्नी हृदयहारिणी यथार्थनाम्नी प्रभेव सुस्पष्टं प्रकाशयन्ती ललिता सुप्रसन्ना वरीवर्ति। अस्या निर्माता मन्नार्गुडिराजुशास्त्रित्यागराजशास्त्रिशिष्यः विशतिशतकीयः वैद्यनाथशास्त्री।

१०९. **मत्वर्थलक्षणाविचारः**। पशुना यजेत इत्यादि वाक्ये पशुमता इत्यर्थः मत्वर्थलक्षणया भवति न वा इति **स्वामिशास्त्रि-भास्कररराययोः** वादप्रतिवादप्रधानः ग्रन्थ अमुद्रित सरस्वतीमहालये लभ्यते।

११०. **महाव्रती**। प्राभाकरमतानुयायी ग्रन्थोऽयं न कुत्रापि लभ्यते। परन्तु प्रबोध-चन्द्रोदयव्याख्याचन्द्रिकायां नयविवेके च निर्दिष्टः। नयविवोक्तसिद्धान्तं त्यक्त्वा प्रकारान्तरेण अस्य सिद्धान्तः न ज्ञातुं शक्यते। शालिकनाथसामयिको महाव्रती अस्य कर्ता।

१११. **मानमेयोदयः**। परिच्छेदद्वयपूर्णोऽयं ग्रन्थः कुमरिलभट्टमतानुसारेण प्रमाणानि प्रमेयाणि च परमतनिराकरणपूर्वकं निपुणतरं उपवर्णयति। मीमांसादर्शनपदार्थानामव-बोधने सुखतरव्युत्पादकः ग्रन्थान्तरः अस्मान्नास्ति। मुद्रितश्चायं तिरुवनन्तपुरे अडयार पुस्तकालये च। अस्य प्रमाणपरिच्छेदस्य रचयिता केरलीयः मातृदत्तपुत्रः अच्युतपि-षारडिशिष्यः प्रक्रियासर्वस्वनारायणीयादिकर्ता षोडशशतकीयः (AD 1590) **नारायणभट्टतिरिः**। प्रमेयपरिच्छेदस्य रचयिता तु भाट्टनयोद्योतकर्ता सुब्रह्मण्यरामकृष्णेभ्यः प्राप्तविद्यः मानवेदनृपते राजसभापण्डितः नारायणसुधीः सप्तदशशतकीयः। अनेन **पिष्टपशुमीमांसा**पि कृतेति ज्ञायते।

११२. **मनमेयोदयरहस्यश्लोकवार्तिकः**-आनुष्टुभैः ११३ श्लोकैः विचाराख्यै खण्डैः सर्वदर्शन सिद्धान्तं प्रदर्शयन् मीमांसाभिमत प्रमेयान् सविशदं प्रतिपादयन्नयं ग्रन्थः महीशूरनगरे प्रकाशितः। अस्य रचयिता श्रीवत्सगोत्रजः वेङ्कटार्यपुत्रःाताम्बागर्भजः कस्तूरीरङ्गचार्यात् प्राप्तविद्यः संस्कृतपाठ्यशालाध्यापकः कृष्णराजउडयारसमादृतः पण्डितप्रवरः लक्ष्मीपुरम्-**श्रीनिवासाचार्यः** एकोनविंशति-विंशतिशतकीयः॥

११३. **मीमांसाकौस्तुभः**। भाट्टकौस्तुम इत्यपरनामायं ग्रन्थः मीमांसासूत्राणां नव्यन्यायशैल्या अर्थप्रतिपादकः प्रसंगात् शब्दबोधपद्धतिविचारपरः नव्यमीमांसक-वृत्तिग्रन्थः। मुद्रितोऽयं काञ्चीपुरे वाराणस्याञ्च। अस्य कर्ता भाट्टदीपिकाकर्ता पूर्वोक्तः **खण्डदेवभट्टः**।

११४. **मीमांसाचन्द्रिका**। सूत्रवृत्तिरूपोऽयं ग्रन्थः महता वेदान्तिना सिद्धान्तबिन्दु-लधुचन्द्रिकादि-अद्वैतवेदान्तग्रन्थकर्त्रा **गौडब्रह्मानन्देन** कृतेति श्रूयते। प्राप्तिस्थानादि न ज्ञायते। एनमधिकृत्य मदीयाद्वैतवेदान्तसाहित्ये द्रष्टव्यम्।

१९५. **मीमांसाद्वयजीवातुः**। ग्रन्थोऽयमलभ्यः। पुरूषोत्तममहोपाध्यायकृतः। निर्दिष्टोऽयं सौन्दर्यलहरीव्याख्यालक्ष्मीधरायाः ग्रन्थान्तपुष्पिकायाम्।

११६. **मीमांसानयकौमुदी**। जैमिनिसूत्रवृत्तिग्रन्थोऽयं पूर्वोक्तेन उपसंहारविजय न्यायाध्वदीपिकाकर्त्रा अप्पय्य दीक्षितसामयिकेन विठ्ठलाचार्यापरनाम्रा विजयीन्द्रभिक्षुणा कृतः मद्रासमुस्तकालये लभ्यते।

११७. **मीमांसानयमञ्जरी**। नयाख्यैः प्रकरणैः अधिकरणार्थान् मीमांसानयांश्च संग्राहकोऽयं ग्रन्थः वाराणस्यां सम्पूर्णानन्दग्रन्थमालायां मुद्रितः। लेखकस्त्वस्य ग्रन्थस्य पूर्वोक्तः अर्थसंग्रहव्याख्याता अर्थालोककर्ता **पट्टाभिरामशास्त्री**।

११८. **मीमांसानुक्रमणिका**। अधिकरणार्थप्रतिपादकोऽयं ग्रन्थः। अधिकरणसंख्यां प्रतिपादं न्यायसंख्यां च प्रतिपादयन्नयं ग्रन्थः गद्यपद्यबद्धः तत्तदधिकरण स्वरूपबोधक-प्रातिस्विकः न्यायमालायाः मार्गप्रदर्शकः। मुद्रितोऽयं ग्रन्थः चौखम्बासंस्कृतमालायाम्। अस्य रचयिता भावनाविवेक-विभ्रमविवेक विधि विवेकादिकर्ता पूर्वोक्तः मण्डनमिश्रा-परनामा मण्डनः सप्तमाष्टमशतकीयः (AD 680-750)।

११९. **मीमांसानुक्रमणिका** व्याख्या-**मीमांसामण्डनम्**। न्यायमालारीतिमनु-सृत्य अधिकरणलक्षणं संयोज्य पञ्चावयवनिरूपणपूर्वकं व्याख्या दृश्यते। अस्य कर्ता मैथिलेयः तीर्थनाथरामकाषीदम्पत्योः तृतीयपुत्रः जयदेवचित्रधरशिवकुमारमिश्राणां, गंगाधारशास्त्रिणश्च शिष्यः (AD 1871-1941) कालवासी **गङ्गानाथझा** पण्डितः।

१२०. **मीमांसान्यायकोशः**। प्राभाकरमतानुयायी ग्रन्थोऽयं विचाराख्यैरष्टादशप्रकरणैः जिज्ञासासूत्रादिभिः आत्मवादान्तैः विचारै पूर्णः अन्ते शैवभागवतादिमतविचारञ्च करोति। अज्ञातग्रन्थकर्तृनामायं ग्रन्थः अमुद्रितः अडयारपुस्तकालये लभ्यते। ग्रन्थेऽस्मिन् **गुरुमतामृतमिति** प्राभाकर ग्रन्थः निर्दिष्टः। **द्रमिडभाष्यं तत्त्वालोकं तर्करत्ना**परामिधं कल्याणमञ्जरीतत्त्वरत्नारव्यग्रन्थं च निर्दिशति।

१२१. **मीमांसान्यायदर्पणम्**। मीमांसासूत्रवृत्तिग्रन्थोऽयं अमुद्रित मद्रासपुस्तकालयेषु लभ्यते। अस्य कर्ता वेदान्तपरिभाषाव्याख्याशिखामणिकर्ता वेङ्कटनाथपौत्रः धर्मराजा-

ध्वरिपुत्रः त्रिवेदीनारायणदीक्षितस्य भ्रातुष्पुत्रः कौण्डिन्यगोत्रजः ऋग्वेदाध्यायी चोलदेशीय-कण्डरमाणिक्कग्रामवासी धर्मराजाध्वरिशिष्यश्च **रामकृष्णदीक्षितः** सप्त दशशतकीयः AD 1625-1700। एनमधिकृत्य मदीये अद्वैतवेदान्तसाहित्ये द्रष्टव्यम्।

१२२. **मीमांसान्यायप्रकाशः**। प्रकरणग्रन्थेऽस्मिन् आवश्यकाधिकरणार्थनिरूपण-पुरस्सरं उपदेशनिरूपणात्मकस्य पूर्वषट्कस्यार्थः क्रमेण सुललितमुपपादितः। मीमांसाशास्त्रप्रविविक्षूणां उपकाराय एकविषयनिरूपणावसरे तांस्तानर्थान् प्रसङ्गसङ्गत्या अवतार्य सुलभावबोधैर्वाक्यसन्दर्भैः स्फुटीकुर्वन्नयं ग्रन्थः बहुषु स्थलेषु मुद्रितः। अनन्तदेवस्य पुत्रः द्वितीयानन्तदेवस्य जीवदेवस्य च पिता **आपदेवः** सप्तदशशतकीयः (AD 1700) कर्ता।

१२३. **मीमांसान्यायप्रकाशव्याख्याः -भाट्टालङ्कारः**। अनन्तदेवस्य पौत्रेण जीवदेवभ्रात्रा आपदेवपुत्रेण **अनन्तदेवेन** कृतेयं व्याख्या चौखाम्बायां मुद्रिता।

१२४. **मीमांसान्यायप्रकाशव्याख्या-प्रभा**। व्याख्येयं भास्करशास्त्रि-रामशास्त्रि-शिष्येणाधुनिकेन अभयङ्कर**वासुदेवशास्त्रिणा रचिता** पूनानगरे मुद्रिता।

१२५. **मीमांसान्यायप्रकाशव्याख्याः -सारविवेचिनी**। आधुनिकेन वाराणसी-वासिना पूर्वोक्तेन तन्त्रसिद्धान्तरत्नावल्यादिकर्त्रा **चिन्नस्वामिशास्त्रिणा** कृतेयं व्याख्या हरिदास संस्कृतग्रन्थमालायां मुद्रिता।

१२६. **मीमांसान्यायप्रकाशव्याख्या-सुधास्वादः**। आधुनिकेन न्यायवेदान्ता-दिपारदृश्वना **उत्तमूर वीरराघवाचार्येण** कृतेयं व्याख्या तिरूवैयारनगरे मुद्रिता।

१२७. **मीमांसान्यायप्रकाशटिप्पणी**। आधुनिकेन **मदनमोहन**शर्मणा कृतेयं टिप्पणी वाराणस्यां मुद्रिता।

१२८. **मीमांसान्यायसंग्रहः**। केरलीयेन **गोविन्दभट्टेन** कृतोऽयं ग्रन्थः प्राभाकररीत्या सूत्रार्थवर्णनं कुर्वन् अमुद्रितः मद्रासपुस्तकालये लभ्यते। पद्यमयोऽयं ग्रन्थः १/२-३/५ अध्यायपर्यन्तमेव लभ्यते।

१२९. **मीमांसा परिभाषा**–मीमांसाशास्त्रस्य पदपदार्थसंकेतानां ज्ञानाय सुलभाव-बोधाय जिज्ञास्यविषयप्रदर्शनसंकेतैस्सह लिखितोऽयं ग्रन्थः बालानामुपकारकः प्रकरणग्रन्थः। मुद्रितोऽयं ग्रन्थः निर्णयसागरग्रन्थमालायाम्। अस्य कर्ता द्रविडान्वयगतः **कृष्णयज्वा** अष्टादशशतकीयः AD 1700-1760, इति परं ज्ञायते।

१३०. **मीमांसापरिभाषाव्याख्या**:। **गोपाल**शास्त्रिकृता **दीपिकाख्या** व्याख्या, **नित्यानन्द**कृता **टिप्पणी** च वाराणस्यां मुद्रिता। **ताता**चार्यकृता **परिष्काराख्या** व्याख्या तिरूवैयारूनगरे मुद्रिता।

१३१. **मीमांसापादुका**–भाट्टप्राभाकरसिद्धान्तविमर्शनपरोऽयं ग्रन्थः काञ्चीनगरे मुद्रितः। अस्य रचयिता विशिष्टाद्वैतसिद्धान्तस्थापकः तूप्पिलग्रामाभिजनः अनन्तसूरि-सोमयाजितोतारम्बयोः पुत्रः उभयसिंहासनाधिपतिरिति प्रसिद्धः कवितार्किक सिंह इति ख्यातः एकविंशतिग्रन्थकर्ता त्रयोदशशतकीयः AD 1269-1369 वेङ्कटनाथापरामिधः **वेदान्तदेशिकः**।

१३२. **मीमांसापूर्वपक्ष**:। अज्ञातकर्तृनामायं ग्रन्थः मद्रासपुस्तकालये लभ्यते। सरस्वतीमहालयेऽप्यस्ति।

१३३. **मीमांसाप्रकरणम्**। अयमपि पूर्ववत्।

१३४. **मीमांसाप्रमेयसंग्रह**:। भाट्टमतानुयायी ग्रन्थोऽयममुद्रितः मद्रासपुस्तकालये लभ्यते।

१३५. **मीमांसामकरन्द**:। धर्मविषयकार्थवादानां प्रामाण्यस्थापनरोऽयं ग्रन्थः अमुद्रितः मद्रासपुस्तकालयेषु लभ्यते। अस्य कर्ता विश्वगुणादर्शकर्ता विधित्रयपरि त्राणकारी नीलकण्ठदीक्षितसामयिकः आच्वान्दीक्षितपौत्रः तातार्यस्य भागिनेयः रधुनाथ-दीक्षितपुत्रः काञ्चीमण्डलान्तर्गतअरशाणिप्पालैग्रामवासी षोडश सप्तदशशतकवासस्री AD 1590-1660 **वेङ्कटाध्वरी**।

१३६. **मीमांसमहार्णव**:। यद्यपीयं कृतिर्नलभ्यते परन्तु तत्त्वचिन्तामणिव्याख्या-प्रभाकर्तुर्यज्ञपत्युपाध्यायस्य पितामहेन वटेश्वरोपाध्यायेन कृत इति लन्डननगरस्थभारतीय-

पुस्तकालये केचन भागा लभ्यन्त इति च गङ्गानाथझा, दिनेशभट्टाचार्यदीनामाशयः। प्राभाकरसिद्धान्तानुयायिनीयं कृतिरिति च तेषामाशयः। वत्सेश्वरः कर्तेति केचन।

१३७. **मीमांसामहोदधिः**। बौद्धमतावलम्बिना ज्ञानश्रीमित्रेण हेतुबिन्दुटीकायां, नयविवेके, धर्मोत्तरप्रदीपे ज्ञानश्रीमित्रनिबन्धावल्याम्, अजिताभूमिकायाम्, प्रबोधचन्द्रोदयव्याख्याचन्द्रिकायाञ्च निर्दिष्टोऽयं ग्रन्थ इदानीमलभ्यः। केचन महोदधि महाव्रतिनामानौ मीमांसकौ अष्टमशतकीयौ, न तु ग्रन्थस्य नामेति वदन्ति।

१३८. **मीमांसारत्नम्**। शाहजहांनृपतिकालीनेन रघुनाथभट्टाचार्येण षोडशशतकीयेन (AD 1600) कृतोऽयं प्रमाणप्रमेयविधिविमर्शनपरोऽयं प्रकरणग्रन्थ अमुद्रितः वाराणस्यां कवीन्द्राचार्य पुस्तकालये लभ्यते।

१३९. **मीमांसारसपल्वलम्**। मिथिलायां प्रचलिते कर्मकाण्डे मन्त्रद्रव्यादि विषयकविवादेषु निर्णयार्थं मीमांसापद्धत्या भाट्टमतानुसारेण निर्णयं कुर्वन्नयं ग्रन्थः समसामयिकानां द्वितीयवाचस्यति पक्षधरमिश्र मधुसूदनठक्कुरादीनां समन्वयवचनानि वर्णयन् मुद्रितोऽयं गङ्गानाथझापुस्तकालये। अस्य कर्ता मैथिलः रुचिदत्तपुत्रः गोपालभट्टशिष्य पञ्चदशशतकीयः AD 1450 **इन्द्रपत्युपाध्यायः**।

१४०. **मीमांसार्थप्रकाशः**। अध्यायाधिकरणार्थप्रतिपादकः द्वादशपरिच्छेदपूर्णोऽयं ग्रन्थः विशाखपट्टणे ग्रन्थप्रदर्शिनीमालायां मुद्रितः। कर्ता चास्य भट्टकेशवपौत्रः अनन्तभट्टपुत्रः लौगाक्षिवंशजः तर्कभाषा-सप्तपदार्थी व्याख्याता न्यायचन्द्रिकाकर्ता पञ्चदशषोडशकालिकः (AD 1450-1575) **भट्टकेशवः**। एनमधिकृत्याधिकं मदीये दर्शनमञ्जरीग्रन्थे ज्ञातव्यम्।

१४१. **मीमांसाविषयोपन्यासः**। अमुद्रितोऽयमज्ञातकर्तृकग्रन्थः सरस्वती महालये लभ्यते।

१४२. **मीमांसाशास्त्रसर्वस्वम्** मीमांसासूत्राणां शास्त्रदीपिकाद्युक्तार्थसंग्राहकोऽयं ग्रन्थः ओरिसाशोधसंस्थानपत्रिकायां तृतीयाध्यायचतुर्थपादपर्यन्तं मुद्रितः। अस्य कर्ता

लक्ष्मणसेनसभापण्डितः धनञ्जयजनन्योःपुत्रः वात्स्यायनगोत्रजः पशुपतीशानयोः भ्राता द्वादश शतकीयः (AD 1170-1200) **हलायुधभट्टः**।

१४३. **मीमांसासर्वस्वम्**। भाट्टमतानुयायी अधिकरणार्थसंग्राहकः सूत्रवृत्तिग्रन्थोऽयममुद्रितः मद्रासपुस्तकालये लभ्यते। अस्य कर्ता सोमयाजिअच्चमाम्बयोः पुत्रः शास्त्रदीपिकव्याख्यातृसोमयाजिदीक्षितशिष्यः विधिविवेकविधिदर्पणकर्ता सप्तदशशतकीयः (AD 1670-1750) कोल्लूर **नारायणशास्त्री**।

१४४. **मीमांसासारः**। मीमांसान्यायप्रकाशसारभूतोऽयं ग्रन्थ अज्ञातकर्तृनामा अमुद्रितः सरस्वती महालयेऽस्ति।

१४५. **मीमांसासारसंग्रहः**। सहस्राधिकरणार्थान् सहस्रपादैर्वर्णयन् २५० पद्यबद्धोऽयं अमुद्रित इति ज्ञायते। परन्तु चौखाम्बामुद्रणालये मुद्रित इति तु निश्चयः। अस्य कर्ता बाल-प्रकाशकारः पूर्वोक्तः **प्रथमशङ्करभट्टः**

१४६. **मीमांसासिद्धान्ताख्यो**ऽयं ग्रन्थ अमुद्रित सरस्वतीमहालये लभ्यते। अज्ञात-कर्तृनामा।

१४७. **मीमांसासूत्रदीपिका**। सूत्रवृत्तिग्रन्थोऽयममुद्रितः मद्रासपुस्तकालये लभ्यते। कर्ता चास्य दर्भवेलुभट्टपुत्रः अन्नम्भट्ट शिष्यः भाट्टानुयायी यल्लुभट्टः अष्टादश शतकीयः (AD 1800)।

१४८. **मीमांसासूत्रदीधितिः न्यायलीलावतीत्य**परनामा, **मीमांसास्तब**कश्चेति ग्रन्थद्वयं अद्वयशिष्यराघवेन्द्रसरस्वतीकृतं लन्डननगरस्थभारतीयपुस्तुकालये लभ्यते।

१४९. **रथकाराधिकरणविचारः**। ६-१-१२ अधिकरणार्थं परिशीलयन्नयं ग्रन्थ अमुद्रित अडयार पुस्तकालये लभ्यते।

१५०. **लधुन्यायसुधा**-लधुवार्तिकटीका। कुमारिलभट्टीयटुप्टीकाव्याख्यात्मकोऽयं ग्रन्थः। अमुद्रितः मद्रासपुस्तकालये सरस्वतीमहालये च लभ्यते। अस्य कर्ता शुद्धानन्दशिष्यः वाराणसीवासी उत्तमश्लोकतीर्थः। एनमधिकृत्य मदीयेअद्वैतवेदान्त-साहित्ये द्रष्टव्यम्। ग्रन्थपरिशीलनात् नेयं चित्रपटव्याख्येत्येव भाति।

१५१. **वाक्यार्थरत्नम्**। प्राभाकरसिद्धान्तानुयायी ग्रन्थोऽयं परिच्छेदचतुष्टययुतः नियोगरूपकार्यस्य प्राधान्येन वाक्यार्थत्वं समर्थयति। तदुपयोगितया अध्ययनविधि-क्रियास्थायित्वलिङ्प्रत्ययार्थअपूर्वादिविचाराः प्रवृत्ताः। ग्रन्थोऽयं मैसूर विश्वविद्यालयेन प्रकाशितः। अस्य कर्ता दुर्वासवंशजः श्रीवत्सगोत्रजः मारयार्यपुत्रः **अहोबलाचार्यः**।

१५२. **वाक्यार्थरत्नव्याख्या**-सुवर्णमुद्रा। मूलकारेण अहोबलाचार्येणैव कृतेयं व्याख्या श्लोकरूपस्य मूलग्रन्थस्यार्थं सुविशदं प्रतिपादयति। व्याख्येयमपि समूला मैसूरविश्वविद्यालयेन प्रकाशिता।

१५३. **वादकुतूहलम्**। मल्लिकार्जुनराजसभायां सोमेन यजेत इत्यादिवाक्येषु मत्वर्थलक्षणाया आवश्यकता अस्ति? न वा? विचारप्रधानोऽयं नृसिहंभारतीशिष्याभ्यां भासुरानन्दापरनामकभास्करर-स्वामिशास्त्रिभ्यां कृतवाक्यार्थविचरप्रधानश्चायं ग्रन्थ अमुद्रित मद्रासपुस्तकालयेषु लभ्यते। अष्टादश शतकीयाविमौ।

१५४. **विधिचमत्कारचन्द्रिका**। वार्तिके अपूर्व नियम परिसंख्या विधीनाम् "विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते" (१/२/४२) लक्षणमुक्तम्। अत्राव्यास्त्यतिव्याप्त्यादिदोषानुद्भाव्य तेषां परिहारञ्च यथासम्भवं उपवर्ण्य लक्षणोदाहरणाक्षेपव्याजेन द्वादशलक्षणीगतानामधिकरणानां विषयाणाञ्च विवेचनं कृत्वा चालिनीन्यायेन वार्तिकोक्तार्थप्रपञ्चनाय आक्षेपव्याजेन स्थूणानिखननन्यायेन नानोदाहरणप्रदर्शनपूर्वकं वार्तिकोक्तलक्षणं प्रकारान्तरेण परिष्कृत्य व्यस्थापयति **विधिरसायनम्**। परन्तु पश्चात्तनैः विधिरसायनाक्षेपाः संप्रदायविरुद्धाः इति मत्वा विधिरसायनखण्डनमण्डनपराः ग्रन्थाः लिखिताः। तेषु केचन विधिरसायनदूषणपराः। अपरे केचन विधिरसायनभूषणपराः। इतरे केचन विधिरसायनदूषणमकृत्वा भूषणं वा अकृत्वा प्राचीनाचार्याद्युक्तरीत्या स्वयुक्त्या च सह विधिस्वरूपनिरूपणपराः दृश्यन्ते। तेषु विधिचमत्कारचन्द्रिकाग्रन्थः विधिरसायनं दूषयति। "यत्तु विधिरसायने व्रीहिन् प्रोक्षति व्रीहिनवहन्तीति विधीनाम पूर्वनियमविधी, तद्विधेययोर्मन्त्रवर्णप्राप्तत्वात्" इत्युक्तम्, तदापातचमत्कारमात्र" मिति उपक्रममाणोऽयं ग्रन्थ अमुद्रितः मद्रासपुस्तकालये

लभ्यते। अस्य कर्ता श्रीवत्सगोत्रजः चक्रवर्तिवंशजः श्रीनिवासार्यपुत्रः **नायनार्य** इति प्रसिद्धः **नारायणाचार्यः**।

१५५. **विधित्रयपरित्राणम्**। ग्रन्थोऽयं विधिरसायनखण्डनपरः। अत्र त्रयाणामपूर्व नियम परिसंख्या विधीनां लक्षणानि परिष्कृतानि, तेषां वार्तिकात् लाभप्रकारमभिधाय विधिरसायनोक्तदूषणान्यनूद्य परिहृतानि। क्वचित् खण्डदेवं विमृशति। सव्याख्योऽयं ग्रन्थः अमुद्रित मद्रासपुस्तकालयेषु लभ्यते। अस्य कर्ता पूर्वोक्तः मीमांसामकरन्द-विश्वगुणादर्शादिकर्ता **वेङ्कटाध्वरी**।

१५६. **विधिदर्पणम्**। ग्रन्थोऽयं विधिरसायनदूषणपरः विधिरसायनोक्तानि दूषणानि अपाकृत्य अपूर्वनियमपरिसंख्याविधीनां निष्कृष्टानि लक्षणानि प्रतिपादयति। अस्य कर्ता पूर्वोक्तः मीमांसासर्वस्वकर्ता कोल्लूर नारायणशस्त्री।

१५७. **विधिभूषणम्**। ग्रन्थोऽयमुद्रितः मद्रासपुस्तकालये लभ्यते। ग्रन्थोऽयं विधिर-सायनोक्तान् आक्षेपान् परिहृत्य सम्भावितदोषनिरासपूर्वकं वार्तिकोक्तं विधिभेदलक्षणं स्थापयति। अस्य कर्ता मीनाक्षीवल्लभपौत्रः रामचन्द्रपुत्रः लक्ष्मणार्यशिष्यः भारद्वा जगोत्रजः **वेङ्कटनारायणो** अष्टादशशतकीयः (AD 1711) मदुरावासीति ज्ञायते।

१५८. **विधिरत्नावली**। विधिरसायनखण्डनपराणां ग्रन्थानां समालोचनेन विधिरसायनोक्तदूषणोद्धारेण च विधिलक्षणस्थिरीकरणार्थ प्रवृत्तोऽयं ग्रन्थः नारायणशास्त्रि कृतस्य विधिदर्पणस्य खण्डनं कृत्वा रसायनोक्तानां अर्थानां दूषणान्युद्धार्य विधिरसायनं मण्डयति। ग्रन्थोऽयममुद्रित मद्रासपुस्तकालये लभ्यते। अस्य कर्ता वाधूलगोत्रजः नृसिंहार्यपुत्रः लक्ष्मणार्यशिष्यः **श्रीनिवासदासः**।

१५९. **विधिरसायनम्**। मीमांसादर्शनस्य विधिरेव परमं सर्वस्वं मुख्यं प्रीतिपात्रञ्च। अत एव विधिनात्वेकवाक्यत्वात् इत्यादिसूत्रेण अर्थवाद-मन्त्रनामधेयानां स्मृति सदाचारात्मतुष्टीनाञ्च विध्यन्तर्भावः विधिमूलकत्वेन प्रामाण्यञ्च स्वीकृतम्। न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेण अर्थवत्ता दृष्टा उपपन्ना वा? इत्यप्युच्यते। अज्ञातज्ञापकत्वे सति अप्रवृत्तप्रवर्तकत्वं **विधित्वम्**, प्रवर्तकत्वपर्याप्त्यधिकरणीभूतार्थवाद मन्त्रनामधेयोपेतं

विधिवाक्यमिति, तदर्थः शब्दभावनेति भाट्टाः, कार्यमिति प्राभाकराश्च वदन्ति। तत्राधारा-ग्निहोत्राधिकरणसिद्धान्तसूत्रवार्तिके (२/२/१६) अष्टौ विधिप्रकारान् आपाद्य मन्त्राधिकरणस्थपरिसंख्यासूत्रोक्तः (१/२/४२) विधिभेदस्सिद्धान्तितः-विधिरत्यन्तमप्राप्ते नियमः पक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते। इति। एतेषां उदाहरणानि वर्णितानि। अत्र अव्याप्त्यादिदोषानुद्भाव्य तेषां परिहारञ्च यथासम्भवमुपपाद्य उदाहरणान्तरप्रदर्शनमुखेन वा लक्षणोदाहरणव्याजेन द्वादशाध्यायगतानां अधिकरणानां विषयाणाञ्च चालिनीन्यायेन विवेचनं कृत्वा वार्तिकोक्तार्थप्रपञ्चनाय वार्तिकोक्तार्थाक्षेप-व्याजेन स्थूणानिखननन्यायेन नानोदाहरणप्रदर्शनपूर्वकं वार्तिकोक्तलक्षणं प्रकारान्तरेण परिष्कृत्य व्यवस्थापयति विधिरसायननामायं ग्रन्थः। चतुश्चत्वारिंशद्भिः श्लोकैः परिमितोऽयं ग्रन्थः वाराणस्यां मुद्रितः। अस्य रचयिता उपक्रमपरक्रमकर्ता प्रसिद्धः **प्रथमाप्पय्यदीक्षितः**।

१६०. विधिरसायन व्याख्या – **सुखोपयोजिनी**। मूलग्रन्थकृता प्रसिद्धेन **प्रथमाप्प-य्यदीक्षितेन** कृतेयं व्याख्या विभागत्रयेण विभक्ता। तत्र प्रथमभागे अपूर्वनियम-परिसंख्याविधित्रयाणां लक्षणमाक्षिप्तम्। द्वितीयभागे तेषां विधीनामुदाहरणानि आक्षिप्तानामाक्षेपाणां परिहारः त्रयाणां विधीनां असङ्कीर्णानि निष्कृष्टानि च लक्षणानि प्रदर्शितानि। विनेमां व्याख्यां मूलावगतिर्न सुकरा। मुद्रितेयं समूला वाराणस्याम्। क्वचित् मातृकायां व्याख्याया अस्याः **रसोपजीविनीति** नामान्तरं दृश्यते।

१६१. **विधिरसायनदूषणम्**। लघुकायोऽयं ग्रन्थः चौखम्बा मुद्रणालये मुद्रितः। अत्र विधिरसायनोक्तानि वार्तिकलक्षणोपरि उद्भवितानि अव्याप्त्यादिदूषणानि परिहृतानि कृत्वा वार्तिके जरन्मीमांसकाद्युक्तानि लक्षणानि अदुष्टानीति स्थापितानि। नाम्नैवायं ग्रन्थः विधिरसायनदूषणपर इति ज्ञायते। परन्तु अत्रोक्तानि दूषणोद्धाराणि दूषणानि च प्रभावल्याम्, दुरूहशिक्षायाञ्च खण्डितानीत्ययं विशेष उल्लेखार्हः। अस्य कर्ता पूर्वोक्तबालप्रकाशकर्ता **शङ्करभट्टः**।

१६२. **विधिरसायनभूषणम्।** मीमांसाविधिभूषणमित्यपर..नायं ग्रन्थ अमुद्रितः वाराणसी सरस्वतीभवन ग्रन्थालयेऽस्ति। अस्य कर्ता मङ्गनाथभट्टपुत्रः कृष्णभट्टपौत्रः **गोपालभट्टः** सप्तदशशतकीयः (AD 1700)। एवं **फलसाङ्कर्यखण्डन**मितिनामकः ग्रन्थः विधिरसायनं भूषयति। स च कमलाकर भट्टपुत्रेण **अनन्तभट्टेन** अष्टादशशतकीयेन (AD 1715) कृतः।

१६३. **विधिविचाराख्यः** ग्रन्थ अज्ञातकर्तृनामा अमुद्रितस्सरस्वती महालये लभ्यते।

१६४. **विधिविवेकः** । विध्यर्थमात्रविचाराय प्रवृत्तोऽयं ग्रन्थः। अत्र प्रसङ्गात् कतिपयपदार्थतत्त्वं विमृश्य मीमांसासूत्रपूर्वषट्कप्रतिपद्यमर्थञ्च ईषत् उपवर्ण्य कुमरिलभट्टसम्मतशब्दभावनायाः प्राभाकरसम्मतनियोगस्य च विध्यर्थत्वं निरस्य इष्टसाधनत्वमेव विध्यर्य इति निरूपितम्। मुद्रितोऽयं ग्रन्थः वाराणस्याम्। अस्य कर्ता साम्प्रदायिकरीत्या श्रीशङ्कराचार्येण वादे विजित्य तच्छिष्यत्वेन गृहीतः सुरेश्वर इति प्रसिद्धः पूर्वाश्रमे कर्मठः **मण्डनमिश्र** इति वक्तव्यम्। परन्तु आधुनिकानां विमर्शकानां रीत्या मण्डनमिश्र अन्यः **मण्डन** अन्य इति **निश्चयः**। सर्वथा सप्तमशतकाष्टम-

शतकान्तरालवर्ती (AD 615-710) स्यात्। एनमधिकृत्याधिकं मदीयाद्वैतवेदान्त-सहित्यात् ज्ञेयम्।

१६५. **विधिविवेकव्याख्या-न्यायकणिका**। मूलग्रन्थावबोधने अतीवोप-कुर्वतीयं व्याख्या तत्र तत्र मूलाशयं विस्तृतावतरणपूर्वकमुपपादयन्ती प्रसङ्गात् बौद्धादीनं निरालम्बनादिवादञ्च खण्डयन्ती शास्त्ररसिकानां विमर्शकानाञ्चातीवोपकारिणी। समूलेयं वाराणस्यां मुद्रिता। अस्याः कर्ता षड्दर्शनीव्याख्यातृत्वेन प्रसिद्धः भामत्यादिकर्ता त्रिलोचनशिष्यः नृगभूपतिसामयिकः अष्टमनवमशतकीयः (AD 800-900) वाचस्पति-मिश्रः। मदीये अद्वैतवेदान्तसाहित्ये वाचस्पतिमिश्रमधिकृत्याधिकं द्रष्टव्यम्।

१६६. विधिविवेक**न्याय कणिकाव्याख्या - जुषध्वङ्करणी स्वदितङ्करणी**। आदितः कृतायाः व्याख्यायाः नाम जुषध्वङ्करणीति मध्यादान्ता व्याख्या स्वदितङ्करणीति च आख्यायते। अमुद्रितेयं मद्रासपुस्तकालये लभ्यते। अस्याः कर्ता ऋषिगौरीपुत्रः भवदासमातुलः शङ्करपूज्यपादशिष्यः केरलीयः चतुर्दशशतकीयः (AD 1300-1400) **प्रथमपरमेश्वरः**।

१६७. **विधिविवेकः**। शास्त्रारम्भसमर्थनादारभ्य अतिदेशविचारान्तैस्ससप्तभिः परिच्छेदैः पूर्णोऽयं भाट्टमतानुसारी विधिवाक्यार्थनिरूपणपरो ग्रन्थ अमुद्रित अडयार पुस्तकालये लभ्यते। अस्य कर्ता कोल्लूरिकुलतिलकसोमयाजिपुत्रः अच्चमाम्बागर्भजः **नारायणशास्त्री** विधिदर्पणादिकर्ता पूर्वोक्तः।

१६८. **विधिविवेकः**। सुब्रह्मण्यसूरिशिष्येण रामेश्वरेण रचितोऽयं ग्रन्थः। ग्रन्थस्यास्य विधिरसायनदूषणे न तात्पर्यम्। परन्तु मान्यताबुध्या विध्यर्थपरिशीलने एव तात्पर्यं दृश्यते। अमुद्रितोऽयं मद्रासपुस्तकालये लभ्यते।

१६९. **विधिसुधाकरः**। अनन्ताचार्येण कृतेऽमुद्रिते मद्रास पुस्ताकालस्थेऽस्मिन् ग्रन्थे भाट्टमतानुसारिविधिनिषेधार्थवादविचाराः दृश्यन्ते।

१७०. **विधिसृष्टिः**। अर्पणमीमांसायां ग्रन्थकृता बाबादेवेन निर्दिष्टोऽयं ग्रन्थः न कुत्रापि लभ्यते।

१७१. **विधिस्वरूपविचार:**। विधिवादार्थ इत्यपरनामायं ग्रन्थः महानैयायिकेनापि जीवाचार्यपुत्रेण हरिरामतर्कवागीशशिष्येण षोडशसप्तदश शतकवासिना गदाधरभट्टाचार्येण कृतो मीमांसाग्रन्थः बरोडा-कलकत्तयोः प्रकाशितः। एनमधिकृत्य मदीया दर्शनमञ्जरी द्रष्टव्या।

१७२. **विभ्रमविवेक:**। ख्यातिपञ्चकनिरूपणपरोऽयं ग्रन्थः यद्यपि वेदान्तग्रन्थ इत्युच्यते तथापि मीमांसकाभिमतसिद्धान्तप्रदर्शनेन मीमांसायामपि समावेश्यते। ग्रन्थोऽयं मद्रासनगरे मुद्रितः। अस्य पूर्वोक्त: **मण्डनो वा मण्डनमिश्रो** वा कर्ता **अस्य व्याख्यापि** ऋषिपुत्र**द्वितीयपरमेश्वर**ेण कृतेति नीतितत्त्वाविर्भावव्याख्यायाः, तत्त्वविभावनायाश्च ज्ञातुं पार्यते। परन्तु आदर्शग्रन्थः न लभ्यते।

१७३. **विहारवापी**। **सुबोधिनी**त्यपरनामायं जैमिनिसूत्रवृत्तिरूपो ग्रन्थः वाराणसी-पण्डितग्रन्थमालायां प्रकाशितः। भाषया शैल्या च सुलभावगाह्योऽयं ग्रन्थः अर्थसंग्रह-व्याख्यात्रा रामेश्वरशिवयोगिना कृतः। **रामेश्वरयोगिन** एव आश्रमस्वीकारात् पूर्वं **शितिकण्ठ** इति नाम। सुबोधिनीरचनाकालः AD 1839 इति विद्यते। ततश्चायं एकोनविशंतिशत-कीयः।

१७४. **शास्त्रदीपिका**। सूत्राणि विहाय अधिकरणार्थमात्रनिरूपणे अयमेव ग्रन्थः प्रथमः। प्रायेण प्रत्यधिकरणं श्लोकेन श्लोकाभ्यां श्लोकैर्व विवक्षितमर्थं संगृह्य तद्विवरण-प्रायैर्वाक्यै पूर्वपक्षसिद्धान्तौ प्रवर्त्येते। क्वचित् सम्पूर्णमधिकरणं श्लोकात्मकम्। अत्र तन्त्ररत्नम्, न्यायरत्नमाला असकृत् निर्दिष्टा। पाण्डित्यपूर्णोऽयं ग्रन्थः मीमांसासूत्रभाष्य-वार्तिकानां रहस्यं मार्मिकतया प्रकटीकरोति। प्राभाकरभाट्टवार्तिकानां मतगतांश्च विशेषान् तेषु तेषु स्थलेषु विशदीकरोति। न्यायाभासशब्देन प्राभाकरमतं निर्दिशन्नयं ग्रन्थः सर्वथा भाट्टानुयायीत्यत्र न संशयः। तत्र तत्र विशिष्य तर्कपादे स्फोटवादं वैशेषिकमतं अद्वैतं साङ्ख्यं बौद्धं औपनिषदम् यथावत् अनूद्य खण्डितं विद्यते। मीमांसाभिमतप्रमाणप्रमेयविचारः वेदापोरुषेयत्वेन साधितं वेदप्रामाण्यम्, प्रवृत्तिप्रयोजनप्राशस्त्यज्ञानेनार्थवादानां अनुष्ठानोपयोगिपदार्थस्मरणादिप्रयोजनेन मन्त्राणां प्रामाण्यमुपवर्णितम्। स्मार्तानामिव

श्रुत्यविरुद्धानां विधीनां सदाचारम्लेच्छप्रसिद्धि कल्पसूत्रव्याकरणादीनामपि प्रबलप्रमाणा-विरुद्धानां धर्मे प्रमाणता, उद्भिच्चित्राज्याग्निहोत्र श्येन वाजपेय वैश्वदेव शब्देषु नामधेयेषु धात्वर्थपरिच्छेदगुणफलसम्बन्धादिभिः सप्रयोजनेषु धर्मप्रमाणता, इत्यादि विषयाः पूर्वषट्कान्तर्गताः सर्वे सुविशदं वर्णिताः। उत्तरषट्कान्तर्गतांश्च विषयान् तत्तन्नामोचितान् प्रतिपादयन्नयं ग्रन्थः न्यायमालादीनां अधिकरणप्रधानग्रन्थानां मार्गदर्शी। मुद्रितोऽयं ग्रन्थः निर्णय सागरमुद्रणालये। अस्य कर्ता अधिकरणव्यवस्थापक इति प्रसिद्धः सर्वतन्त्र-स्वतन्त्रः पूर्वोक्तः यज्ञात्मपुत्रः शिष्यश्च तन्त्ररत्न-न्यायरत्नाकर-न्यायरत्नमालानां कर्ता एकादशशतकीयः **पार्थसारथिमिश्रः**।

१७५. **शास्त्रदीपिकाव्याख्याः। आलोकः**। नारायणभट्टपौत्रेण रामेश्वरभट्टप्रपौत्रेण भट्टपुत्रेण वाराणसीवासिना दादूभट्टापरनामधेयेन सप्तदशशतकवासिना (AD 1612) **कमलाकर भट्टेन** कृता अमुद्रिता अडयार पुस्ताकालये विद्यते।

१७६. शास्त्रदीपिकाव्याख्या - **कर्पूरवर्तिका** । अमुद्रितेयं व्याख्या सरस्वती महालये वर्तते। अस्याः कर्ता भवस्वामिद्वितीयपौत्रः सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षितस्य कामाक्ष्याश्च पुत्रः केशवदीक्षितार्धनारीश्वरयोरनुजः अर्धनारीश्वरशिष्यः तन्त्रशिखामणि कर्ता काव्यदर्पणरुक्मिणीकल्याणरघुनाथभूपविजयादिबहुसाहित्यग्रन्थानां रचयिता पूर्वोक्तः **राजचूडामणिदीक्षितः**। मदीये अद्वैतवेदान्तसाहित्येऽधिकं द्रष्टव्यम्।

१७७. शास्त्रदीपिकाव्याख्या - **दिनकरभट्टीया**। अमुद्रितेयं व्याख्या सरस्वती-महालये लभ्यते। अस्याः कर्ता सोमेश्वरभट्टप्रपौत्रः नारायणभट्टपौत्रः रामकृष्णभट्टोमाम्बयो पुत्रः कमलाकरभट्टभ्राता अनन्तभट्टपितृव्यः गागाभट्टपिता विश्वामित्रगोत्रजः (AD 1600-1700) सप्तदशशतकवासी **दिनकरभट्टः**। एनमधिकृत्य मदीया दर्शनमञ्जरी द्रष्टव्या।

१७८. शास्त्रदीपिकाव्याख्या - **प्रकाशः**। अमुद्रितोऽयं ग्रन्थः अडयार पुस्त-कालये लभ्यते। अस्य कर्ता रामेश्वरभट्टपौत्रः वृत्तरत्नाकरव्याख्यातुर्नारायणभट्टस्य

पितृव्यः वाराणसीवासी बालप्रकाशविधिरसायनदूषणादिकर्ता सप्तशशतकीयः (AD 1675) **शङ्करभट्टः**।

१७९. शास्त्रदीपिकाव्याख्या – **प्रभामण्डलम्।** प्रथमाध्याय पर्यन्तमेवामुद्रितोऽयं ग्रन्थ सरस्वतीमहालये लभ्यते। अस्य कर्ता काश्यपपगोत्रजः ऋग्वेदी यज्ञेश्वरभट्टपौत्रः चेर्कूरीवंशजः गङ्गाम्बिका – कोण्डुभट्टोपाध्यायपुत्रः प्रथमतिरुमलयज्वनः प्रपौत्रः द्वितीयतिरुमलयज्वनः अनुजः पितामहात् यज्ञेश्वरात् प्राप्तविद्यः कृष्णानदीतीरवासी षोडशशतकीयः (AD 1600) **यज्ञनारायणदीक्षितः**।

१८०. शास्त्रदीपिकाव्याख्या – **प्रभामण्डलम्।** अमुद्रितेयं व्याख्या अडयार सरस्वतीमहालयपुस्तकाललभ्या। अस्य कर्ता कृष्णानन्द शिष्यः चर्कूरीलक्ष्मीधर सहाध्यायी AD 1680 षोडश सप्तशशतकीयः **अनुभवानन्दः**। एनमधिकृत्य मदीयात् अद्वैत वेदान्त साहित्येतिहासग्रन्थात् अधिकं ज्ञातुं शक्यते॥

१८१. शास्त्रदीपिकाव्याख्या – **प्रभा**। अमुद्रितेयं व्याख्या अडयार पुस्तकालये लभ्यते। अस्य कर्ता बालकृष्णभट्टप्रत्रौत्रः विट्ठलभट्टपौत्रः रामचन्द्र (रामभट्ट) भट्टस्य पुत्रः पूर्वोक्तः न्यायबिन्दुकारः AD 1710 सप्तदशाष्टादशशतकीयः तत्सत्वैद्यनाथभट्ट-दीक्षितः।

१८२. शास्त्रदीपिकाव्याख्या – **प्रभावली**। अमुद्रितेयं व्याख्या अडयार पुस्तकालये लभ्यते। अस्य कर्ता आत्रेयगोत्रजः चण्डिकाम्बा कालनाथमिश्रयोः पुत्रः वाराणसीवासी **देवराजदीक्षित** इति परं ज्ञायते नातोऽधिकम्।

१८३. शास्त्रतीपिकाव्याख्या – **न्यायमञ्जरी**। अमुद्रितेयं व्याख्या अडयार पुस्तकालये लभ्यते। अस्याः कर्ता कोल्लूरी रधुनाथसोमयाजि – अच्चमाम्बयोः पुत्रः निट्ठल सोमनाथदीक्षितस्य (प्रायशः मयूखमालिका कर्तुः) शिष्यः पूर्वोक्तविधिविवेक-विधिदर्पणादि कर्ता AD 1630 सप्तदशशतकीयः **नारायणशास्त्री**।

१८४. शास्त्रदीपिकाव्याख्या – **मयूखमालिका**। व्याख्येयं प्रथमाध्यायस्य द्वितीयपादादारभ्य द्वादशाध्यायान्तं निर्णयसागरे मुद्रणालये मुद्रिता। अस्याः कर्ता विट्ठल-

गोत्रोत्पन्न: आन्ध्रदेशज: सूरुभट्ट महोपाध्याय मैरम्मदाम्बयो: पुत्र: सुरेश्वरयज्वन: प्रपौत्र: सोमनाथयज्वन: पौत्र: ज्येष्ठभ्रातुर्वेङ्कराद्रियज्वन: प्राप्तविद्य: विधिरसायनदूषणकर्ता **सोमनाथदीक्षित:** सप्तदशशतकवासी (AD 1640) इति ज्ञायते।

१८५. शास्त्रदीपिकाव्याख्या - **मयूखावली**। व्याख्येयममुद्रित अनाद्यन्ता च अडयार मद्रासपुस्तकालययो: लभ्यते। अस्या: कर्ता प्रसिद्ध: प्रथमाप्पय्यदीक्षित इति तत्र निर्दिष्टम्। परन्तु प्रथमाप्पय्यदीक्षितकृतित्वसाधकं प्रबलं प्रमाणं आदर्शग्रन्थान्नोपलभ्यते। प्रकाशनसमये सोमनाथीयेन तुलनात्मकं विशिष्टमध्ययनं सम्पादकेन कर्तव्यम्।

१८६. शास्त्रदीपिकाव्याख्या - **युक्तिस्नेहप्रपूरणी** अथवा सिद्धान्तचन्द्रिका। इदानीं पठनपाठनादिप्रणाल्यां उपयोगिनी व्युत्पादिका चेयं व्याख्या निर्णय सागरमुद्रणालये मुद्रिता। तर्कपादस्य परं लभ्यते मुद्रिता च। अस्या: कर्ता पराशरगोत्रज: नारायणरमयो: पौत्र: माधवप्रभावत्यो: पुत्र: मालवादेशवासी वाराणस्यां गजपतिसभायां प्राप्तपण्डित-शिरोमणिविरुद: AD 1700 सप्तदशशतकीय: **रामकृष्णभट्ट:**।

१८७. सिद्धान्तचन्द्रिका अथवा युक्तिस्नेहप्रपूरणीव्याख्या **गूढार्थविवरणम्।** व्याख्येयं मूलकारेण रामकृष्णभट्टेनैव स्वकृतव्याख्याया: व्याख्या कृता मुद्रिता च निर्णयसागरे।

१८८. शास्त्रदीपिकाव्याख्या - **प्रकाश:** - **प्रवेश** इत्यपरनामायं ग्रन्थ: AD 1700-1800 कालिकेन **चम्बकनाथेन** कृत अमुद्रित भारतीयपुस्तकालये लण्डननगरे वाराणसी सरस्वती भवन पुस्तकालये च लभ्यते।

१८९. शास्त्रदीपिकाव्याख्या - **प्रकाश:**। विशिष्टाद्वैतसिद्धान्तपण्डितेन न्यायवेदान्त-दर्शनग्रन्थकर्त्रा श्रीनिवासाचार्यात् प्राप्तदीक्षेण गङ्गाधरशास्त्रिण: प्राप्तविद्येन पञ्जाप्वासिना AD 1907 कालीनेन **सुदर्शनाचार्येण** कृतेयं व्याख्या वारणस्यां विद्याविलासमुद्रणालये मुद्रिता। तर्कपादान्तं लभ्यते।

१९०. शास्त्रदीपिकव्याख्या - **प्रकाश:**। पदवाक्यप्रमाणपारावारीणेन रामेश्वर भट्टामाम्बयो: पुत्रेण वृत्तरत्नाकरव्याख्यात्रा वाराणसीवासिना **द्वितीय नारायणभट्टेन**

कृतेयं प्रकाशभिधा शास्त्रदीपिकाष्टमाध्यायव्याख्या।

१९१. शास्त्रदीपिका**व्याख्या** - आधुनिकेन **भीमाचार्येण** काचन कृतेति श्रूयते। प्राप्तिस्थानादि ज्ञातुं न पार्येते।

१९२. अन्या काचन शास्त्रदीपिकाव्याख्या अज्ञातकर्त्रभिधा सोमनाथदीक्षितीयं व्याख्यानं प्रमाणयति। अमुद्रितेयं सरस्वतीमहालये लभ्यते।

१९३. **शास्त्रमाला**। अधिकरणसारात्मकस्सूत्रवृत्तिरूपोऽयं ग्रन्थ अमुद्रित सरस्वतीमहालये लभ्यते। अस्य कर्ता रामेश्वरभट्टपौत्रः नारायणभट्टपुत्रः अनन्तभट्टपिता गागाभट्टस्य पितृव्यः वाराणसीवासी दादूभट्ट इति प्रसिद्ध शास्त्रदीपिकालोक-राणक खण्डनपर भावार्थादिकर्ता AD 1650 सप्तदशशतकीय **कमलाकरभट्टः**।

१९४. **शास्त्रमालाव्याख्या ज्योत्स्ना**। व्याख्येममुद्रिता सरस्वतीमहालये लभ्यते। अस्याः कर्ता पूर्वोक्तकमलाकरभट्टस्य पुत्र अनन्तभट्टः।

१९५. **शास्त्रोपन्यासमालिका**। प्राभाकरमतानुयायी नीतितत्वाविर्भावतद्-

व्याख्यानुसारी सूत्राधिकरणार्थसंग्रहरूपोऽयं ग्रन्थ अमुद्रित मद्रासपुस्तकालये लभ्यते। अस्य कर्ता सुब्रह्मण्यशिष्य**स्सुब्रह्मण्य**:।

१९६. **षोडशाध्यायी**। पूर्वोत्तरमीमांसाध्यायार्थप्रतिपादकोऽयं ग्रन्थः भाट्टमतानुयायी अज्ञातग्रन्थकर्तृनामा अमुद्रित अडयार पुस्तकालये लभ्यते।

१९७. **षोडशाध्यायी विवरणम्**। पूर्वोत्तरमीमांसाध्यायायार्थप्रतिपादकोऽयं ग्रन्थः शङ्करानुसारी सन्नपि क्वचित् शंकरात् भिद्यते। शङ्करानुमतं साधनचतुष्टयसम्पत्यनन्तरमिति अथशब्दार्थंत्यक्त्वा धर्म विचारानन्तरमिति अर्थं स्वीकरोति। अज्ञातग्रन्थ-कर्तृनामापि ग्रन्थकर्ता केरलीय इत्यूहितुमस्त्यवकाशः। अमुद्रित अडयारपुस्तकालये लभ्यते।

१९८. **सुबोधिनी**। मीमांसासूत्रवृत्तिरूपोऽयं ग्रन्थः पण्डितग्रन्थमालायं वाराणस्यां मुद्रितः। अस्य कर्ता रामेश्वरसूरिति दृश्यते। परन्तु विशिष्यैनमधिकृत्य न ज्ञातुं पार्यते। अर्थसंग्रहव्याख्याकौमुदीकारस्य रामेश्वरमिश्र इति नाम दृश्यते स एवायमिति स्यात् इति संशयस्यापि स्थानमस्ति।

१९९. **सेश्वरमीमांसा**। यद्यपीदं ग्रन्थरत्नं मीमांसादर्शनपरिगणनयोग्यं न भवति, शाबरभाष्य भाट्टप्राभाकरसम्प्रदायाननुगतं सत् केवलजैमिनिसूत्राण्येव प्रधानतया स्वीकृत्य प्रवृत्तत्वात्। प्रायशः मीमांसादर्शनं निरीश्वरवादि इति प्रथा लोके दृश्यते। तत्रेदमेकमेव मुख्यं कारणम् यत्-मीमांसादर्शने वेदापौरूषेयत्वम्, स्वतः प्रामाण्यम्, शब्दनित्यत्वादयः प्रधानतया स्वीक्रियन्ते तत्संरक्षणाय यज्ञकर्म प्रधानम्, देवताश्रुतिर्गौणी, फलदाने कर्मैव प्रधानम्, देवता तु गुणभूता इति स्वीकृता। शाबरभाष्यादौ अत एव ईश्वरविषयकस्य विचारस्य प्राधान्यं न स्वीकृतम्। ततश्च मीमांसादर्शनं ईश्वरानङ्गीकारि दर्शनमिति वा निरीश्वरवादिदर्शनमिति वा अपप्रथा दर्शनसंसारे सञ्जाता। परन्तु अध्वरमीमांसाकुतूहलवृत्तौ शास्त्रदीपिकान्यायसुधाभाट्टदीपिकादौ ईश्वरास्तित्वं वर्णितम्। परन्तु आनुमानिक ईश्वरः निराकृतः, शाब्द-वेदशब्दबोधितस्य ईश्वरस्य प्रामाण्यं स्वीकृतम्। सेश्वरमीमांसा तु ईश्वरसाधनाय पूर्वोत्तरमीमांसयोरैकशास्त्रत्वं स्वीकृत्य षोडशलक्षण्येव मीमांसादर्शनमिति साधयति। तत्साधनाय युक्तीः रामानुजभाष्यादिभ्यः प्रमाणञ्च वर्णयति। परन्तु रामानुजेन

शाबरभाष्यवत् मीमांसादर्शनं न व्याख्यातम्, न भाष्येण स्वीयेण पोषितम्। विषिष्टाद्वैत-सिद्धान्तस्थापनाय प्रवृत्तम्। अस्यां स्थितौ शाबरभाष्य-भाट्टसिद्धान्त-प्राभाकरसिद्धान्तानां खण्डनं कृत्वा शास्त्रदीपिकादीनां खण्डनेन साकं श्रीभाष्यं प्रमाणं स्वीकृत्य मीमांसासूत्राणां स्वाभिमतेश्वरसाधनाय पूर्वोत्तरमीमांसयोरैकशास्त्रत्वसाधनाय च प्रवृत्तोऽयं ग्रन्थः मीमांसा-दर्शने नूतनसम्प्रदायप्रवर्तक इत्येव वक्तव्यम्। मुद्रितोऽयं ग्रन्थः प्रथमाध्याय-द्वितीयपादपर्यन्तं काञ्चीपुर्याम्, दिल्लीनगर्याञ्च। अस्य रचयिता भगवद्रामानुजाचार्यादनन्तरं विशिष्टाद्वैतसिद्धान्त-प्रचारप्रसारधुरीणः काञ्चीपुरमण्डलान्तर्गततूप्पिलनामकग्रामाभिजनः **मीमांसापादुकाख्य-पद्य**मयमीमांसाग्रन्थनिर्माता न्यायपरिशुध्यादिग्रन्थप्रणेता अनन्तसूरितोतारम्बयोः पुत्रः त्रयोदशशतकीयः (AD 1269-1369) **वेङ्कटनाथा**मिधः **वेदान्तदेशिकः**।

**अज्ञातग्रन्थकर्तृनामानः** केचन ग्रन्थाः तत्र तत्र पुस्तकालयेषु लभ्यन्ते। तेषां विवरणमधस्ताद्दीयते।

२००. **अग्न्याधेयादिविचारः**। ग्रन्थोऽयमज्ञातकर्तृ नामा अडयारपुस्तकालये लभ्यते।

२०१. **अध्वर मीमांसासूत्रार्थदीपिका**। ग्रन्थोऽयं मद्रास पुस्तकालये लभ्यते।

२०२. **अभ्युदयेष्टि विचारः**। ग्रन्थोऽयं सरस्वतीमहालयेऽस्ति।

२०३. **अंशत्रयविचारः**। ग्रन्थोऽयं मद्रास पुस्तकालये लभ्यते।

२०४. **ग्रन्थयोजना**। शाबरभाष्य व्याख्यात्मकोऽयं ग्रन्थः मद्रास पुस्तकालये लभ्यते।

२०५. **उच्छृङ्खलवादः**। सरस्वतीमहालये लभ्यते।

२०६. **गुणविधिविचारव्याख्या**। अयमपि तथा।

२०७. **गुरुमतसङ्क्षेपः**। अयमपि तथा।

२०८. **गुरुसम्मतपदार्थः**। अज्ञातकर्तृनामायं ग्रन्थः तिरुवनन्तपुर संस्कृतग्रन्थमालायां मुद्रितः।

२०९. **जैमिनीयसूत्रवृत्तिः**। मद्रास पुस्तकालये लभ्यः।

२१०. **द्वादशलक्षण्यर्थसङ्क्षेपः**। सरस्वतीमहालयेऽस्ति।

२११. **मानरत्नावली**। बौद्ध प्राभाकर नैयायिकाद्वैतिमतपरिशीलनपूर्वकं भाट्टमतं स्थापयत्ययं ग्रन्थः। मद्रासपुस्तकालये प्राप्यः।

२१२. **मीमांसाधिकरणन्यायविचारः**। मद्रासपुस्तकालयेऽस्ति।

२१३. **मीमांसाविषयः**। नीतितत्त्वाविर्भावानुसारी प्राभाकरसिद्धान्तानुसारी चायं ग्रन्थः मद्रासपुस्तकालये भवति।

२१४. **सिद्धान्तदृष्टिः**। श्लोकैरधिकरणार्थसंग्राहकोऽयं ग्रन्थः मद्रासपुस्तकालयेऽस्ति।

**विभिन्न ग्रन्थेषु निर्दिष्टाः अलभ्याः ग्रन्थाः।**

२१५. **कुसुमाञ्जलिः**। जैमिनिसूत्रवृत्तिरूपोऽयं ग्रन्थः गागाभट्टेन भाट्टचिन्तामणौ स्वकृतित्वेन निर्दिष्टः।

२१६. **जैमिनिसूत्रभाष्यम्**। वल्लभाचार्येण कृतमिति कर्ममीमांसाख्यग्रन्थे निर्दिष्टम्।

२१७. **तत्त्वबिन्दुटीका**। अलभ्येयं टीका न्यायवार्तिकभूमिकायां विन्ध्येश्वरीप्रसादेन निर्दिष्टा।

२१८. **तन्त्रसारः**। भट्टसोमेश्वरेण कृतोऽयं ग्रन्थ इति तन्त्रवार्तिकव्याख्या न्यायसुधा(राणक)यां निर्दिष्टः।

२१९. **न्यायमुक्तावली**। सङ्कर्षकाण्डव्याख्यात्मकोऽयं ग्रन्थः काव्यदर्पणे राजचूडामणिदीक्षितेन निर्दिष्टा।

२२०. **न्यायसमुच्चयः**। तत्त्वबिन्दुव्याख्यात्मकोऽयं ग्रन्थः तत्त्वबिन्दुव्याख्या-तत्त्वविभावनायां द्वितीयपरमेश्वरेण निर्दिष्टः।

२२१. **प्रकाशः। प्राभाकरामृतवाहिनी**। लक्ष्मणार्येण कृतोऽयमिति सौन्दर्यलहरी व्याख्यालक्ष्मीधरायाः पुष्पिकातः ज्ञायते।

२२२. **बालभास्करः**। अज्ञात कर्तृनामायं ग्रन्थः मद्रासपुस्तकालये लभ्यते।

२२३. **बालभास्करव्याख्या-प्रभा**। अयमपि तथा।

२२४. **भवदासः**। श्लोकवार्तिके वृत्तिकारतया देवस्वामिना सङ्कर्षकाण्डभाष्ये च निर्दिष्टोऽयं जैमिनिसूत्राणां वृत्तिकार इति ज्ञायते ग्रन्थः न लभ्यते।

२२५. **भर्तृमित्रः**। मीमांसाभाष्यकर्तेति प्रसिद्धः। कुमरिलभट्टेन जयन्तभट्टेन च निर्दिष्टस्यास्य ग्रन्थस्त्वलभ्यः।

२२६. **मीमांसाकारिका**-४२ पद्यैः मीमांसार्थसंग्राहकोऽयं ग्रन्थः अज्ञातकर्तृकः कर्ममीमांसायां निर्दिष्टः।

२२७. **श्रीकरः**। प्रभाकरानुयायी अयम्। भवनाथभट्टीयनयविवेके, चन्द्राचार्येण अमृतबिन्दौ मुरारिमिश्रद्वितीयेन त्रिपादीनीतिनयने एकादशाध्यायाधिकरणे च निर्दिष्टोयम्। ग्रन्थस्तु नोपलभ्यते।

२२८. **सङ्कर्षमुक्तावली**। न्यायमुक्तावलीत्यपरनामायं ग्रन्थः राजचूडामणिदीक्षितेन काव्यदर्पणे स्वकृतित्वेन निर्दिष्टः न लभ्यते च।

इति न्यायव्याकरणवेदान्तशास्त्रेषु प्राप्तशिरोमण्युपाधिना मीमांसापण्डितेन अद्वैतवेदान्तसाहित्येतिहासदर्शनमञ्जरीप्रथमभाग-भारतीयदर्शनेषु प्रत्यक्षप्रमाण विमर्शादि-ग्रन्थ लेखकेन भारतीयदार्शनिकानुसन्धान परिषदः पण्डितेन शास्त्र-चूडामणिपण्डितेन मद्रपुरी विश्वविद्यालयात् सेवानिवृत्तेन स्वातन्त्र्यदिवसे माननीय भारतराष्ट्रपति-सम्मानितेन (15th August 1994) पद्मश्री सुधाराणीरघुपतिस्थापितभरतालयप्राध्यापकेन-"भरतकलानिपुण"-उपाधि भूषितेन, विश्वविद्यालयानुदानसमिति (UGC) प्राध्यापकेन, अडयार-अनुसन्धानकेन्द्रपुस्तकालय प्राध्यापकेन र. तङ्गस्वामिशर्मणा कृतेयं दर्शनमञ्जरी **चतुर्थभागापरनामा मीमांसादर्शनसमीक्षात्मिका मीमांसामञ्जरी** 31/5/90 शुभदिने समाप्तिं गता भारतीयदार्शनिकानुसन्धानपरिषत्सेवायां विद्वत्सेवायाञ्च समर्पिता।

**शुभं भूयात्**

## तिथिक्रमानुसारी मीमांसा-ग्रन्थ-ग्रन्थकर्तृनिर्देशः

एतेषां विवरणन्तु मीमांसाग्रन्थसम्पत्प्रकरणाज् ज्ञातव्यम्

मीमांसादर्शनसम्प्रदायः

**जैमिनि** BC 200-300

१. मीमांसासूत्राणि

**बोधायनः** BC 300

१. बोधायनवृत्तिः?

**उपवर्षः** AD 200 प्राक्

**शबरस्वामी** AD 200

१. शाबरभाष्यम्

**भवदासः** AD 100-200

१. सूत्रव्याख्या?

**भर्तृमित्रः** AD 300-600

१. सूत्रव्याख्या?

**कुमारिलभट्टः** AD 700

१. श्लोकवार्तिकम् २. तन्त्रवार्तिकम् ३. टुप्टीका

**मण्डनाचार्य** AD 700-800

१. मीमांसानुक्रमणिका २. भावनाविवेकः

३. विधिविवेकः ४. विभ्रमविवेकः

**उँवेकभट्टः** AD 670-760

१. श्लोकवर्तिकव्याख्या-तात्पर्यटीका २. भावनाविवेकटीका

**प्रभाकरमिश्रः** AD 650-750

१. बृहती (निबन्धनम्) २. लघ्वी (विवरणम्)?

**शालिकनाथः** AD 720-820

१. प्रकरणपञ्चिका २. दीपशिखा?

३. मीमांसासूत्रभाष्यपरिशिष्टम्

**वाचस्पतिमिश्रः** AD 800-900

१. तत्त्वबिन्दुः २. न्यायकणिका

**महाव्रती** AD 800-900

१. महाव्रती? २. प्राभाकरमतानुयायी? ग्रन्थः

**चन्द्राचार्यः** AD 900

१. अमृतबिन्दुः   २. न्यायरत्नाकरः

**सुचरितमिश्रः** AD 1000-1100

१. श्लोकवार्तिकव्याख्या–काशिका

२. तन्त्रवार्तिकव्याख्या–काशिका?

**देवस्वामी** AD 1050

१. सङ्कर्षकाण्डभाष्यम्

**पार्थसारथिमिश्रः** AD 1050-1120

१. न्यायरत्नाकरः   २. तन्त्ररत्नम्   ३. न्यायरत्नमाला

४. शास्त्रदीपिका

**भवनाथः** AD 1100

१. नयविवेक

**भवदेवभट्टः** AD 1100

१. तौतातीतमततिलकम्

**जयमिश्रः** AD 1100

१. शर्करिका

**हलायुधभट्टः** AD 1150-1220

१. मीमांसाशास्त्रसर्वस्वम्

**मुरारिमिश्रः** AD 1150-1220

१. त्रिपादीनीतिनयनम् २. एकादशाध्यायाधिकरण विचारः

**भट्टविष्णुः** AD 1200-1300

१. नयतत्त्वसंग्रहः

**चिदानन्दः** AD 1200-1300

१. नीतितत्त्वाविर्भावः

**नन्दीश्वरः** AD 1220-1300

१. प्राभाकरविजयम्

**परितोषमिश्रः** AD 1250

१. अजिता

**गङ्गाधरमिश्रः** AD 1200-1300

१. न्यायविवरणम्

**माधवाचार्यः** AD 1297-1388

१. जैमिनीयन्यायमाला

२. जैमिनीयन्यायमालाविस्तरः

**वेङ्कटनाथः ( वेदान्तदेशिकः )** AD 1269-1369

१. मीमांसापादुका  २. सेश्वरमीमांसा

**सोमेश्वरभट्टः** AD 1300-1400

१. राणकः  २. तन्त्रसारः

**प्रथमपरमेश्वरः** AD 1300-1400

१. जुषध्वङ्करणी  २. स्वदितङ्करणी

**द्वितीयपरमेश्वरः** AD 1400-1500

१. श्लोकवार्तिककाशिकाव्याख्या

**रविदेवः** AD 1400

१. नयविवेकव्याख्या

**इन्द्रपत्युपाध्यायः** AD 1450

१. मीमांसारसपल्वलम्

**भट्टकेशवः** AD 1450-1550

१. मीमांसार्थप्रकाशः

**देवनाथठक्कुरः** AD 1500

१. अधिकरणमाला

**देवनाथठक्कुरः** AD 1500-1580

१. अधिकरणकौमुदी

**तृतीयपरमेश्वरः** AD 1500-1600

१. विभ्रमविवेकव्याख्या? २. तत्त्वबिन्दुव्याख्या?

**रामानुजाचार्यः** AD 1500-1600

१. तन्त्ररहस्यम् २. नायकरत्नम्

**अप्पय्यदीक्षितः प्रथमः** AD 1520-1593

१. उपक्रमपराक्रमः २. चित्रपटः ३. धर्ममीमांसापरिभाषा?

४. पूर्वोत्तरमीमांसावादनक्षत्रमाला

५. पूर्वमीमांसाविषयसंग्रहदीपिका ६. विधिरसायनम्

७. सुखोपयोगिनी (रसोपजीविनी) ८. मयूखावली?

**अनन्तनारायणमिश्रः** AD 1550

१. विजया (अजिताव्याख्या)

**शङ्करभट्टः** AD 1550-1650

१. बालप्रकाशः २. विधिरसायनदूषणम्

३. प्रकाशः (शास्त्रदीपिकाव्याख्या)

**नारायणभट्टः** AD 1560-1656

१. निबन्धनम् (तन्त्रवार्तिकव्या)

२. विषमग्रन्थभेदिका (भावनाविवेकव्या)

**विजयीन्द्रभिक्षुः** AD 1574

१. उपसंहारविजयः २. न्यायाध्वदीपिका ३. मीमांसानयकौमुदी

**खण्डदेवः** AD 1575-1675

१. भाट्टदीपिका २. भाट्टरहस्यम् ३. मीमांसाकौस्तुभः

**राजचूडामणिदीक्षितः** AD 1580-1650

१. तन्त्रशिखामणिः २. कर्पूरवर्तिका ३. वार्तिकाभरणव्याख्या
४. सङ्कर्षमुक्तावली

**नारायणभट्टतिरि** AD 1590

१. मानमेयोदयप्रमाण परिच्छेदः

**वेंकटाध्वरी** AD 1590-1660

१. न्यायपद्मम् २. मीमांसामकरन्दः ३. विधित्रय परित्राणम्

**कमलाकरभट्टः ( दादूभट्टः )** AD 1590-1660

१. भावार्था २. आलोकः ३. शास्त्रमाला

**क्षीरसमुद्रवासी** AD 1500-1600

१. भाष्यप्रदीपः २. अर्थवादादिविचारः

**रघुनाथभट्टाचार्यः** AD 1600

१. मीमांसारत्नम्

**वरदराजः** AD 1600

१. नयविवेकव्याख्या

**अनन्तभट्टः** AD 1600

१. न्यायरहस्यम् २. फलसाङ्कर्यखण्डनम् ३. ज्योत्स्ना

**यज्ञनारायणदीक्षितः** AD 1600

१. प्रभामण्डलम्

**वेङ्कटेश्वरदीक्षितः** AD 1600

१. वार्तिकाभरणम्

**जीवदेवः** AD 1600-1670 १. भाट्टभास्करः

**पेद्दादीक्षितः** AD 1625-1725

१. भाट्टपरिभाषा

**राघवेन्द्रयति** AD 1623

१. भाट्टसंग्रहः

**रामकृष्णदीक्षितः** AD 1625-1700

१. मीमांसान्यायदर्पणम्

**नारायणशास्त्री** AD 1630

१. मीमांसासर्वस्वम् २. विधिदर्पणम् ३. विधिविवेकः

४. न्यायमञ्जरी

**गागाभट्ट** AD 1630

१. तन्त्रकौमुदी? २. भाट्टचिन्तामणिः ३. कुसुमाञ्जलिः?

४. शिवार्कोदयः?

**राजचूडामणिदीक्षितः** AD 1637

१. तन्त्रशिखामणिः २. कर्पूरवर्तिका ३. संकर्षमुक्तावली

**सोमनाथदीक्षितः** AD 1640

१. मयूखमालिका

**शम्भुभट्टः** AD 1640-1701

१. पूर्वमीमांसाधिकरणसंक्षेपः? २. प्रभावली

**दिनकरभट्टः** AD 1650

१. भाट्टदिनकरी २. शास्त्रदीपिकाव्याख्या दिनकरभट्टीया

**तृतीयाप्पय्यदीक्षितः** AD 1650

१. अतिदेशलक्षणविचारः २. तन्त्रसिद्धान्तदीपिका

३. दुरुहशिक्षा

**मुरारिः** AD 1650

१. अङ्गत्वनिरुक्तिः

**बाबादेवः** AD 1650

१. अधिकरणादर्शः २. अर्पणमीमांसा

**अनुभवानन्दः** AD 1680

१. प्रभामण्डलम्

**भट्टवैद्यनाथः** AD 1684

१. न्यायबिन्दुः २. प्रभा-शास्त्रदीपिकाव्याख्या

**गदाधरभट्टाचार्य** AD 1600-1700

१. विधिस्वरूपविचारः

**महादेववेदान्ती** AD 1600-1700

१. पूर्वमीमांसासूत्रव्याख्या

**कवीन्द्राचार्यः** AD 1600-1670

१. तन्त्रवार्तिकव्याख्या?

**शङ्करभट्टद्वितीयः** AD 1700

१. भाट्टभास्करः

**नीलकण्ठभट्टः** AD 1700

१. नीतितत्त्वाविर्भावटीका-मङ्गलटीका २. भाट्टार्कः

**नारायणसुधीः** AD 1700

१. भाट्टनयोद्योतः २. मानमेयोदये-मेयपरिच्छेदः

३. कौमारिलमतोपन्यासः

**आपदेवः** AD 1700

१. मीमांसान्यायप्रकाशः

**अन्नम्भट्टः** AD 1700

१. सुबोधिनी (तन्त्रवार्तिकव्याख्या) २. राणकोज्जीविनी

**रामकृष्णभट्टः** AD 1700

१. युक्तिस्नेहप्रपूरणी २. गूढार्थविवरणम् ३. अधिकरणकौमुदी

**गोपालभट्टः** AD 1700

१. तन्त्रवार्तिकव्याख्या? २. विधिरसायनभूषणम्

**वेङ्कटनारायणः** AD 1711

१. विधिभूषणम्

**अनन्तभट्टः** AD 1715

१. ज्योत्स्ना-शास्त्रमालाव्याख्या २. न्यायरहस्यम्

३. विधिरसायनभूषणम्

**नारायणशास्त्री कोल्लूर** AD 1670-1750

१. मीमांसासर्वस्वम् २. विधिदर्पणम् ३. विधिविवेकः

४. न्यायमञ्जरी-शास्त्रदीपिकाव्याख्या

**अनन्तदेवः** AD 1750

१. फलसाङ्कर्यखण्डनम् २. भाट्टालङ्कारः

**वासुदेवदीक्षितः** AD 1750

१. अध्वरमीमांसाकुतूहलवृत्तिः

**भास्करराय: ( भासुरानन्दः )** AD 1750

१. भाट्टचन्द्रिका २. भाट्टचन्द्रोदयः ३. वादकुतूहलम्

**कृष्णयज्वा** AD 1700-1760

१. मीमांसापरिभाषा

**श्रीनिवासाचार्यः** AD 1770

१. अरुणाधिकरणसरणिविवरणी

**चम्पकनाथः** AD 1710-1800

१. शास्त्रदीपिकाव्याख्या-प्रकाशः -प्रवेशः

**लक्ष्मणपण्डितः** AD 1700-1800

१. तन्त्रविलासः

**वाञ्छेश्वरयज्वा** AD 1798-1832

१. भाट्टदीपिकाव्याख्या-भाट्टचिन्तामणिः

**रामेश्वरयोगी ( शितिकण्ठः )** AD 1839

१. अर्थसंग्रहव्याख्या-अर्थकौमुदी

२. विहारवाणी (सुबोधिनी)

**यल्लुभट्टः** AD 1800

१. मीमांसासूत्रदीपिका

**वैद्यनाथपायुगुण्डे ( बालम्भट्ट )** AD 1800

१. पिष्टपशुनिर्णय

**स्वामिशास्त्री** AD 1800-1900

१. मत्वर्थलक्षणाविचारः (वादकुतूहलम्)

**वासुदेवशास्त्री-अभयंकरः** AD 1850-1950

१. मीमंसान्यायप्रकाशव्याख्या-प्रभा

**रामानुजाचार्य** AD 1850

१. तन्त्रनीतिलहरी २. पक्षपञ्चकनिरूपणम्

**रामानुजाचार्यपुत्रः** AD 1850

१. पक्षषट्कनिरूपणम्

**कृष्णताताचार्यः** AD 1875

१. भाट्टसारः

**वैद्यनाथशास्त्री** AD 1850-1950

१. शाबरभाष्यतर्कपादव्याख्या-प्रभा

**वीरराघवाचार्यः ( उत्तमूर )** AD 1850-1950

१. मीमांसान्यायप्रकाशव्याख्या-सुधास्वादः

**गङ्गानाथझा** AD 1871-1941

१. मीमांसानुक्रमणिकाव्याख्या-मीमांसामण्डनम्

**चिन्नस्वामिशास्त्री** AD 1878-1950

१. तन्त्रसिद्धान्तरत्नावली २. सारविवेचनी

**कृष्णनाथपञ्चाननः** AD 1898

१. अर्थप्रकाशिका-अर्थसंग्रहव्याख्या

**जीवानन्दविद्यासागरः** AD 1900

१. अर्थसंग्रहटीका

**सूर्यनारायणशास्त्री( पेरीसूर्यनारायणशास्त्री )** AD 1900-2000

१. भाट्टरहस्यव्याख्या-भावप्रकाशिका

**विद्याशङ्करभारती ( नरहरिशास्त्री )** AD 1937

१. सूत्रवृत्तिः -भावबोधिनी

**सुब्रह्मण्यशास्त्री** AD 1900-1985

१. भाट्टरहस्यव्याख्या-विषमग्रन्थिभेदिनी

**श्रीनिवासाचार्यः** AD 1900-2000

१. मानमेयोदयरहस्यश्लोकवार्तिकम्

**पट्टाभिरामशास्त्री** AD 1900-2000

१. अर्थालोकः अर्थसंग्रहव्याख्या २. मीमांसानयमञ्जरी

**मदनमोहनशर्मा** AD 1900-2000

१. मीमांसान्यायप्रकाशटिप्पणी

**भीमाचार्यः** AD 1900-2000

१. शास्त्रदीपिकाव्याख्या?

**प्रमथनाथतर्कभूषण** AD 1900-2000

१. अमला-अर्थसंग्रहव्याख्या

**सुदर्शनाचार्यः** AD 1907

१. शास्त्रदीपिकाव्याख्या-प्रकाशः

**ताताचार्यः** AD 1900-2000 (1922)

१. अर्थसंग्रहव्याख्या-तन्त्रप्रकाशिका

२. मीमांसापरिभाषाव्याख्या-परिष्कारः

# नवमं कुसुमम्

## न्यायसूची

| | |
|---|---|
| अङ्गगुणविरोधे च तादर्थ्यात् | जैमिनि सूत्र १२/२/९-२७ |
| अजात मिथ्यात्वसङ्केतश्च न संवादमपेक्षते | |
| अप्राप्ते तु विधीयन्ते बहवोऽप्ये कयत्नतः | |
| अभिक्रमणन्यायः | जै० सू० १-३-१० |
| अश्वैरपहृतं को हि गर्दभैः प्राप्तुमर्हति | |
| असञ्जात विरोधिन्यायः | जै० सू० ३/३/२ |
| आकृत्यधिकरणन्यायः | जै० सू० १-३- |
| आनर्थक्य प्रतिहतानां विपरीतं बलाबलम् | जै० सू० ३-१-९, १८ |
| उक्थ्याग्निष्टोमाधिकरणन्यायः | जै० सू० १०/५/१२ |
| उपजीव्य विरोधस्यायुक्तत्वन्यायः | जै० सू० १-३-७ |
| उभयोः गुणयोः मिथो विरोधे प्रथमश्रुतगुण एव ग्राह्यः न तु चरमश्रुतगुणः। | |
| एकवाक्यता न्यायः | जै० सू० २-२-४ |
| कपिञ्जलाधिकरणन्यायः | जै० सू० ११/१/६ |
| खले कपोतन्यायः | (मीमांसान्यायप्रकाशे) |
| गुणेत्वन्याय्य कल्पना | जै० सू० ९/३/१५ |
| गोबलीवर्दन्यायः | |
| गौणत्व शब्दस्य साधरणगुणमपहाय असाधारणगुणेनैव निर्वाह्य इति न्यायः | जै० सू० ३-५-६ |
| ग्रहैकत्वाधिकरणन्यायः | जै० सू० ३-१-७ |

| | |
|---|---|
| छत्रिन्यायः | (मीमांसान्यायप्रकाशे) |
| तत्प्रख्यन्यायः | जै॰ सू॰ १-४-४ |
| तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन इति न्यायः | |
| दर्विहोमन्यायः | जै॰ सू॰ ८/४ |
| धाता यथापूर्वमकल्पयत् | ऋग्वेद १०/१९०/३ |
| नागृहीतविशेषणा बुद्धिः विशेष्य उपजायते | शाबरभाष्ये १-३-३३ |
| निषादस्थपतिन्यायः | जै॰ सू॰ ६/१/५१ |
| प्रकरण विच्छेदापेक्षया मुख्यार्थ परित्यागः जघन्यः | जै॰ सू॰ ३/२/१ |
| प्रधानन्यायः | जै॰ सू॰ १२/२/९, २७ |
| प्रमाणबलाबलापेक्षया प्रमेय बलाबलं बलीयः | जै॰ सू॰ १/३ |
| प्रसङ्ग न्यायः | जै॰ सू॰ १२/ |
| प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः | |
| प्रोद्गातृन्यायः | जै॰ सू॰ ३/५/६ |
| बलाबलाधिकरणन्यायः | |
| भावार्थाधिकरणन्यायः | जै॰ सू॰ २-१-१ |
| भूयोऽनुग्रहन्यायः | जै॰ सू॰ १२/२/७, २४ |
| योगवृत्तिसम्भवे गौणीवृत्तिर्न कल्पनीया | |
| यः कल्पः स कल्पपूर्वः | |
| राजपुरोहिताधिकरण सिद्धन्यायः | जै॰ सू॰ ६-६-२ |
| रात्रिसत्रन्यायः | जै॰ सू॰ ४/३/६, १७ |
| वाक्यभेदापेक्षया लक्षणादोषो बलीयान् | |
| वाक्यार्थप्रतिपत्तिन्यायः | तन्त्रवार्तिके ३/१/१२ |
| विप्रतिषिद्धसमवाये भूयसां स्यात् सधर्मता | जै॰ सू॰ १२/२/७, २४ |
| विश्वजिन्न्यायः | जै॰ सू॰ ३/५/१५, ४/३/१५ |

व्यावर्तकले सम्भवति स्वरूप कथनमात्रार्थत्वं नयुक्तम्

शरकुशन्याय न्यायमालाविस्तरे १०/१/१, २ जै० सू० ६/६/२

श्रुतानुमानयोः श्रुतसम्बन्धो बलीयान्

संख्यामुष्ट्यधिकरणसिद्धन्यायः

सन्दंशन्यायः तन्त्रवार्तिके ३/१/२/४

सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते जै० सू० २/२/४

संयोग पृथक्त्वन्यायः

सर्वनाम्नां पूर्वप्रकृतपरामर्शित्वम् जै० सू० २/२/२३

सूचीकटाहन्याय (न्यायप्रकाशे)

## उद्धृतवाक्यानि

## ग्रन्थानुक्रमणिका

## ग्रन्थकारसूची

## रूपरेखासूची

# विशिष्ट शब्दानुक्रमणिका

# सहायक ग्रन्थसूची

**अद्वैतवेदन्त सहित्येतिहासः**, र० तङ्गस्वामिशर्मकृतः, मद्रपुरीविश्वविद्यालय संस्कृत माला, ३६, १८८०

**अध्वरमीमांस कुतूहलवृत्तिः**, वासुदेव दीक्षितकृता, श्रीरङ्गवाणीविलास मुद्रणमाला १, १९०८

**अर्थप्रकाशः** लौगाक्षिभट्टकेशवकृतः, ग्रन्थप्रदर्शिनी नूतनमाला २, १९१३

**अर्थसङ्ग्रहः**, लौगाक्षिभास्करकृतः, ओरियण्टल बुक एजन्सि पूने, १९४२

**अर्थसङ्ग्रहव्याख्या**–कौमुदी, रामेश्वरभिक्षुकृता, ओरियण्टल बुक एजन्सि, पूना, १९४२

**आपस्तम्बीय धर्मसूत्रणि**, आपस्तम्ब कृतानि, चौखाम्भा पुस्तकालयमाला ९३, वारणासी

**ऐतरेयब्राह्मणम्**, तिरुवनन्तपुर संस्कृत ग्रन्थमाला १६७

**खण्डन खण्डखाद्यम्**, श्रीहर्षकृतम्, षड्दर्शन प्राकाशन ग्रन्थमाला, वारणासी, १९७९

**गौतमधर्मसूत्राणि**, गौतमकृतानि, मैसूर विश्वविद्यालय प्राच्यभाषाग्रन्थालयमाला ५०, १९१७

**छान्दोग्योपनिषद्**, आनन्दाश्रम ग्रन्थमाला, १४, ७९, पूना, १९१५

**जैमिनिसूत्राणि**, जैमिनिः आनन्दाश्रम ग्रन्थमाला ९७, पूना, १९२९

**जैमिनीयन्यायमाला**, माधवाचार्यः, आनन्दाश्रम ग्रन्थावलिः २४, पूना, १८९२

**तत्त्वप्रदीपिका**, चित्सुखाचार्यः, षड्दर्शनप्रकाशप्रतिष्ठानमाला ३, वारणासी, १९७४

**तत्त्वसङ्ग्रहः**, शान्तरक्षितः, गैक्काडप्राच्य ग्रन्थमाला, ३०, ३१, १९२६

**तन्त्ररहस्यम्**, रामानुजाचार्यः, गैक्काड प्राच्य ग्रन्थमाला, २४९, १९२६

**तन्त्रवार्तिकम्**, कुमरिलभट्टः, आनन्दाश्रमग्रन्थावलि ९७, १९२९

**तर्कभाषा**, केशवमिश्र, संस्कृत प्राकृतग्रन्थमाला ८४, बम्बई, १९३७

**तर्कसङ्ग्रह**, आनन्दगिरिः, गैक्काड प्राच्यग्रन्थमाला, ३

**तर्कसङ्ग्रहदीपिका**, अन्नम्भट्टः बालमनोरमा मुद्रणालयमाला ४, मद्रास, १९२०

**तात्पर्यटीका** (न्यायवार्तिकव्याख्या), वाचस्पति मिश्रः, विजयनगर संस्कृतग्रन्थमाला १५, १८९८

**तार्किकरक्षा**, वरदराजमिश्रः, पण्डित संस्कृतग्रन्थमाला २१, वारणासी १९०३

**तैत्तरीय प्रतिशाख्यम्**, मैसूर राजकीय ग्रन्थलयमाला ३३, १९०६

**तैत्तरीयब्राह्मणम्**, मैसूर राजकीय ग्रन्थालयमाला ३६, ३८, ४२, १९०८-१३

**तैत्तरीयसंहिता**, मैसूरराजकीय ग्रन्थालयमाला ४-१८, १८९४-९८

**दर्शनमञ्जरी**, रु० तङ्गस्वामिशर्म मद्रास विश्वविद्यलय संस्कृतमाला ३८, १९८५

**नयनप्रसादिनी**-प्रत्यक्स्वरूपः, षड्दर्शिनी प्रकाशन प्रतिष्ठानमाला ३, वारणासी, १९७४

**नीतितत्त्वीविर्भावः**, परमेश्वरद्वितीयः, तिरुवनन्तपुरम् संस्कृतग्रन्थमाला १६८, १९५३

**नीलकण्ठीया** (प्रकाशिका), तर्कसङ्गदीपिकाव्याख्या निर्णयसागर पुस्तकालयः, बम्बई, १९२६

**न्यायकुसुमाञ्जलिः**, उदयनाचार्यः, काशीसंस्कृतग्रन्थमाला, ३०

**न्यायप्रकाशः**, आपदेवः हरिदाससंस्कृतग्रन्थमाला २५, वारणासी, १९२५

**न्यायभाष्यम्**, वात्स्यायन, काशीसंस्कृतग्रन्थमाला ४३, १९२०

**न्यायभूषणम्**, भासर्वज्ञः, षडदर्शनग्रन्थप्रकाशन प्रतिष्ठानम् १, वारणासी

**न्यायमञ्जरी**, जयन्तभट्टः, चौखाम्भासंस्कृत ग्रन्थमाला १०६, वारणासी, १९३६

**न्यायरत्नम्**, मणिकण्ठमिश्रः, मद्रास सर्वकारीय हस्तलिखित पुस्तकालयमाला १०४

**न्यायरत्नमाला**, पार्थसारथिमिश्रः, चौखाम्भा संस्कृतग्रन्थमाला ७, वारणासी, १९००

**न्यायरत्नाकरः**, पार्थसारथिसिश्रः, चौखाम्भा संस्कृतग्रन्थमाला ३, वारणासी, १८९१

**न्यायवार्तिकम्**, उद्योतकरः, बिब्लियोथिका इण्डिका ग्रन्थमाला ११३, कलकत्ता, १९१४

**न्यायवार्तिक तात्पर्यटीका**, वाचस्पतिमिश्रः, काशी संस्कृतग्रन्थमाला २४, १९२५

**न्यायवार्तिक तात्पर्यटीका परिशुद्धिः**, उदयनाचार्यः, कल्कत्तासंस्कृतग्रन्थमाला २२, १९३८

**न्यायसिद्धान्त तत्त्वामृतम्**, श्रीनिवासः, मद्रास सर्वकारीयप्राच्यहस्तलिखितग्रन्थमाला १९, १९५०

**न्यायसिद्धान्तमञ्जरी**, जानकीनाथ भट्टाचार्यः, पण्डित ग्रन्थमाला ३, वारणासी, १९१६

**न्यायसिद्धिः** –प्रकरणपञ्चिका व्याख्या, नारायणभट्टः, काशी हिन्दू विश्वविद्यालय दर्शनमाला, ४, १९६१

**न्यायसुधा**, सोमेश्वरभट्टः, चौखाम्भासंस्कृत ग्रन्थमाला १४, १९०९

**न्यायसूत्रम्**, गौतमः, आनन्दाश्रम ग्रन्थावलिः ९१, पूना, १९२२

**प्रकरणपञ्चिका**, शालिकनाथः, वारणसी हिन्दू विश्वविद्यालयदर्शनमाला ४, १९६१

**प्रमाणलक्षणम्**, सर्वज्ञात्मा, केरलविश्वविद्यालयमाला ८, तिरुवनन्तपुरम्, १९७३

**प्रमाणवार्तिकम्**, धर्मकीर्तिः, बुद्धंभारती ग्रन्थमाला ३, १९६८

**प्राभाकरविजयः**, नन्दीश्वरः, संस्कृत साहित्य परिषद् ग्रन्थमाला ११, कल्कत्ता

**प्रमाण पारायणम्**, शालिकनाथः, काशी हिन्दू विश्व विद्यालय दर्शनमाला ४, १९६१

**प्राच्यभाषा संमेलनपत्रिका**, पञ्चमो भागः, १९२८

**बृहती**, प्रभाकरमिश्रः, मद्रासविश्वविद्यालय संस्कृतग्रन्थमाला २४, १९६२

**बालप्रकाशः**, शङ्करभट्टः, चौखाम्भा संस्कृत मुद्रणालयः, वारणासी, १९०२

**बृहदारण्यकोपनिषद्**, आनन्दाश्रम ग्रन्थमाला १५, पूना, १८९१

**बोधायन धर्मसूत्रम्**, बोधायनः, काशी संस्कृत ग्रन्थमाला १०४, १९३४

**भाट्टचिन्तामणिः**, वाञ्छेश्वर यज्वा, मद्रास, १९३४

**भाट्टचिन्तामणिः**, गागाभट्ट, चौखाम्भा संस्कृतमाला ६, १९३८

**भामती**, वाचस्पतिमिश्रः, निर्णय सागर पुस्तकालयः, बम्बई, १९०९

**भावना विवेकः**, मण्डन मिश्रः, सरस्वती भवन ग्रन्थमाला ६, वारणासी, १९२२

**मनुस्मृतिः**, चौखाम्भा संस्कृतमाला ७१, १९४९

**महाभाष्यम्**, पतञ्जलि, निर्णयसागर पुस्तकमाला १९१२, आनन्दाश्रममाला १०८, १९३८

**मानमेयोदय:**, नारायणसुधी:, अडयार पुस्तकालयमाला १०५, १९७५

**मानरत्नावली**, अज्ञातकर्तृनामायं ग्रन्थ:, अमुद्रित:, मद्रपुरीसर्वकारीय हस्तलिखित-पुस्तकालये ३७४७ विद्यते

**मीमांसाकौस्तुभम्**, खण्डदेव:, चौखाम्भासंस्कृतमाला ५८, १९३१

**मीमांसानुक्रमणिका**, मण्डनमिश्र:, चौखाम्भासंस्कृतमाला ६८, १९३०

**मुक्तावली**, विश्वनाथ पञ्चानन:, काशीसंस्कृत ग्रन्थमाला २१२, १९८३

**लघुमञ्जूषा**, नागेशभट्ट:, काशीसंस्कृत ग्रन्थमाला १६३, १९७३

**लघुशब्देन्दुशेखर:**, नागेशभट्ट:, काशीसंस्कृत ग्रन्थमाला २७, १९५४

**वात्स्यायनभाष्यम्**, काशी संस्कृत ग्रन्थमाला ४३, १९२०

**विधिरसायनम्**, अप्पय्यदीक्षित:, काशीसंस्कृत ग्रन्थमाला १३, १९०१

**विधिविवेक:**, मण्डनमिश्र:, पण्डित ग्रन्थमाला ६, काशी, १९०७

**वेदान्तकल्पलतिका**, मधुसूदनसरस्वती, भण्ढरकार प्राच्यानुसन्धनसमिति (BORI), १९६२

**शक्तिवाद-माधवीय व्याख्या**, माधवभट्ट:, काशी संस्कृत ग्रन्थमाला ५७, १९२७

**शब्दशक्तिप्रकाशिका**, जगदीश भट्टाचार्य:, काशी संस्कृतग्रन्थमाला १०९, १९३४

**शाङ्खायन श्रौतसूत्राणि**, बिब्लियोथिका इण्डिका माला ९९, कल्कत्ता, १८९७

**शाबर भाष्यम्**, शबरस्वामी, गैक्वाड प्राच्य ग्रन्थमाला ६६, १९३३

**शास्त्रदीपिका**, पार्थसारथिमिश्र:, काशी संस्कृत ग्रन्थमाला ४३, १९१६

**श्लोकवार्तिकम्**, कुमारिल भट्ट:, मद्रास विस्वविद्यालय संस्कृत ग्रन्थमाला १३, १९७१

**श्लोकवार्तिकव्याख्या-काशिका**, सुचरित मिश्र:, तिरुवनन्तपुरम् संस्कृतमाला, १९२६

**श्लोकवार्तिकव्याख्या-तात्पर्यटीका**, उंवेकभट्ट, मद्रपुरीविश्व विद्यालय संस्कृतमाला १३, १९७१

**सर्वदर्शनकौमुदी**, मधवसरस्वती, तिरुवनन्तपुरसंस्कृतमाला १३५, १९३८

**सायणभाष्यम्**, सायणाचार्यः।

**सुजाबालोपनिषद्**, निर्णयसागरपुस्तकालय, १९२५

विभिन्न हस्तलिखित पुस्तकालयस्था अमुद्रिताश्च मीमांसाग्रन्थाः॥

Other ICPR titles

**Nāgārjunkrt Madhyamakaśāstra aur Vigrahavyāvartanī (in Hindi)**
YASHDEV SHALYA
Rs. 80

**Advaita-Siddhiḥ**
Translated with explanations by
KARUNA BHATTACHARYA
Rs. 125

**Cārvāka/Lokāyata:**
*An Anthology of Source Materials and Some Recent Studies*
edited by DEBIPRASAD CHATTOPADHYAYA
Rs. 250

**The Mahābhāsya of Patañjali**
SURENDRANATH DASGUPTA
Rs 160

**Gangeśa's Theory of Indeterminate Perception (Nirvikalpakavāda)**
Part One
SIBAJIBAN BHATTACHARYYA
*Forthcoming*

**Gaṅgeśa's Theory of Indeterminate Perception (Nirvikalpakavāda)**
Part Two
SIBAJIBAN BHATTACHARYYA
Rs 80

**Nyāyavārttikatātparyaṭīkā**
critically edited by
ANANTALAL THAKUR
Rs. 800

Rs 375
ISBN 81-85636-24-9

MIMAMSAMANJARI

SARMA

icpr